शान्तमूर्तिपन्यासश्रीहर्षमुनिगुरुभ्यो नमः

ॐ

शेठ श्रीखेमचन्द लालजी जैन ग्रन्थ माला

( १ )

श्रीहेमविजयगणिविरचितं ।

# पार्श्वनाथचरितम्

बलदाणाग्रामनिवासिश्राद्धगणमुकुटायमानश्रेष्ठिवर्य्यछगनलाल-
तनुजनुषा न्याय-व्याकरणतीर्थपण्डित-

## बेलसिंहेन

संशोधितम् ।

तच्च

## वाराणस्यां

मोहमयीवास्तव्यदानवीरश्रेष्ठिवर्य्यपन्नालालात्मजचुन्नीलाल-
पत्नीभीखीबाई साहाय्येन ज्यार्जनामधेययन्त्रालये
मुद्रयित्वा प्राकट्यं नीतं

॥ हर्षपरिषदा ॥

वीरसंवत् २४४२ विक्रम सं. १९७२ सन् १९१६

*Muni Shri Mohanlalji Jain Granthmala No. I.*

# PARSHWANATH CHARITA

BY

## SHRI HEMVIJAI GANI

EDITED BY

**Pt. Velsingha Nyaya Vyakaran Tirth,**

UNDER THE PATRONAGE OF

**Bhikhi Bai widow of Chunni Lal son of Panna Lal**

OF

**BOMBAY.**

PUBLISHED BY HARSH PARISHAD,

**BENARES.**

Veer-Era 2442

अर्हम्

# श्रीयुतमान्यवरश्रेष्ठिचुन्नीलालपन्नालाल



पात्रेभ्यो दानदातुः सुमधुरवचसो नीतिमार्गानुगस्य
मान्यस्य मानयोग्यैः सकरुणमनसो जैनधर्माग्रगस्य ।
कृष्णत्वाद् यद् विमुच्य स्वपतिमधुरिपु श्रीवृतत्वादमुष्य
दूरं रुष्टा दिगन्तं समगमदचिराद् भामिनी कीर्तिरूपा ॥१॥

(N P V C)

जन्म १९०५ विक्रमाब्द-
वैशाखकृष्णतृतीयायाम्,

निर्याणम् १९५९ विक्रमाब्द-
ज्येष्ठशुक्लपौर्णमास्याम्

S L. N Press, Benares

# प्रस्तावः ।

कः खल्वहमप्यस्मि कश्चन पुरुष इति पुरुषत्वाभिमानी परमार्हतीभूय मानधराधरसमास्फोटितचारित्रपोतम्, मायाभामिनीभ्रकुटीभङ्गभेषिणमकरीदुराटोपपुच्छच्छटोच्छालितयमादिशीकरान्धकारितज्ञानेक्षणकाष्ठम्, इतस्ततः परिसर्पदुल्वणज्वालाजालजटिलक्रोधव्यालसंदष्टानेकप्राणधारकरम्बितम्, दुःख-लोलुपाऽहंकृतिप्रचण्डावर्तदुरावगाहम्, दुर्योधलोभनक्रचक्रभीषणम्, जीवाजीवादिद्रव्यपर्यायपाथस्तरङ्गप्रकरप्रपूरितम्, संसृतिपारावारं समुत्तितीर्षुः संवुभुक्षुश्चानन्तचतुष्टयानन्दम्, कारिकामशेषक्लेशविच्छेदनस्य, दारिका भवसन्ततेः, विधायिनीं निःशेषदोषमोषस्य, दर्शयित्रीं पारमार्थिकपथस्य, आविभ्रतीं निःसर्गसौन्दर्यम्, अद्भुतां रसैः, परमपवित्रां कालदोषतः कीटैरुपभुज्यमानामन्धतमसे निपतितां मातरमिव जैनीं भारतीं समुद्धर्तुं न यतेत ? । एवं च वृन्दिष्ठानां पन्यासपदधारिणाम्, प्रवाहाना करुणारसस्य, तीर्थाना चातुर्वैद्यानाम्, रोहणाचलानां गुणगणरत्ननिकरस्य, उद्धारकाणां भव्यजनस्य, प्रेष्ठानां मुनिजनलक्ष्मीकस्य विश्वजनीनवृत्तीनां गुरुगुरूणा तत्रभवतां **पन्यासश्रीहर्षमुनीन्द्राणां** प्रशिष्यः शिष्यश्च विदुषां श्रीमतां **जयमुनिमहाराजानां** सिद्धहेमव्याकरणपारदृश्वा चारित्रपात्रं शान्तात्मा संसारान्धकूपपातिकाभिर्निःसीमलोभवृत्तिभिर्धनादेरदातॄन् शमशीलादिजुषान् मुनिमतल्लिकान् निन्दयद्भिर्दातॄंश्चोन्मार्गगामिनः प्रत्यक्षतो दृश्यमानदोषान् प्रशंसयद्भिर्मातुरुद्धारेऽपि संसारपरम्परावर्धकं वैरमाभेजानैः पिशाचीयमहत्त्वाकाङ्क्षामात्रेण स्वमातरमिवार्हतीं ब्राह्मीं निष्ठुरं विध्वंसयद्भिर्महापुरुषैर्विघ्नसहस्रैः प्रतिहन्यमानोऽपि "विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति" इमां जनविश्रुतां श्रुतिं सत्यत्वेन प्रतिष्ठापयन् "न जातु कामाद् न भयाद् न लोभाद् । धर्मं त्यज्येज् जीवितस्यापि हेतोः" इति वैदीं वाचमनुरुन्धानश्च 'येन केनाऽपि मार्गेण जैनं प्रवचनं भजेत्' इत्यभियुक्तोक्तिं संमत्य तत्र

भवान् विद्वद्वर्यप्रतापमुनिःनैककार्यक्षमां श्रीहर्षपरिषदं प्रतिष्ठाप्यतत्र प्रथमं ग्रन्थोद्धारधूर्वहां "मुनिश्रीमोहनलालजीजैनग्रन्थमाला" इतिनाम्नीं संस्था संस्थाप्यादौ च श्रेष्ठिवर्यपन्नालालतनूजनुपस्तत्रभवतः श्राद्धकुलभूषणस्य देवभूयं गतस्य श्रेष्ठिश्रीचुन्नीलालस्य निपीतार्हत-तत्त्वाभिः परमश्राविकाभिः श्रीमतीभिः " भीखी " इत्यन्वर्थां वर्ण-मालां पावयन्तीभिः पत्नीभिः साहाय्यं समुपलभ्य स्वगुरुं संस्थासंस्था-पकत्वेन प्रसिद्ध्य ग्रन्थं च पार्श्वनाथचरितनामानं प्रकटय्य प्रसिद्धि-मनीनयत् ।

एतस्याश्च प्रथमाङ्कभूतस्य मृद्वीकास्येवाखण्डानन्दपीयूषसन्दोह-वर्षिणो योगिजनचित्तवृत्तेरिव स्वभावसरलस्य वास्ये रचितस्याप्यहम-हमिकया बालपीयूषदीधितिदर्शनस्य श्रीपार्श्वनाथचरितस्य ग्रन्थितारः कुन्देन्दुकिरणहरहासधवलकीर्तयोऽनवद्यचातुर्वैद्यवैशारद्यहुंकारतर्जिता-गण्यतीर्थान्तरीयविद्वद्वृन्दाः तपागच्छगगनाङ्गणहेलयः श्रीहेमविजय-गणयः कदा कियतीं च मेदिनीमण्डलीं मण्डयामासिवांस इति बुभुत्समा-नानां जिज्ञासामपनोदयितुं स्वयमेव कविकुञ्जराः स्वकृतग्रन्थोपनिबद्धैस्तै-स्तैरुल्लेखैः समसूसुचन् सप्तदशशताब्दिरूपं स्वसत्तासमयम्, तथाहि— अस्मिंश्चरित्रे—

"दृक्-कृशानु-रस-सोममितेऽब्दे शाकमन्त्रिणि दिने जयसञ्ज्ञे
हस्तभे च बहुलेतरपक्षे फाल्गुनस्य, चरितं व्यरचीदम्" ॥

कथारत्नाकरेऽपि—

"अहिमदनगरद्रङ्गे वर्षेऽश्वे-षु-रसा-ऽवनौ ।
मूलमार्तण्डसंयोगे चतुर्दश्यां शुचौ शुचेः" ॥

श्रीऋषभशतके च—

"श्रीहीरहीरविजयव्रतिराजपट्ट-
पद्मांशुमद्विजयसेनमुनीन्द्रराज्ये ।
श्रीस्तम्भतीर्थनगरे रस-बाण-भूप-
वर्षे समाप्तिमगमच्छतकं सदर्थम्" ॥

विहायेममन्यानपि विजयप्रशस्तेः षोडशसर्गी, कथारत्नाकरः, कीर्तिकल्लोलिनी, अन्योक्तिमहोदधिः, सूक्तरत्नावली, विजयप्रकाशः स्तुतित्रिदशतरङ्गिणी, कस्तुरीप्रकरः, सद्भावशतकम्, विजयस्तुतय इतिप्रभृतीन् नैकान् ग्रन्थानुपन्यमान्सुधैरनन्यसाधारणान्यान्यग्रन्थग्रन्थनशक्तिः प्रखरप्रतिभाप्रकर्षश्च सुस्पष्टमनुमातुं शक्यते । अधिरोहयन्ति चैतत् प्रामाण्यकोटौ श्रीगुणविजयगणीनां वचःसन्दोहाः, तथा च विजयप्रशस्तेष्टीकाप्रशस्तौ—

"अथो बृहद्गुरोः शिष्यो गुरोश्च गुरुसोदरः ।
श्रीहेमविजयोऽभिज्ञो जज्ञे कविषु कुञ्जरः ॥४७॥
श्रीहेमसुकवेस्तस्य हेमसूरेरिवाभवत् ।
वाग्लालित्यं तथा देवे गुरौ भक्तिश्च भूयसी ॥४८॥
यदीया कविता कान्ता न केषां कौतुकावहा ? ।
विनापि हि रजो यस्माद् यशःसुतमसूत या ॥४९॥
तेन श्रीविजयसेनसूरेः सर्वज्ञचित्तहृत् ।
स्वर्गकल्लोलिनीतुल्या कीर्तिकल्लोलिनी कृता ।५०।
अन्येऽपि स्तुतित्रिदशतरङ्गिण्यादयो घनाः ।
रचयांचक्रिरे ग्रन्थाः स्तोत्राणि शतशः पुनः ॥५१॥
चतुर्विंशत्यर्हतां च, विजयस्तुतयः पुनः ।
बाल्येऽप्यबालधीगम्यं श्रीपार्श्वचरितं महत् ॥५२॥
शाद्भावशतकं चापि कस्तूरीप्रकरः पुनः ।
सूक्तरत्नावलिश्चाप्यन्योक्तिमुक्तामहोदधिः ॥५३॥
चक्रे वक्रेतरो येन कथारत्नाकरः स्फुरन् ।
व्याख्यापीयूषलुब्धानां विबुधानां मनो हरन् ॥५४॥
इत्यादिग्रन्थविधौ सौधे कलशाधिरोपणसवर्णम् ।
विजयप्रशस्तिकाव्यं तेन कृतं विजयसेनगुरोः॥५५॥

१ एभि श्रीगुणविजयगणिभि श्रीहेमविजयगणे विजयप्रशस्त्या षोडशसर्गीनिर्माणान्तरं दैवीं गतिमुपलम्भितत्वादवशिष्टं सर्गपञ्चकं निर्माय सम्पूर्णिता विजयप्रशस्ति, तस्या अन्येषां च हेमविजयगणिकृतग्रन्थाना विजयप्रकाशादीना टीका अपि कृता विलोक्यन्ते ।

अविकृतमत्र क्रोधसरीसृपे जाङ्गुलीमन्त्रायमाणस्य रागाटविदहने दावानलस्य विषयवासनावासमहीरुहोन्मूलने गजेन्द्रतामादधानस्योद्घृतबालतपःप्रभावशठकमठज्वालितोल्बणज्वालज्वालाजिह्वज्वालादग्धाङ्गभुजङ्गस्यावधूय तृणवत् साम्राज्यलक्ष्मीं निर्जित्य मोहमहीपतिचक्रव्यूहं शुक्लध्यानाशुशुक्षणिनिर्दग्धनिःशेषक्लेशमूलस्य पारमार्थिक धर्ममजानानैरतिभीषणेऽनाद्यनन्तागाधसंसृतिसरित्पतौ मज्जनोन्मज्जनैर्विह्वलीभवद्भिः प्राकृतप्रायैर्जनैर्देवधिया पूजितैरपीन्द्रादिभिर्भक्तिभरेणाहमहमिकया सेव्यमानचरणद्वन्द्वस्य विहारवातनिर्वारितेत्यादिरजःसमूहस्य त्रयोविंशतीर्थकरस्य निःसीमकरुणापरस्य श्रीपार्श्वनाथस्याऽऽबोधिबीजं दशभव्याः-यावन् मोक्षं चरितम् । व्यावर्णित सुधासहोदररसधारानिःस्यन्दिभिः सुसंगतवाक्यसन्दोहैः सद्-लङ्कृतीनि पद्यानि सर्गबन्धेनोपनिबध्नाद्भिः कविवरैर्नग–नगराऽऽर्णवनायकादिवर्णनीयनिकुरम्बव्यावर्णनेन यथामहाकाव्यस्वरूपम् । यद्यपि

सर्गबन्धो महकाव्यमुच्यते तस्य लक्षणम् ।
आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम् ॥१॥
इतिहासतथोद्भूतमितरद्वा सदाश्रयम् ।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम् ॥२॥
नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।
उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥३॥
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रिदूतप्रयाणाजिनायकाभ्युदयैरपि ॥४॥
अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः ॥५॥
सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम् ।
काव्यं कल्पान्तरस्थायि जायेत सदलंकृति"॥६॥ इति

महाकाव्यलक्षणैर्लक्षितत्वेऽपि कर्तृभिरस्य कुत्रापि महाकाव्यत्वेनोल्लेखाभावे प्रथमे वयसि विहितत्वं कृतेश्च प्राथमिकत्वमन्तरेण नान्यत्

किञ्चिद् निमित्तमुत्पश्याम: । न च सर्वत्र सर्गान्ते लेखकविस्मृतिरभिधातुं योग्या, संशीतेरनिवार्यप्रसरत्वाद्-लेखकस्य विस्मरणमुताहो ग्रन्थकारस्यानभिधानमिति । न चैवं तथा चोभयमप्यसिद्धम्, सर्वत्र विस्मरणस्याकल्पनीयत्वेनोत्तरकल्पनायां बाधकोन्मूलनाद्-बाधकस्य-संशयस्य समूलकाषं कषणाद् । एषां कवीनां समीक्ष्य बुद्धिपाटवं गुरवो बाल्य एव गणिपदं समार्पिपन्निति वक्तुं सुशकम्, "बाल्येऽप्यबालधीगम्यम्" इत्यादिनाऽस्य बाल्ये विधानस्य ससिद्धेः सर्गान्ते च सर्वत्र हेमविजयगणिविरचित इत्यभिहितत्वाद् । यद्वा विद्योत्कर्षत्वात् पदस्य च भावित्वात् तदभावेऽपि स्वयमेव तत्सहितस्य स्वनामोल्लेखस्य सुकरत्वाद् गणिपदमाप्यैव तदुल्लेख इति निर्धारयितुं न शक्यते, दृश्यन्ते खलु विद्वांसो भाविनो भूतवदुपचारयन्तः स्वेन पदं प्रापयन्तश्च । केचिदिदानींतनीमेव तत्प्रणालीं मन्यमानाः जवनिकायोषायमाणाः निन्दयन्त्यर्वाचीनान् प्रशंसयन्ति च प्राचीनान् तद् बालिशप्रयोगप्रायमयुक्तम्, तदातनेष्वपि तत्कल्पनेन विपरीतविकल्पस्यापि शक्यत्वाद् । आयास्यति खलु तादृशः समयो यस्मिन्निदानींतनानामिदानीं प्राचीनानामिव सर्वं याथातथ्येनैव प्रतिभाविषयं नेष्यन्तीति, यथेदानींतनमसत्यमपि सत्यत्वकोटौ संगस्यते तथा प्राचीनमसत्यं सत्यत्वेन प्रतिभातीति किं न मन्यसे ? । न चैवं सर्वथैव चिरंतनेषु असत्यमेव सत्यत्वेनाधुना प्रतीतिविषयमेतीति निश्चेयम्, किं तर्हि ? यत्किञ्चित् प्राचीनं सर्वथा सत्यत्वेनावगमय्य पण्डितंमन्यत्वप्रसिद्धये सर्वथैवेदानींतनेष्वसत्याक्षेपो मन्दमत्यर्हः; योग्योऽदत्तमपि योग्यं पदं स्वस्मिन् स्वेन प्रयुञ्जीत न तं दोषार्हं विजानीयाः किं पुनः सुयोग्यं प्राप्तपदक स्वेन विद्ययैव वा । इमे हि गणयोऽनुगणिपदोपढौकनामिदं चरित जग्रन्थुरित्यपि नायुक्तियुक्तम् । यद्यप्यादिमत्त्वाद् व्याकरणच्छन्दोऽलङ्कृत्यादिविषया दोषा राहुरिव पीयूषदीधितिमिमं ग्रन्थ ग्रस्तवन्तस्तथापि तत्तन्नियमबाहुल्याद् न ते एकान्तेन सुदुरुद्धराः । यत्तु कचित् पादस्य सप्ताक्षरत्वं कचिच्च नवाक्षरत्वं तदवश्यं तत्कारणं सुज्ञानम् । सत्त्वेऽप्यल्पदोषस्य गुणबाहुल्या दाक्षिप्यन्ते वक्तृश्रोतृमानसानि । विषयानुक्रमश्चास्मिन्नेवम्

## प्रथमे सर्गे।

मङ्गलाचरणं सज्जनदुर्जनप्रशंसानिन्दे ग्रन्थप्रयोजनं च। जम्बूद्वीपे भरतक्षेत्रे पोतनाभिधे पुरे अरविन्दनाम्नो राज्ञः, तत्प्रियाया धारिण्याः, तन्नगरस्थानुद्धराभार्यासहितस्य विश्वभूतेः पुरोहितस्य, पापपुण्यरतयोः वरुणा-वसुन्धरापत्नीकयोः कमठ-मरुभूतिनाम्नोः पुरोहितपुत्रयोश्च वर्णनम्। सस्त्रीकस्य विश्वभूतेः स्वर्गप्राप्तेः, कमठ-मरुभूत्योः शोकस्य, हरिश्चन्द्रमुनेरागमस्य, पितृशोकापनोदाय तत्र यातयोस्तयोः मरुभूतेर्मुनिदेशनया श्राद्धधर्मादानस्य च कथनम्। समीक्ष्य मरुभूतिं विषयोन्मुखं तत्पत्न्या रागदृष्ट्या स्वदेवरस्य निभालनस्य, तयोः परस्परानुरागस्य, कमठवधूतः मरुभूतेस्तयोर्दुर्ललितश्रावणस्य, कृतग्रामान्तरव्याजेनान्यथाकृतनेपथ्येन मरुभूतिनागत्य शायितुं भूमिं याचयित्वा व्याजनिद्रया सुप्त्वा कामोचितनेपथ्यमाबिभ्रतीं कमठेन सह संगतां निरीक्ष्य स्वभामिनीं प्रातःकाले क्रोधेन राज्ञो निवेदनस्य च व्यावर्णनम्। राज्ञा निगृह्य ग्रामं परिभ्रमय्य च निर्वासितस्य कमठस्य स्वभ्रातरि शत्रुत्वेन स्वीकारस्य, कमठस्य तापसाश्रमयानस्य, तापसैस्तत्सान्त्वनस्य, कमठप्रार्थनया तापसव्रतार्पणस्य, कमठव्रतपालनविधेः, मरुभूतेः स्वमन्तुक्षमणाय तत्रायनस्य, तं दृष्ट्वा क्रोधवृद्धेः नमस्क्रियां कुर्वाणस्य मरुभूतेरुपरि शिलामापात्य कमठेन घातस्य, तदानीं विस्मृतत्वात् नमस्कारमन्त्रस्य मरुभूतेर्हस्तिभवप्राप्तेश्च ज्ञापनम्। तस्य हस्तिनो विन्ध्याद्रौ विहारैर्वासरव्ययम्, वरुणायास्तस्यैव प्रेयसीत्वेन भवनम्, शरत्कालम्, अरविन्दराजस्य पञ्चविधाब्ददर्शनेन स्मयम्, मेघस्य तदानीमेव द्रवितत्वात् तत्क्षणिकं विलोक्य तद्वत् संसारस्यानित्यताभावनां च निर्वर्ण्य पुत्रं राज्ये न्यस्यारविन्दराजस्य दीक्षाग्रहणम्, सागरदत्तसार्थेशसार्थेन संमेतादौ यानम्, पथि सागरेण पृष्टस्य राजर्षेः संमेताष्टपदस्थदेवस्वरूपस्य तत्तीर्थोत्पत्तिबीजस्य च सविस्तरं कथनं निरूप्य मुन्युपदेशेन सागरस्य श्राद्धव्रतगृहीतेः, सार्थेशस्याटवीप्रापणस्य, तत्रस्थसरोवररामणीयकस्य, सर्वेषु तत्र निवासे जाते निःशङ्कं यथारुचि चेष्टत्सु सत्सु मरुभूतीभराजस्य तत्रागमनस्य, तत्स्नानवर्णनस्य, सार्थदर्शनसंजातक्रोधोद्धुरस्य हन्तुं धावनस्य, सर्वेषामितस्ततः पलायनस्य, ध्यानस्थमुनिमाक्रमय्य समीपीभूय हस्तीन्द्रस्य शान्तत्वेन भवनस्य, ज्ञातवृत्तान्तेन मुनिना पूर्वभवस्मारणस्य, प्रियापत्योर्हस्तिनो-

८

जातिस्मृतिजननस्य, पुनरुपदेशदानेन तयोर्धर्मप्राप्तेश्च वाचोयुक्तिः। शान्ते उपप्लवे सन्दश्य धर्मप्रभावं बहूनां व्रतादानस्य व्रतदार्ढ्यस्य च, अष्टापदं प्राप्य सर्वेषां यथास्थानगतेः, मरुभूतेस्तत्तद्धेतुजन्यैस्तैस्तैः परिषहैर्भावनापूर्वं विहृतेश्च वचनम्। कमठस्य मरुभूतिवधेन तापसेभ्यो लोकेभ्यश्च तिरस्कारस्य, आर्तध्यानेन मृतस्य कमठस्य कुर्कुटाहिभवप्राप्तेः, ग्रीष्मकालागतेरतितृषार्तस्य मरुभूतेर्हस्तिन एकस्मिन् सरोवरे निमग्नतायाः, तत्रागतेन कुर्कुटाहिना दष्टस्य पण्डितमृत्युना विपद्य मरुभूतेर्द्वितीयस्वर्गलाभस्य, देवशरीर-शृङ्गारवर्णनस्य, मरुभूतेर्जीवस्य देवत्वं प्राप्तस्य द्वाःस्थेन नामग्राहं स्ववर्णनं वाप्यादिदर्शनस्य, शय्योत्थायं प्रपठ्य पुस्तकं विधाय देवयात्रादिधार्मिकं कृत्यं मरुभूतेर्त्रिविधभोगासेवनस्य, कुर्कुटाहेः पञ्चमावनिगमनस्य, वरुणाया अपि मृत्वा द्वितीयसर्गं यातायाः परस्परानुरागेण देवेन सम्मेलनस्य, तयोरितस्ततो विलासस्य चोक्तिः।

## द्वितीये सर्गे।

पूर्वविदेहस्थसुकच्छविजयस्य वैताढ्यं भूधरम्, तत्स्थां तिलकां पुरीम्, तद्राजं विद्याधरं विद्युद्गतिनामानम्, विद्युद्गतिपत्नीं तिलकावतीं च वर्णयित्वा तिलकावतीकुक्षौ स्वर्गाद् मरुभूतिजीवस्य च्यवनम्, तज्जन्मोत्सवम्, किरणवेगेति नामविहितिम्, बाल्ये तल्लालनम्, यौवने पद्मावत्या सह विवाह्य राज्य समर्प्य विद्युद्गतेर्दीक्षास्वीकारम्, राज्यं विदधतः किरणवेगस्य किरणतेजोनाम्नः पुत्रस्योत्पत्तिम्, सुरगुरुनामकस्य गुरोरागतिम्, धर्मं श्रुत्वा किरणवेगस्य प्रव्रज्योपादानं च व्याकृत्य गीतार्थीभूय किरणवेगमहात्मनः पुष्करद्वीपस्य वैताढ्ये गतेः, कुर्कुटाहिजीवस्याप्युद्धृत्य नरकावनेस्तत्रैव सर्पभवनस्य, तत्सर्पदष्टस्य मुनेर्ध्यानपूर्वं पञ्चत्वमाप्य द्वादशे कल्पे यानस्य, यौवनालङ्कृतस्य च देवभवे समययापनस्य व्याहरणम्। दवाग्निदग्धस्य सरीसृपस्य धूमप्रभानाम्नि नरकावनौ यानम्, सुगन्धिविजयस्य शुभंकराया नगर्या वज्रवीर्यस्य राज्ञः लक्ष्मीवत्याश्च तत्प्रियायाः वर्णनम्, लक्ष्मीवतीगर्भे किरणवेगजीवस्य द्वादशात् स्वर्गादवतरणम्, तस्य वज्रनाभ इति नामकरणम्, बङ्गदेशीयचन्द्रकान्तराजस्य विजयाह्वया कन्यया चोद्वाहः, वज्रनाभमातुलपुत्रस्य नास्तिकस्य कुबेरस्योपवज्रनाभमायनं तस्य ऐहिकविषयोपदेशः, तच्छ्रुत्वा गुरोरागममिच्छोर्वज्रनाभस्य मौनम्, लोकचन्द्रगुरोरागतिं, उभयोर्वन्दितुं मुनिं यातिः, मुनेरनु-

पदेशं कुबेरस्यात्माद्यभावसाधनम्, गुरुणा च तत्प्रतिविधानम्, कुबेरस्य धर्मप्राप्ति, वज्रवीर्यस्य संसारत्यागः, वज्रनाभस्य राज्य-शासनम्, स्वीयपुत्रस्य चक्रायुधस्य राज्यं वितीर्य क्षेमंकरतीर्थकरा-न्तिके वज्रनाभस्य प्रव्रज्योररीकरणम्, नरकादागत्य सर्पजीवस्य भि-ल्लभवप्राप्तिः, तस्य भिल्लस्य मृगयां यात सम्मुखमागच्छतो मुनेर्द-र्शनादमङ्गलबुद्ध्या बाणप्रहारेण पीडाक्रान्तस्य वज्रनाभर्षेः शुक्ल-ध्यानेन मध्यग्रैवेयकगमनम्, कुरङ्गाह्वेन तेन भिल्लेन स्वबलप्रशंसनम्, भिल्लस्य सप्तमनरकावाप्तिः, वज्रनाभर्षेर्जीवस्य देवभवे कालाति-क्रमवर्णनं च ।

## तृतीयः सर्गः ।

जम्बूद्वीपस्य प्राग्विदेहस्थं सुरपुरनाम नगरम्, तन्नृपतिं वज्रबा-हुम्, तत्प्रियां सुदर्शनां च निर्वर्ण्य वज्रनाभजीवस्य चतुर्दशस्वप्नसूचितं सुदर्शनाकुक्षावतरणम्, स्वर्णबाहुरित्यभिधाविधानम् स्वर्णबाहोः शरीरा वयववर्णनम्, व्रत जिघृक्षुणा वज्रबाहुना स्वर्णबाहवे राज्यं गृहीतुं कथनम्, स्वर्णबाहवे सार्थेशेनाश्वोपढौकनम्, प्रतिकूलशिक्षितेनाश्वेन राज्ञो वेगाद् हरणम्, वल्गामोचनेन सप्तः स्थितिम्, सरोवरदर्शनम्, तत्र साश्वं स्नात्वा क्रीडाकाननं प्रविश्य विश्रम्य राज्ञो मुन्याश्रमं प्रति गमनम् नृपतेः दक्षिणचक्षुषः स्पन्दनम्, सखीकान्तादर्शनं, कान्ता-ङ्गवर्णनम्, राज्ञः कान्तामयत्वम्, कुमारिकायाः कङ्केल्लिसेचनव्यापृतिः, राज्ञो विचारः, सरोरुहभ्रान्त्या अभिमुखं समापतन्तं षट्पदं निवार-यितुमक्षमया कुमारिकया सख्यै त्राणयाचनम्, सख्या स्वर्णबाहुसृते-ऽन्यस्य त्राणाक्षमत्वकथनम्, श्रुत्वा तयोरग्रे स्वर्णबाहोः प्राकट्यम्, राज्ञा कल्याणादिप्रच्छनम्, सख्या राज्ञे निवेदनम् आतिथिमावेद्य राज्ञेऽर्घ्या-र्पणम्, सख्या कुलादिकं पृष्टेन राज्ञोत्तरकरण चोपवर्णितम् । राज्ञः कुमारिकाविषयकप्रश्नः, सख्या सविस्तरमुत्तरार्पणम्, राज्ञ सैन्य-स्यागमनम्, राज्ञस्ततोऽपसरणम्, कन्यां पद्मामादाय सख्या स्वस्थान-गमनम्, सख्या पद्मामातुलस्य गालवाख्यस्यर्षे राजागति-वार्तालाप-कथनम्, गालवस्य राजाग्रे गमनम्, आप्तसत्कारेण गालवेन स्व-स्वसुः पुत्र्याः पाणिग्रहणप्रार्थनम्, राज्ञा तत्स्वीकार, तत्र पद्मोत्तरस्य पद्माभ्रातुरायाति, वैताढ्ये गन्तुं प्रार्थनम्, कुलपत्यादिं प्रणिपत्य राज्ञस्तत्र गमनोद्योग, पद्मया मातुलस्य मातुश्च बाल्यकृतमन्तुक्षमा-प्रार्थनम्, तन्मातु. प्रतिवचनम्, नन्दया सख्या सह विमानारोहणम्, राज्ञो वैताढ्ये गति, तत्र राज्यप्राप्तिः, पुनः स्वनगरायातिः, पद्मया

सह क्रीडतो राज्ञ एकदाऽऽयुधशालायां चक्रोत्पत्तिः, तस्य स्नान-पूजन-स्तुतिविधानम्, राज्ञो जलविहारवर्णनम्, आभूषणाधारणम्, छत्र चामरादिशोभितस्य वर्यहस्त्यधिरोहणम्, ससैनिकस्य षट्खण्डसाधनाय प्रथमं पूर्वां दिशं प्रति गमनम्, अनुक्रमेण षट्खण्डीसाधनं नवानां निधीनां च प्राप्तिः, तदन्तश्च चतुर्दशानां चक्रिरत्नानां कार्यस्य, राज्ञो नैकराजैः सह युद्धस्य, पराभूतैस्तैस्तैः स्वीकृताज्ञकैर्विविधोपदादानस्य, चमूपतेस्तत्र तत्र युद्धपराक्रमस्य तदस्त्रभ्रयोश्च, निधेरुपयोगस्य च वर्णनम् । चक्रवर्तियोग्यसामग्रीसहितस्य स्वपुरागमनं तत्र च सुरासुरनरैः विज्ञप्तस्य राज्ञोऽभिषेकः, रत्नानां जन्मभूकथनम्, राज्ञाऽऽकाशे देवसमूहदर्शनम्, वनपालेन जिनागमकथनम्, वनपालस्य पारितोषिकदानं राज्ञो भावना च । जिनाग्रे राज्ञो गमनम्, भगवद् देशना, भगवत्पादपङ्कजभ्रमरायमाणान् देवान् समीक्ष्योहापोहेन राज्ञः पूर्वभवस्मृतिः, भावनापूर्वं तपस्यादानम्, स्वर्णबाहो राजर्षेर्हृषिकयन्त्रणपूर्वं संयमपालनम्, विंशतेः स्थानकानां वर्णनम्, सम्यगाराधितैर्विंशत्या स्थानकैः स्वर्णबाहुना तीर्थंकरपदोपार्जनम्, एकाकिनो विहर्तुर्मुनेराकाशमार्गेण क्षीरवणाख्यवने गमनम्, तत्र प्रतिमया स्थितस्य मुनेर्नरकाद् निःसृत्य प्राप्तसिंहभवेन कुरङ्गजीवेन सम्मुखं विलोक्य जातकोपाटोपेन घातः, मैत्रीनाम्नीं भावनां भावयतो मुनेर्विपद्य विंशत्यब्ध्यायुष्टया दशमे स्वर्गे उत्पत्तिः सिंहजीवस्य तुर्यनरकप्राप्तिः, स्वर्णबाहुजीवस्य देवभवोचितसुखेन कालनिर्गमश्च ।

## चतुर्थे सर्गे ।

जम्बूद्वीपे भरतक्षेत्रस्थानार्यदेशान् संख्याय, वाराणसीं नगरीम्, तद्भूपमश्वसेनम्, वामाख्यां च नृपपत्नीं सम्यग् व्यावर्ण्य वामाकुक्षौ स्वर्णबाहुजीवस्य चैत्रमासस्य कृष्णचतुर्थ्यामवतारम्, चतुर्दशस्वप्नीनिभालनम्, लब्धस्वप्नया वामादेव्या प्राणेशं गत्वा प्रोच्य स्वप्नान् फलं पृष्टेन राज्ञा स्वबुद्ध्यनुसारेण वचनम्, प्रातःकाले आकार्य स्वप्नपाठकानापृच्छ्य स्वप्नफलं वितीर्य तेभ्यश्च पारितोषिकं विसृष्टिम्, वसन्त-ग्रीष्म-वर्षा-शरद्-हेमन्तानामृतूनां लावण्यश्रियम्, तमस्विन्यां वामाया पार्श्वेऽहिदर्शनाद् राज्ञः पार्श्वनामकरणे संकल्पम्, पौषकृष्णदशम्यां भुजङ्गाङ्कस्य भगवतो जननं च व्याकृत्य भगवज्जन्मसमये आलोकान्तं प्रकाशस्य, नित्यदुःखवतां नारकाणामपि क्षणं सुखासिकायाः, पुष्पप्रकरवृष्टेश्च कथनम् । आसनकम्पेन विश्वासां दि-

क्कुमारीणां जन्मोत्सवायागति, स्वस्वकृतिविधानं च। सौधर्माधिपतेरासनकम्पेन कोप, ज्ञातयथार्थस्वरूपस्य देवेन्द्रस्य भगवतो नतिस्तुती जन्मोत्सवाय सकलदेवाह्वानं संभूय चैति., देवराजेन मातुः स्तुतिकरणम्, पञ्चरूपेण जिनस्य मेरूपरि नयनम्। अभिषेकसामग्रीणां कुम्भादीनाम्, अभिषेकस्य, धूपादिधारणविधेः, देवानां विविधचेष्टादेश्च वर्णनम्। इन्द्रकृता भागवती स्तुति', मातुरन्तिके भगवतो मोचनम्, नियुज्य धात्री आज्ञाप्य धनाधिपं भर्तुर्गृहे धनदानं दत्त्वा च कुण्डलादि देवैरन्यदेवेन्द्रैश्च सह सौधर्माधिपतेर्नन्दीश्वरद्वीपोत्सवकृतये गमनम्, अश्वसेननृपकृतमहोत्सव., स्थितिपतिका-पुष्पदन्तदर्शन-षष्ठिजागरण-भगवन्नामविधानानि च। बाल्यचेष्टा चतुरतिशयी-पांशुक्रीडा-शरीरावयव-जलकेलिव्यावर्णनम्। एकदाऽऽस्थान्यां राज्ञोऽन्तिके केनचिद् कुशस्थलनगरस्य तद्राजस्य प्रसेनजितः पार्श्वासक्तायास्तत्कन्यकायाश्च सविस्तरवर्णनपूर्वं तां कन्यां परिणेतुं यवनराजः समागत्यावरुध्य च पुरीं स्थित इत्यादिस्वागतिकारणज्ञापनम्। श्रुतवार्तेन तयोर्निग्रहानुग्रहाय जिगमिषुणा राज्ञा कारितभेरीभांकारं श्रुतिपथं प्राप्य तत्र पार्श्वागति। पार्श्वेन निषिध्य पितरं गत्वा स्वयं दूतप्रेषणम्, दूतोक्तिः, यवनराजप्रत्युक्तिः, दूतमारणायोद्यतानां मन्त्रिणा निषेधनं यवनराजस्य च प्रतिबोधः। यवनराजस्य स्वाम्यग्रे आगमनम्, क्षमाप्रार्थनम्, प्रभुणा चोपदेशार्पणम्। प्रभावत्याः पाणिग्रहणे प्रार्थितस्य प्रभोरमनने प्रभावतीमादाय प्रसेनजित भगवता सह काश्यां गमनम्। प्रवेशे नगरवर्णनम्, प्रसेनजित्प्रार्थनयाऽश्वसेनस्य प्रभोः पाणिग्रहणे प्रेरणम, प्रभोस्तं प्रत्युपदेशरूपा वाचोयुक्तिः, पितुराज्ञया पाणिग्रहणस्वीकृतिः, विवाहस्य सस्त्रीकस्य प्रभोर्विहारस्य च वर्णनम्।

## पञ्चमः सर्गः ।

सौधमूर्धस्थितेन प्रभुणा पूजासामग्रीसहितान् नगराद् बहिर्यातो जनान् विलोक्य पृष्टेन सेवकेन कमठवृत्तान्तकथनम्। प्रभोरित्वा तं विधाय वार्ता सर्वजनप्रतीत्यर्थं कमठज्वालितकाष्ठमध्याद् निःसार्य ज्वलन्तमहिं प्रश्राव्य सेवकमुखाद् महामन्त्रं संगमय्य च तं सर्पं धरणेन्द्रत्वं स्वभवनागमनम्। वसन्तागमः, तदानीमुद्यानगमनम्, उद्यानगृहभित्तिचित्रितनेमिचरित्रं समीक्ष्य प्रभोर्वैराग्योत्पत्ति., पत्य लोकान्तिकैः प्रतिबुद्धस्याप्याचारवशात् प्रतिबोधनम्, भगवद्भाव-

ना, वार्षिकदान-देवेन्द्रागमन-प्रव्रज्योत्सववर्णनम्, पौषकृष्णैकादश्यां दीक्षास्वीकारः, मनःपर्यायस्य चोत्पत्तिः । देवेन्द्रकृतस्तुतिः, नन्दीश्वरद्वीपे देवमहोत्सवः, प्रभोः कादम्बर्यामटव्यां गमनम्, तत्र कुञ्जरेन्द्रस्य निभाल्य प्रभुं जातिस्मृतिः, तत्पूर्वभववृत्तान्तं, हस्तिना प्रभोः पूजनं च । प्रभोरग्रे व्यन्तरविरचितनाट्यं समीक्ष्य वनवासिनां चम्पापुर्यां तद्राजाय करकण्डवे निवेदनम्, करकण्डोर्वन्दितुमागतिः, प्रभुमनालोक्य विलपते तस्मै धरणेन प्रतिमार्पणम्, राज्ञा च तत्र चैत्यविधानम् । प्रतिदिनदर्शनादुपार्जितपुण्यस्य हस्तिनो मृत्वा तत्राधिष्ठातृत्वेन भवनम्, तीर्थस्य च महाप्रभावख्यातिः । शिवापुर्यां स्मृतोपकारेण धरणेनागत्य प्रभोरुपरि छत्रधारणम्, ततश्चाहिच्छत्रेति तन्नगर्याः प्रसिद्धिः, राजपुरनरेश्वरस्य प्रभुं संदृश्य पूर्वभवस्मृतिः, स्व सेवकेभ्यः सविस्तरं पूर्वभवज्ञापनं च । कमठकृतोपसर्गस्य, तदानीं प्रियासहितस्य धरणेन्द्रस्य भक्तेः, धरणेन कमठस्य भापनस्य च वर्णनम् । कमठस्य प्रभोः पादयोर्निपत्य क्षमाप्रार्थनम्, प्रभोः कैवल्योत्पत्तिः, इन्द्रादेरागमनम्, समवसरणप्रतिष्ठितिः, सपरिवारस्याश्वसेनस्य वन्दितुमायनम् । तत्कृता स्तुतिः, दानादिचतुष्टय-जात्यादिविषयिणी प्राभवी देशना, अश्वसेनस्य वामाप्रभावत्योश्च व्रतग्रहणं च । सोमादिभिश्चतुर्भिर्दीक्षार्थं विज्ञप्तेन प्रभुणा तेभ्यः प्रव्रज्यार्पणं त्रिपदीदानं च । बलिप्रवेशः, सर्वैश्च यथायोग्यं तद्गृहीतिः, भगवतो देवच्छन्दे यातिः, गणभृतो देशना, तीर्थाधिष्ठातुः फणिपतेरधिष्ठाऽयाश्च पद्मावत्या वर्णनम्, प्रभोः प्रभावस्य च वर्णनम् ।

## षष्ठे सर्गे ।

पार्श्वनाथस्वामिनः पुण्ड्रदेशे विहृतिम्, सागरदत्तस्य कथानकं चोपवर्ण्य, कष्टसाध्यां संविग्नार्हतीं दीक्षां चतुर्णां भगवच्छिष्याणां बौद्धदर्शने यातिम्, अन्ते च पश्चातापं कुर्वतामभेदं च भगवताऽधिभ्रतां कैवल्यप्राप्तिम्, सविस्तरं बन्धुदत्तकथानकं तदन्तश्च श्रीधरकथां च व्याकृत्य प्रभोः परिवारस्य, सम्मेताद्रेः, तत्र च भगवतो ध्यानस्य, इन्द्रादेरागमनस्य, श्रावणशुक्लाष्टम्यां सह साधुपुङ्गवैः सिद्धिसौधाधिरोहणस्य, इन्द्रकृतविलापस्य, तनूदाहकर्मणः, भगवतो दंष्ट्राद्यादानस्य, स्तुतेश्च वर्णनमिति ।

एतन्मुद्रणे श्रेष्ठिवर्यश्रीचुन्नीलालो यो हि—

श्रीज्ञानशालाजिनभक्तिमुख्ये कार्ये वितीर्याघविनाशहेतुः ।
लक्षद्वयस्पर्शनमाप देवभूयं महात्मा व्ययया विराजः ॥ १ ॥

तत्पत्नी सुश्राविका श्रीखीमहोदया मुनिमहाराजश्रीप्रतापमुनीनामुपदेशेन ग्रन्थमालोपक्रमे एव व्ययसाहाय्यार्पणादतीवोपकारिणीत्वात् शतशो धन्यवादपात्रम् ।

अस्य पुस्तकस्यैका प्रतिः श्रीकुशलचन्द्रसूरिजैनभाण्डागारत उपलम्भिता, सा चानतिशुद्धा । एकेनैवानतिशुद्धादर्शपुस्तकेन यत्नतः संशोधितेऽस्मिन् ग्रन्थे दृष्टिदोषवशाद् यन्त्रस्खलनावशाच्च याः काश्चनाशुद्धयो दृष्टिपथमवतरेयुस्ताः कृपापराः सज्जना मेधाविनः संशोधयन्तु सफलयन्तु चास्माकीनं परिश्रममिति ।

मुनिश्रीमोहनलालजी-
जैनग्रन्थमालाकार्यालय,
रघुवीरसिंहप्रासाद सरस्वतीफाटक,
बनारस सिटी ।
श्रावणशुक्लाष्टमी

निवेदयते—
बेलसिंहः ।






श्रिये तत् परमं ज्योतिर्द्योतितारोपदिग्मुखम् ।
समस्तं वस्तु यद्भाजां हस्तन्यस्तमिवाजनि ॥ १ ॥
नमः श्रीनाभिभूपालकुलाकाशैकभास्वते ।
दर्शयामास यः स्वामी सन्मार्गं भानुमानिव ॥ २ ॥
सन्तु श्रीशान्तिनाथस्य शान्त्यै क्रमनखत्विषः ।
व्यभुर्या नमदिन्द्राणीभाले पत्रलता इव ॥ ३ ॥
कज्जलश्यामलच्छाय. श्रीशैवेयः शिवाय वः ।
अभवोऽपि हि यः पुष्पपत्रवाहमदीदहत् ॥ ४ ॥
वामेयाय नमस्तस्मै महामहिममालिने ।
कमठासुरविस्मेरस्मयापस्मारकारिणे ॥ ५ ॥
वायुनेव तरोः पत्रं चकम्पे काञ्चनाचलः ।
येनाङ्गुष्ठेन संस्पृष्टः स श्रीवीरः श्रियेऽस्तु वः ॥ ६ ॥
निर्वर्ण्यवर्णिनी वर्ण्यैर्पदन्यासा रसोऽङ्कुला ।
कुलाङ्गनेव सार्वज्ञी गौरवं गौस्तनोतु व. ॥ ७ ॥
जयन्ति गुरवो विश्वविश्वाविश्वाससंश्रया. ।
यत्प्रसत्तेरहं प्रापं विवर्णोऽपि सवर्णताम् ॥ ८ ॥
जयन्ति कवयः सर्वे सुरसार्थमहोदयाः ।
शिवाश्रया रसाधारा यद्गीर्गङ्गेव तापहृत् ॥ ९ ॥
शैतल्यमिव शीतांशौ भासुर्यमिव भास्करे ।
वात्सल्यं येषु ते सन्तु मयि सन्तः कृपालवः ॥ १० ॥

---

१ भव = ससार, पक्षे महादेव । २ कामदेवम् । ३ निर्वर्ण्या —मनोहरा ये वर्णा = अक्षराणि तद्वती, पक्षे निर्वर्ण्य.—रमणीयो यो वर्णं —अङ्गरागस्तद्वती । ४ पदम्-स्याद्यन्तत्याद्यन्तम्, श्लोकचतुर्थांशो वा, पक्षे पद = चरण ५ रसो वैराग्यात्मक, पक्षे शृंगारात्मकः । ६ विश्वविश्वा-सर्वंजगद्‌ । ७ शोभनै रसैरर्थैश्च महानुदयो येषा ते । ८ शिवम् = सुखम्, पक्षे जल कल्याण वा । ९ रस —शान्तनामा, पक्षे जलम् । १० ताप. = दु खम्, पक्षे उष्णत्वम् ।

समादायेव शीतांशोः खण्डं नलिनयोनिना ।
विदधे रसना येषां ते सन्तः सन्तु शर्मणे ॥ ११ ॥
चन्दनेन्दुकलाकुन्दमरन्दस्यन्दसुन्दराः ।
वाग्विलासाः सतां सन्तु जगदानन्दहेतवे ॥ १२ ॥
करोतु खलराड् राज्यं गुणिदूषणभूषणः ।
यद्भीत्या सावधानाः स्युः सन्तः सद्धर्मकर्मणि ॥ १३ ॥
द्विकककर्कशवाक्येऽपि विरञ्जयति दुर्जनः ।
भवेद् गोरसवृद्ध्यै यद् निःस्नेहोऽपि खलः खलु ॥ १४ ॥
दुर्जनो वन्दनीयोऽसौ यज्जिह्वा काव्यदीपिका ।
विना पाषाणखण्डं किं श्रीखण्डमहिमा भवेत् ? ॥ १५ ॥
प्रसन्ना यदि सन्तः स्युर्विश्वानुग्रहकारिणः ।
किं खलैः खलु दुर्वृत्तैः काव्यरत्नाऽपरीक्षकैः ? ॥ १६ ॥
द्विजिह्वजिह्वैकज्वालाजिह्वज्वालासुतापितम् ।
काव्यस्वर्णं सतां कर्णभूषणौचित्यमर्हति ॥ १७ ॥
सच्चरित्रचमत्कारि रत्नाकरसमुद्भवम् ।
सद्दृष्टितुष्टिसंघातपरीक्षकपरीक्षितम् ॥ १८ ॥
खलजिह्वारया विद्धं तेजितं तद्वचोघनैः ।
काव्यरत्नमिदं भूयाद् विदुषां कण्ठभूषणम् ॥ १९ ॥ ( युग्मम् )
विषापहारविद्याया विषाणीव समन्ततः ।
महतां कीर्तनादेव गलन्त्येनांसि तत्क्षणात् ॥ २० ॥
महद्भ्योऽपि महान्तो येऽर्हन्तस्तत्कीर्तनाद् न किम् ।
चेत् पयःपानतस्तृष्णा याति किं नामृतस्य तत् ? ॥ २१ ॥
निबद्धानि प्रभोः पूर्वं सूरिभिर्भूरिभिर्यदि ।
चरित्राणीह भूरीणि स्वपरोपकृतेः कृते ॥ २२ ॥
तथापि स्वल्पबुद्धीनामुपकारकरं नृणाम् ।
सम्यक् सम्यक्त्वमाणिक्यावाप्तये चात्मनः पुनः ॥ २३ ॥
श्रोतृश्रोत्रेषु पीयूषवर्षि वर्षासखं मया ।
चरित्रं पार्श्वदेवस्य यथादृष्टं प्रकाश्यते ॥ २४ ॥ ( युग्मम् )
जम्बूद्वीपाभिधो द्वीपो वृत्तसंस्थानसंस्थितः ।
वृतोऽसंख्याम्बुधिद्वीपैः सेवकैरिव नायकः ॥ २५ ॥
वेष्टितः शुशुभे योऽत्र परितः क्षारवार्धिना ।

---

१ स्नेह —द्रवपदार्थो गोरसवृद्धिं करोत्ययं तु निःस्नेहोऽपीति विरोध , निःस्नेह.—प्रेमाभावत्, गोरसो वाक्रस इति परिहार ।

कुण्डलीकृतकायेन निधिः कुण्डलिना यथा ॥ २६ ॥
सहंसो भुवनान्तस्थो महाकन्दः परागवान् ।
ताराकारपृषद्रम्यो यत्र मेरुः पयोजति ॥ २७ ॥
तत्रास्ति भरतक्षेत्रं क्षेत्रभूरिव सम्पदाम् ।
आकर्णीकृतकोदण्डदण्डकाकृतिविस्तरम् ॥ २८ ॥
नानाऽऽराम गिरि-ग्रामाभिरामं भाति यद् भृशम् ।
मणिस्वर्णादिसम्पूर्णं स्वर्गखण्डमिव च्युतम् ॥ २९ ॥
भान्त्यखण्डानि खण्डानि यत्र पट्क्षोणिभूषणे ।
एकान्तसुषमत्वेनोत्पन्नाः षडरका इव ॥ ३० ॥
तत्राभूत् स्वःपुराकारं नगरं पोतनाभिधम् ।
सदारम्भैकसंभोगा यज्जनाः त्रिदशा इव ॥ ३१ ॥
भाति चन्द्रोपलैर्बद्धे कुट्टिमेऽलक्तरक्तिमा ।
स्त्रीपदन्यासजो यत्र रक्ताम्भोजमिवाम्भसि ॥ ३२ ॥
स्वर्णकुम्भा गृहेषूच्चैर्नवीनाऽरुणशोणिताः ।
स्वःस्त्रीवक्षोजसंस्पर्धावर्धितेर्ष्या इव व्यभुः ॥ ३३ ॥
तत्रारिवृन्दकन्दैककुद्दालोऽभूद् महीपतिः ।
अरविन्द इति ख्यातोऽरविन्दस्फारलोचनः ॥ ३४ ॥
छिद्स्त्रीणां साञ्जनैर्बाष्पैर्धौतं येन निजं यशः ।
नैर्मल्यं तदपि प्राप्तं काऽप्यहो ! अस्य वैदुषी ॥ ३५ ॥
यत्कृपाणप्रदीपैकशिखायां परिपन्थिनः ।
सर्वेऽपि परितः पेतुः पतङ्गा इव निष्त्रपाः ॥ ३६ ॥
तस्य राज्ञोऽभवद्राज्ञी धारिणी शीलधारिणी ।
पद्मानुकारिणी, यस्या वपुः श्रीर्श्च विपावने ॥ ३७ ॥
अभवद्भूपतस्तस्य विश्वभूतिः पुरोहितः ।
विश्वभूतिभृतः पूर्वदिक्पतेरिव वाक्पतिः ॥ ३८ ॥
निर्भरं यन्मनो जैनवाग्भिर्वासितमन्वहम् ।
कृमिरागैर्दुरुत्तारैर्वासःखण्डमिवाजनि ॥ ३९ ॥
मुरारातेरिव प्रीता यद्धामनि रमते रमा ।
सरस्वती मुखे यस्य हंसीव सरसीरुहे ॥ ४० ॥
सुररत्न-सुरद्रूणां सारमादाय वेधसा ।

---

१ हंस.=सूर्य., पक्षे तन्नामा पक्षी । २ भुवनम्=जलम्, पक्षे भूमण्डलम् । ३ कन्द=मेघ, पक्षे कमलदण्ड. । ४ पराग.=पुष्परज, तद्वान्, पक्षे परा.-उत्कृष्टा येऽगा.=पर्वतास्तद्वान् ।

याऽकारि, गतसारा हि ते तिरोदधिरेऽधुना ॥ ४१ ॥
तत्प्रियाऽनुद्धरा नाम धरेव क्षान्तिधारिणी ।
पतिचित्तानुगामिन्या ययाऽरञ्जि जगत्त्रयम् ॥ ४२ ॥
रूपसम्पत्पराभूतपुरुहूतनितम्बिनी ।
याऽभवद् भर्तुरानन्दकन्दकादम्बिनीनिभा ॥ ४३ ॥
रमणीयगुणागारावभूतां तनयौ तयोः ।
द्विधाविहितरूपः किं पञ्चेषुः किल कौतुकात् ? ॥ ४४ ॥
कमठोऽमरभूतिश्चेत्यनयोरभिधां पिता ।
स्थापयामास समयं मनोरथलतामिव ॥ ४५ ॥
क्रमेण वर्धमानौ तौ रूपस्पर्धितमन्मथौ ।
रेजतुर्वयसौन्दर्यावश्विनीनन्दनाविव ॥ ४६ ॥
कृताऽनल्पकलाभ्यासौ कुलोद्धारधुरन्धरौ ।
यौवनं पावनं विश्वभूतिपुत्राववापतुः ॥ ४७ ॥
कमठस्याऽभवद् भार्या वरुणा हरिणेक्षणा ।
दयिता मरुभूतेश्चाभवद् नाम्ना वसुन्धरा ॥ ४८ ॥
भुञ्जानौ भ्रातरावेतौ विषयान् विषयीप्सितान् ।
गेहिनीभ्यां समं स्वाभ्यां निन्यतुर्बहुवासरान् ॥ ४९ ॥
भुञ्जानौ भ्रातरावेतौ विषयान् विषयीप्सितान् ।
विश्वभूतिरमू वीक्ष्य वंशाधारधुरन्धरौ ।
पुत्रौ विरक्तो गार्हस्थ्याद् वीवधादिव भारवाड् ॥ ५० ॥
( सार्धश्लोकः )

ततश्च स स्ववंशस्य स्कन्धोद्धारणयोस्तयोः ।
भारमारोपयामास शकटं वृषयोरिव ॥ ५१ ॥
स्वयं मोहव्यपोहैकनिदानं दान्तमानसः ।
वैराग्यं प्राप्य मुमुदे दरिद्रीव धनागमे ॥ ५२ ॥
कषायविषयोत्तुङ्गशैलशैलारिसोदराम् ।
गुर्वन्तिके तपस्यां स विश्वभूतिरुपाददे ॥ ५३ ॥
विधायानशनं चान्ते नमस्कृतिस्मृति सृजन् ।
विश्वभूतिस्ततो मृत्वा सौधर्मे त्रिदशोऽजनि ॥ ५४ ॥
अनुद्धराऽपि स्वधवनिधनव्यथिताऽधिकम् ।
दुस्तपं च तपस्तेपे सतीनां यदसौ क्रमः ॥ ५५ ॥
तपःक्षामतनुर्दावानलप्लुष्टेव मालती ।

---

१ पुरुहूत = इन्द्र. ।

सा समाधिनिबद्धात्मा मृतिमापदनुद्धरा ॥ ५६ ॥
सुबाढं बाधितौ तौ च पित्रोर्विपत्तिशङ्कुना ।
विरेमतुर्न कथञ्चिच्छोकाद् युद्धादिव स्तभौ ॥ ५७ ॥
कृतौर्ध्वदेहिकौ तौ च गतशोकौ बभूवतुः ।
शोको हि महतां प्रातश्छायेव क्षितिभाग् भवेत् ॥ ५८ ॥
स्वकार्ये कार्यधौरेयौ सञ्जातौ सोद्यमाविमौ ।
अत्यवाहयतां कालं भूयांसं विश्वभूतिजौ ॥ ५९ ॥
कठिनः कमठस्याभूत् स्वभावस्तस्य सर्वदा ।
लोहस्याऽकारि काठिन्यं किं केनाऽपि कदाचन ? ॥ ६० ॥
नवनीतमिवात्यन्तं मरुभूतेर्मनो मृदु ।
स्वाभाविकी भवेद् नूनं मृदुता जलजन्मनि ॥ ६१ ॥
अन्येद्युस्तत्पुरोद्याने देवद्रुरिव जङ्गमः ।
हरिश्चन्द्रमुनिश्चन्द्ररुचिरम्यगुणोऽभ्यगात् ॥ ६२ ॥
तदाऽऽगमनपीयूषाऽऽसारसिक्तोऽथ पूर्जनः ।
तं नन्तुमगमत् प्रीत्योदञ्चद्रोमाञ्चकञ्चुकः ॥ ६३ ॥
सर्वेऽपि सप्रियाः पौरा साधुनाऽलङ्कृतां भुवम् ।
अभ्यगुर्मिथुनीभूता मराला इव मानसम् ॥ ६४ ॥
विश्वभूतिसुतावेतौ कौतुकोत्कण्ठिताशयौ ।
जग्मतुः शोकनाशार्थं निर्ग्रन्थमभिवन्दितुम् ॥ ६५ ॥
निषेदुस्तेऽथ सर्वेऽपि यथास्थानं पुरीजनाः ।
पश्यन्त साधुवदनं चकोरा इव चन्द्रिकाम् ॥ ६६ ॥
स्थितेषु तेषु सर्वेषु जनेषु करुणाकरः ।
प्रारेभे देशनां साधुः पयोवृष्टिमिवाम्बुदः ॥ ६७ ॥
स्याद्रत्नत्रयमेवेदं मिथ्यात्वध्वान्तधूसरे ।
संसारेऽत्र प्रकाशाय प्रदीप इव वर्त्मनि ॥ ६८ ॥
ज्ञान-दर्शन-चारित्ररूपं तत् कथितं जिनैः ।
सम्यगाराधितं दत्ते श्रियं स्वर्गापवर्गयोः ॥ ६९ ॥
जीवाजीवादितत्त्वानि यथोक्तानि जिनोत्तमैः ।
तथाववोधस्तेषां यस्तज्ज्ञानं सम्यगीरितम् ॥ ७० ॥
अर्हदुक्तेषु तत्त्वेषु यः समस्तेषु निर्णयः ।
दर्शनं तच्छिवश्रीणां प्रतिभूरिव देहिनाम् ॥ ७१ ॥
अहिंसा-ऽसत्य-निश्चौर्य-ब्रह्मा-ऽकिञ्चनतात्मकम् ।

---

१ स्तभौ=अजौ, मेषौ वा । २ कमले ।

सर्वतो देशतश्चैव चारित्रं द्विविधं मतम् ॥ ७२ ॥
सर्वतः सर्वसङ्गेभ्यो मुक्तेष्वेव तपस्विषु ।
मृगाणामाधिपत्यं हि मृगेन्द्रेष्वेव सर्वथा ॥ ७३ ॥
देशतस्तद् गृहस्थानां साधुधर्माभिलाषिणाम् ।
द्विधाऽप्याराधितं दत्ते मुक्तिश्रियमिदं नृणाम् ॥ ७४ ॥
रत्नत्रयमविश्राणा भ्रमन्ति भ्रान्तचेतसः ।
साधुसार्थपरिभ्रष्टा उत्पेथ्या इव संसृतौ ॥ ७५ ॥
भो ! भो ! भव्या ! विभाव्यैतदपुनर्भवलब्धये ।
सेव्यतामिदमारोग्यकृते पथ्यमिवानिशम् ॥ ७६ ॥
वाचं वाचंयमस्यैवमाकर्ण्याकर्ण्यवर्णिकाम् ।
मुदमापुर्जनाः सर्वे लब्धसर्वसुखा इव ॥ ७७ ॥
मरुभूतिर्महात्मा स श्रुत्वा धर्मं मुनेर्मुखात् ।
रुचिं चक्रे तमादातुं गृद्ध इवान्नभोजनम् ॥ ७८ ॥
मैत्र्यादिचश्चिते चित्ते मरुभूतेर्महामतेः ।
शुद्धधर्मः सुसम्बद्धः कृमिराग इवाम्बरे ॥ ७९ ॥
साधुधर्मं समादातुमक्षमः कमठानुजः ।
सम्यक् सम्यक्त्वमूलं तु श्राद्धधर्ममुपाददे ॥ ८० ॥
कठोरकमठस्यास्य दृषदीव हृदि स्फुटम् ।
अविशद् नैव साधूकधर्मोऽसौ प्रतिबिम्बवत् ॥ ८१ ॥
कमठः कठिनात्मा स नोकरीकृतवांस्तदा ।
पद्धतिं शुद्धधर्मस्य क्षैरेयीमिव सूकरः ॥ ८२ ॥
तदवस्थास्थितावेतौ ब्रजाते भ्रातरावुभौ ।
कदाचिदेकराशिस्थौ सौम्य-क्रूरग्रहाविव ॥ ८३ ॥
अनुज्ञाप्य मुनिं विश्वभूतिजौ भवनं निजम् ।
अनल्पाऽल्पाय-नीवीकौ वणिजाविव जग्मतुः ॥ ८४ ॥
पाठीनाविव पानीये निमग्नौ निर्भरं सुखे ।
कालं तौ निन्यतुर्विश्वभूतिजौ भूतिभासुरौ ॥ ८५ ॥
विरक्तो विषयग्रामे मरुभूतिः स नो रतिम् ।
पीतसुस्निग्धगोदुग्ध आरनाल इव व्यधात् ॥ ८६ ॥

---

१ उन्मुखा । २ आकर्ण्या —श्रोतव्या, वर्णाः—अक्षराणि सन्त्यस्या ताम् । ३ लोलुपः । ४ आदिशब्दात् प्रमोद-माध्यस्थ्य-करुणानां ग्रहः । ५ सौम्य —चन्द्रः । ६ बहुन्यूनलाभव्ययौ । ७ मत्स्यौ । ८ आरनालम्—काञ्जिकम्, 'कांजी' इति भाषायाम् ।

शरावमिव संवेगं वर्धयन् कमठानुजः ।
निर्मोकमिव निर्मोकी मुमोचासौ वसुन्धराम् ॥ ८७ ॥
भोगान् भोगानिवोद्वेगदायिनो जानताऽमुना ।
प्रकामं तत्यजे कामकथाऽपि मरुभूतिना ॥ ८८ ॥
तत्प्रिया साऽथ संवेगसंगतं वीक्ष्य वल्लभम् ।
मम्लावस्ताचलप्राप्तमिवादित्यं सरोजिनी ॥ ८९ ॥
अनीहिताऽमुना साथ सुभगेनेव दुर्भगा ।
प्रकामं कामबाणानां गोचरा समजायत ॥ ९० ॥
मरुभूतिप्रिया कामवशा देवरमात्मनः ।
अमारयत् कटाक्षैः स्वैः सायकैरिव मान्मथैः ॥ ९१॥
कमठोऽपि शठः शाठ्यनिष्ठुरस्तां न्यभालयत् ।
दृशा कन्दर्पदर्पैककन्दजीवातुतुल्यया ॥ ९२ ॥
मिथोऽथ मिलितावेतौ मनसा वचसा दृशा ।
ततस्तयोरभूत् प्रीती रति-मन्मथयोरिव ॥ ९३ ॥
ततस्तौ चक्रतुः कामक्रीडां निर्व्रीडचेतसौ ।
कामार्तानां कुतो लज्जा निर्विवेकाङ्गिनामिव ॥ ९४ ॥
दुष्टं तच्चेष्टितं स्पष्टं दृष्ट्वाऽथ कमठप्रिया ।
ईर्ष्यालु कथयामास समस्तं मरुभूतये ॥ ९५ ॥
कर्णाभ्यर्णोपसर्पद्भिर्मरुभूतेर्महात्मनः ।
ववृधे तद्वच-पूरैः कोपो वह्निरिवेन्धनैः ॥ ९६ ॥
स्वयं पश्याम्यहं स्पष्टं चेष्टितं दुष्टमेतयोः ।
अन्याये निश्चयीभूते दण्डः स्यात् तद्विधायिनाम् ॥ ९७ ॥
चेतस्येवं स निश्चित्य दिदृक्षुश्चरितं तयोः ।
कृतग्रामान्तरव्याजो निर्ययौ भ्रातुराज्ञया ॥ ९८ ॥
कियद्भूमिं च गत्वैष व्याजुघोट कुशाग्रधीः ।
सायं गौरिव वत्सोत्का स्वपुराभिमुखोऽभवत् ॥ ९९ ॥
अन्यथाकृतनेपथ्यस्तापसीभूय सोऽभ्यगात् ।
प्रदोषे भवनाभ्यर्णं स्वं नीडमिव नीडजः ॥ १०० ॥
विश्रामाय श्रमश्रान्तः प्रतिश्रयमयाचत ।
कमठं मरुभूतिश्च ( दिदृक्षुश्चरितं तयोः ? ) ॥ १०१ ॥
आकर्ण्यैतद्वचो वेश्मप्रदेशं सोऽभ्यदीदृशत् ।
कमठः कठिनोऽन्यस्मै वासाय मरुभूतये ॥ १०२ ॥

१ जीवातु—जीवनौषधम् । २ नेपथ्यम्-वेष. ।

शेते स्म मरुभूतिः स निर्व्याजो व्याजनिद्रया ।
सिद्धये निजकार्याणां व्याजोऽप्यव्याज एव हि ॥ १०३ ॥
मरुभूतिर्मीलिताक्षो निस्तन्द्रो व्याजतन्द्रया ।
शयान शयनेऽपश्यच्चरितं च तदेतयोः ॥ १०४ ॥
वसुन्धराऽथ तत्कान्ता कान्तं ग्रामान्तरं गतम् ।
विभाव्योद्भावयामास विशेषाद् भूपणादिकम् ॥ १०५ ॥
सस्ने तय.ऽथ सस्नेहं वारिणा गन्धहारिणा ।
हंस्येव प्रपतत्पद्मपरागकपिशैर्जलैः ॥ १०६ ॥
साऽञ्जनं क्षेपयामास नेत्रयो॰ स्फारतारयोः ।
रुद्रदृग्दग्धपञ्चेषोरिवोज्जीवनभेपजम् ॥ १०७ ॥
चक्रे च चान्दनं चित्रं विचित्रं चित्रकृच्चिरम् ।
कामभूपप्रकाशाय प्रदीपमिव साऽलिके ॥ १०८ ॥
सा स्तनौ मण्डयामास घुसृणाऽरुणवारिणा ।
कुम्भाविव मदोन्मादविहस्तस्मरहास्तिनः ॥ १०९ ॥
व्यधात् सा वदने पत्रलतां काश्मीरकश्मलाम् ।
जन्मपत्रीमिवानङ्गशिशोः सम्प्राप्तजन्मनः ॥ ११० ॥
विधाय व.धन धाढं सूत्रय मास साऽङ्किकां,म् ।
जगज्जेतुर्महानङ्गराज पटकुटीमिव ॥ १११ ॥
यथार्हं योजितानेकभूपणा सा वसुन्धरा ।
प्रत्यङ्गसङ्गतानङ्गसंसर्गेव व्यभात् तदा ॥ ११२ ॥
गतेऽथ मरुभूतौ स कमठोऽपि शठाशयः ।
गाढमुत्कण्ठते स्मास्यां रिरंसुः स्मरकिंकरः ॥ ११३ ॥
यथोचितकृतानल्पकल्पनो भूपणैर्घनै. ।
शुशुभे कमठ. सोऽपि स्मरस्येव सहोदरः ॥ ११४ ॥
ततस्तौ निर्भयं भावनिर्भरौ रहसि स्थितौ ।
रेमाते काममुद्दामकामयामिकबोधितौ ॥ ११५ ॥
तुलिकातल्पकोत्सङ्गसङ्गसङ्गतविग्रहौ ।
कुर्वाणौ क्षोरजै रक्तैः शय्यां विद्रुमितामिव ॥ ११६ ॥
कदाचिद् विरलीभूतौ लक्ष्मी-लक्ष्मीपती इव ।
एकीभूतौ कदाचिच्च गौरी-गौरीपती इव ॥ ११७ ॥

---

१ निष्कपट । २ ललाटे । ३ घुसृणम्=चन्दनम् । ४ विहस्त =व्याकुलो विगतशुण्डोवा ।
५ अङ्किका=कञ्चुक, 'काञ्चली' इति भाषायाम् ।

हास्यैरुल्लासितानङ्गविभ्रमौ शुभविभ्रमौ ।
चिरं चिक्रीडतुः कामकिङ्कराविव निस्त्रपौ ॥११८॥ (त्रिभिर्विशेषकम्)
वीक्ष्यैतच्चरितं तूर्णं चुकोप कमठानुजः ।
तिरश्चामपि दुस्सह्या पराभूतिः स्वयोषिताम् ॥ ११९ ॥
उत्पन्नानल्पसंकल्पः स दध्याविति धीनिधिः ।
अधुना नासहिष्येऽहं दुश्चरित्रमदोऽनयो॰ ॥ १२० ॥
तत् सर्वं संशयामास विशामीशाय स द्रुतम् ।
अन्यायैः परिभूतानां भूतानां भूपतिर्गतिः ॥ १२१ ॥
तद्वचोभिर्भुवो भर्तुः क्रोधो वृद्धिमुपेयिवान् ।
महारण्यप्रदेशस्य दावानल इवानिलैः ॥ १२२ ॥
कीनाश इव संक्रुद्ध॰ प्रचण्डैश्चण्डदण्डकृत् ।
दण्डपाशैः काश्यपीशः कमठं समजूहवत् ॥ १२३ ॥
तेऽपि गत्वा गृहे तस्य यमदूता इवापरे ।
ऊचिरे कमठं वाक्यै. कठोरैः कर्णदुःसहैः ॥ १२४ ॥
निवध्य बन्धनैः क्रुद्धैस्तैर्निन्येऽसौ नृपाग्रतः ।
तेषां तन्निग्रहायादादादेशं पार्थिवोऽपि हि ॥ १२५ ॥
यष्टि-मुष्टिप्रहारैस्ते निहत्य क्ष्मापपूरुषा ।
हठेनारोपयामासुः कमठं गर्दभोपरि ॥ १२६ ॥
भूयो भूयः परिभ्राम्य चत्वरे चत्वरे चिरात् ।
प्रकारैर्भूरिभिर्योगैर्विडम्ब्य च मुहुर्मुहुः ॥ १२७ ॥
ते भूपपुरुषा निन्युः कमठं पुरतः पुर. ।
अवध्य इति मुमुचे सजीवस्तैः कुकर्मकृत् ॥ १२८ ॥ ( युग्मम् )
तलारक्षादिलोकेषु गतेषु निखिलेष्वपि ।
क्लिष्टकर्ममयोऽचालीत् कमठः पापकर्मठः ॥ १२९ ॥
अत्यन्तविनतग्रीवः पापकर्मभरैरिव ।
अनाचाराञ्चलेनेव पाणिना पिहिताननः ॥ १३० ॥
मुञ्चन्नश्रूण्यविश्रामं निवापमिव सन्मतेः ।
प्रस्खलत्पदविन्यासो निबद्धो निगडैरिव ॥ १३१ ॥
गच्छन् दुर्ध्यानधरणीकमठः कमठस्ततः ।
ध्यातवानिति दौर्जन्यपर्जन्यगगनाङ्गण. ॥१३२॥
( त्रिभिर्विशेषकम् )

अथाहं सोदरादेव न्यपतं विपदाम्बुधौ ।
भ्रातृत्वेन समुत्पन्नः शत्रुरेव ममानुजः ॥ १३३ ॥

विपक्षमिव मन्वानो मरुभूतिं निजानुजम् ।
परिधानविमुक्तोऽथमद्यजात इवाभ्रमत् ॥ १३४ ॥
निर्विण्णः प्राणितव्येऽपि निर्दग्धः शोकवह्निना ।
निजापराधमुक्त्यर्थं यियासुस्तत्र सोऽजनि ।
भ्रमन्नितस्ततोऽरण्ये सोऽभ्यगात् तापसाश्रमम्॥१३५॥
( सार्धश्लोकः )
वद्रा इव जटावन्तोऽर्भका इव ( शुचेतसः ? )
कमठेनेक्षाञ्चक्रिरे तापसास्तापसाश्रमे ॥ १३६ ॥
पतद्बाष्पो लुलल्लालो भ्रमच्चक्षुः स्खलद्वचाः ।
सोऽवक् तेभ्यः स्वकं दुःखं रोगीव भेषजे रुजम् ॥ १३७ ॥
पापातिरेकादुद्वृत्तं नरकादिव नारकम् ।
कृमिकान्ततनुं श्वानमिव निन्द्यं पदे पदे ॥ १३८ ॥
वीक्ष्य तं तादृगाकारं दुराचारमिवापरम् ।
मरुभूत्यग्रजन्मानमभ्यधुस्तेऽथ तापसाः ॥ १३९ ॥ ( युग्मम् )
भो ! भद्राभद्रभूमानं मा कार्षीः खेदमीदृशम् ।
जीवैः क्षीवैरिवावश्यं कृतं कर्मोपभुज्यते ॥ १४० ॥
भ्रमद्भिर्भवकान्तारे जीवैर्भ्रान्तनरैरिव ।
कर्मणः फलमासाद्यं स्वयमुप्ततरोरिव ॥ १४१ ॥
आकर्ण्यैवं च तद्वाचं दुःखवैराग्यभागसौ ।
अभ्यधाद् मूर्ध्नि विन्यस्तहस्तस्तांस्तापसानिति ॥ १४२ ॥
चेत् समस्तेषु सत्त्वेषु भगवन्तः कृपापराः ।
मह्यं तथापि ददतु भवन्तस्तापसव्रतम् ॥ १४३ ॥
अवगम्यैनं प्रशान्तं भस्माच्छन्नमिवानलम् ।
शैवतापसदीक्षां ते ददुस्तस्य शठात्मनः ॥ १४४ ॥
तद्व्रतादानतस्तुष्टः पटिष्ठः पापकर्मणि ।
अन्वष्ठात् कष्टमज्ञानं तादृशां सन्मतिः कुतः ? ॥ १४५ ॥
मरुभूतौ स्मरन् वैरमस्मरन् कृत्यमात्मनः ।
दुस्तपं स तपस्तेपे कन्द-मूल-फलाशनः॥ १४६ ॥
इतश्चैनां दशां वीक्ष्य कमठस्यातिनिष्ठुराम् ।
मरुभूतेरभूत् पीडा सव्रीडानां शिरोमणेः ॥ १४७ ॥
क्षणे क्षणे स्मरन् स्वान्ते वृत्तान्तं भ्रातुरात्मनः ।
न क्वापि रतिभाक् सोऽभूद् वन्यभ्रष्ट इव द्विपः ॥ १४८ ॥

---

१ मत्ते ।

मरुभूतिर्मदात्मेति निन्दन्नात्मानमन्वहम् ।
बन्धोरपि मयाऽकारि दुर्दशैतादृशी हहा ।
जीवितं यदि पश्यामि तं बन्धुं बन्धुरादरैः ।
क्षमयामि निजं मन्तुमन्तेवासीव तद्गुरुः ॥ १५० ॥
तपस्यन्तं स शुश्राव कमठं तापसाश्रमे ।
निजापराधमुक्त्यर्थं यियासुस्तत्र सोऽजनि ॥१५१॥
राज्ञाथ  स्खलितस्यापि गच्छतोऽस्याथ वर्त्मनि ।
महानर्थैकपिशुनैः शकुनैः प्रतिकूलितम् ॥१५२॥
प्रकृत्या मृदुरात्मानं मन्तुमन्तं विदन् स च ।
ईयिवांस्तापसावासं मृगोऽरेरिव निकेतनम् ॥१५३॥
मृगाभेकतनोपास्ति शुभसंस्तरविस्तरम् ।
भूरिभस्मरजःस्पृष्टं वल्कलाकल्पकल्पनम् ॥ १५४ ॥
कुर्वन्तं स्थलमत्युग्रमज्ञानमात्मनः ।
सोऽपश्यदग्रतो गच्छन् कर्कटकुटिलाशयम् ॥१५५॥ (युग्मम्)
शुभाशुभतरङ्गौघस्वभावं तस्य दुर्मतेः ।
नाज्ञासीद् मरुभूतिः स दुर्लक्ष्या गतिरीदृशाम् ॥१५६॥
गुरोरिव विनयात्क्षान्तिमिच्छुर्मन्तुमात्मनः ।
सोऽपतत् पदयोस्तस्य भूतलन्यस्तमस्तकः ॥१५७॥
तदा तस्य प्रणामः स तत्क्रोधेन्धनतां ययौ ।
पन्नगानां पयःपानात् किं न स्याद् गरलोच्चयम् ? ॥१५८॥
नतस्य तस्य वचनैः शीतलैरतिशीतलैः ।
प्राज्वलत् कमठोऽस्नेहः, स्नेहैः सिक्त इवानलः ॥१५९॥
अस्त्येषोऽवसरो वैरिवधप्राणकर्मठः ।
कमठश्चिन्तयामास वीक्ष्य तं नतकन्धरम् ॥१६०॥
पाणिनाऽपातयत् प्रौढां स शिलामस्य मस्तके ।
तर्जयन्तीं मुष्टिपातं क्रुद्धस्य समवर्तिनः ॥१६१॥
सा भाति स्म तदाऽधस्तात् पतन्ती शैलतः शिला ।
धीरिव क्षिप्तदुर्बुद्धेरस्य स्वपापपटीयसी ॥१६२॥
एकशः पतनादस्या असौ जीवन् भविष्यति ।
ध्यात्वेति दुर्धियानेनाऽऽदत्त सा पाणिना पुनः ॥१६३॥
पुनस्तामुमुचद् दुष्टः कमठश्चेतनामिव ।
शिला तत्तपसा सार्धं मरुभूतिमचूर्णयत् ॥१६४॥
मुमुचे मरुभूतिः स ततः प्राणैस्त्वरात्वरम् ।
अपध्यानोत्पन्नपापतः सर्पैरिव ॥१६५॥

प्रहारार्तिसमुत्पन्नमहार्तध्यानधूसरः ।
तत्कालविस्मृतश्राद्धव्रतपञ्चनमस्कृतिः ॥१६६॥
अर्हत्सिद्धादिशरणाशरणीकृतमानसः ।
वन्ध्याद्रौ भद्रजातीयः सोऽभूद् वन्धुरसिन्धुरः ॥१६७॥ (युग्मम्)
क्रमेण ववृधे तस्य तारुण्यं वपुषा समम् ।
सदन्तः स तदा सानुमतः सानुरिव व्यभात् ॥१६८॥
क्षरद्दानकणाम्भोभिः सुरभीकृतभूतलः ।
भ्राम्यद्भ्रमरझङ्कारवर्धिष्णुक्रोधदुर्धरः ॥१६९॥
प्रचण्डशुण्डादण्डेन कम्पितप्रौढपादपः ।
ईषदुद्भिन्नदन्ताभ्यां भिन्नभूधरधोरणिः ॥१७०॥
गम्भीरवदनोद्भूतगर्जितर्जितवारिदः ।
उद्भिन्नाद्भुतकुम्भाभ्यां कुम्भाभ्यामिव शोभितः ॥१७१॥
प्रत्यङ्गोत्तुङ्गसङ्गाङ्गस्पर्शस्पृष्टावनीतलः ।
अञ्जनाद्रिरिवोत्तुङ्गः सोऽभ्रमद् वनगह्वरे ॥१७२॥
(चतुर्भिः कलापकम्)
कण्डूयमानो गौरिव कदाचित् करिणीकरैः ।
कदाचिद्धस्तिनीहस्तविन्यस्तस्वकमस्तकः ॥१७३॥
कदाचित् पद्मिनीपत्रपरागकापिशं पयः ।
पिबन् पद्माकराद् दुग्धवारिधेरिव वारिदः ॥१७४॥
कदाचिद् भापयन् भूयो भूयसीर्भिल्लवल्लभाः ।
स्वकुम्भस्पर्धिवक्षोजदर्शनादिव मन्युमान् ॥१७५॥
कदाचिद् विचरन् कूलङ्कषाकूले सुलीलया ।
कदाचित् करिणीवृन्दैः सार्धं क्रीडान्वितस्ततः ॥१७६॥
क्रीडन् क्रीडाभिराक्रीडे विविधाभिरहर्निशम् ।
हस्तिमल्ल इवानैषीद् हस्तीशो वासरानसौ ॥१७७॥
(पञ्चभिः कुलकम्)
कमठस्य प्रिया साथ वरुणा प्रियवार्तया ।
तादृश्या भृशमुद्विग्ना जज्ञे खेदातुराऽनिशम् ॥ १७८ ॥
स्वप्रिये च धृतद्वेषा स्निग्धस्नेहा च देवरे ।
विपद्य वरुणा जज्ञे हस्तिनी तस्य हस्तिनः ॥ १७९ ॥
अथामुना भ्रमन्ती सा करिणी करिणा समम् ।
मेनकेव श्रितोत्साहा भवानीगुरुणा व्यभात् ॥ १८० ॥
तस्यापि हस्तिनस्तस्यां विशेषादभवद्रतिः ।

क्वचित् तमालहीन्तालतालप्रियालविभ्रमम् ।
व्योमोपरि परिभ्राम्यत् कीराणामिव संकरम् ॥१९७॥
क्वचित् कज्जललोलालिकालिन्दीजलसोदरम् ।
दैवाद्रिवेह सम्प्राप्तं शृङ्गमञ्जनभूभृतः ॥१९८॥
वर्ण्यं निर्वर्ण्य निर्वर्ण्यमित्यब्द्रं पञ्चवर्णकम् ।
विसिष्मिये विशामीशः सौधोत्सङ्गस्थितस्तदा ॥१९९॥

(षड्भिः कुलकम्)

इत्यस्य पश्यतो राज्ञो विस्मयोत्फुल्लचक्षुषः ।
विदुद्राव द्रुतं वार्दो दौर्जनीव मनःस्थितिः ॥२००॥
तदैव कलितानित्यभावनो भूमिवल्लभः ।
ध्यातवानिति वैराग्यवारिस्पर्धितवारिधिः ॥२०१॥
अहो ! एतादृशी सम्पद् घनस्य नयनोत्सवा ।
तत्क्षणाद् विलयं प्राप तृणाग्निरिव सर्वतः ॥२०२॥
पुत्रमित्रकलत्रादिधनकाञ्चनसंश्रयः ।
तथा संसार एषोऽपि घनवत् क्षणभङ्गुरः ॥२०३॥
शरीरं शोभते येन विनाऽपि मणिभूषणैः ।
यौवनं तदपि प्रौढशक्रचाप इवास्थिरम् ॥२०४॥
मिष्टान्नपानैरत्यन्तं पोषिता तनुदेहिनाम् ।
विलीयते क्षणादेव स्फुरद्विद्युल्लतेव च ॥२०५॥
मणिमाणिक्यसाम्राज्यराज्यरूपा अपि श्रियः ।
सर्वा अपि विलीयन्ते श्यासिका इव तत्क्षणात् ॥२०६॥
का स्त्रियः के सुता किञ्च राज्यं परिजनश्च कः ? ।
काऽसौ सम्पत् पुनः कोऽहं सर्वं मेघानुसार्यदः ॥२०७॥
तन्मुधैव निमग्नोऽस्मि सुखे सांसारिके भृशम् ।
यत्फलं मूलनाशाय रम्भाफलमिव ध्रुवम् ॥२०८॥
इत्यनित्यं जगद्वृत्तं भावयन् सोऽवनीधवः ।
आससादावधिज्ञानं फलं वैराग्यभूरुहः ॥२०९॥
ततो महेन्द्रनामानमङ्गजन्मानमात्मनः ।
न्यधाद् राज्येऽरविन्दो राड् वैराग्यमिव चेतसि ॥२१०॥
सचिवादिपरीवारं प्रतिबोध्यानबोधितभिः ।
सूरेः सामन्तभद्रस्याभ्यर्णे स व्रतमाददे ॥२११॥
आत्मा ऽकूर्यावधिटन् भेदं दृंसयन् श्रीरनीरयोः ।

धर्मचक्रं पुरो व्योम्नि ध्वजो रत्नमयो महान् ।
पन्न्यासे नव पद्मानि देवदुन्दुभिझाङ्कृतिः ॥ २२८ ॥
चैत्यद्रुः पल्लवोल्लासी मृगेन्द्रासनमुत्तमम् ।
वप्रत्रयं तथोच्चङ्मातपत्रं च चामरा ॥ २२९ ॥
अधस्तात् कण्टकास्यानि चत्वारि वदनानि च ।
आनुकूल्यं च वायूनां प्रादक्षिण्यं च पाक्षिणाम् ॥ २३० ॥
वर्षं गन्धोदकानां च प्रणतिः पृथिवीरुहाम् ।
सुगन्धिसुमनोवृष्टिः सर्वेऽपि ऋतवोऽन्तिके ॥ २३१ ॥
अवृद्धिर्नख-केशानां नाकिकोटिः सदाऽन्तिके ।
एकोनविंशतिर्देवैः कृता अतिशया अमी ॥ २३२ ॥
स्युरेतेऽतिशया सर्वे चतुस्त्रिंशच्च मीलिताः ।
सेवन्ते तानमी नित्यं भुजिष्या इव नायकान् ॥ २३३ ॥
पञ्चत्रिंशद्गुणोपेतं तद्वच सुमनोहरम् ।
सुरासुरनराधीशस्वान्तसंवननौषधम् ॥ २३४ ॥
इत्याद्यसंख्यैः संख्यावद्गणगेयैर्गुणोत्करैः ।
निचिता ये च पाथोभिरिव पानीयराशयः ॥ २३५ ॥
त्रिकालविषयं वस्तु समस्तमपि नित्यशः ।
प्रतिबिम्बमिवादर्शे तज्ज्ञाने प्रतिबिम्बितम् ॥ २३६ ॥
अनन्ता अभवस्ते च भविष्यन्ति तथाऽपरे ।
अर्हन्तो भगवन्तोऽत्र विश्वातिशयशालिनः ॥ २३७ ॥
आकर्णयाथ सार्थेश[1] तत्तीर्थोत्पत्तिमादितः ।
याति तच्छ्रवणादेव दुरन्तमपि दुष्कृतम् ॥ २३८ ॥
अस्यामेवावसर्पिण्यामिक्ष्वाकुकुलसम्भवः ।
बभूव भगवानादिर्देवो देवेन्द्रवन्दितः ॥ २३९ ॥
तत्सूनु पुण्यनिभृतो भरतो भरताधिप ।
चक्रिणामादिमो योऽभूदर्हतामिव तत्पिता ॥ २४० ॥
अन्येद्युर्भरताधीशस्तं तीर्थाधीशमादिमम् ।
पर्वतेऽष्टापदे प्राप्तमभ्यगादभिवन्दितुम् ॥ २४१ ॥
नत्वा निषण्णस्तीर्थेशमप्राक्षीत् क्षितिवासवः ।
अस्यां नाथावसर्पिण्यां (भाविनः ?) कति तीर्थपा ? ॥ २४२ ॥
अवादीदर्हतामाद्यो भरतं भावभासुरम् ।

---

१ दाना । २ सख्यावान्=विद्वान् ।

भविताऽत्र महाभाग ! त्रयोविंशतिरर्हताम् ॥ २४३ ॥
तदङ्का-ऽऽह्वान-संस्थान-वर्णप्रभृतिपूर्वकम् ।
श्रुत्वा मुदितो धाम जगाम जगतीपतिः ॥ २४४ ॥
प्रतिबोध्य जगल्लोकानम्भोजानिव भास्करः ।
नाभेयो भगवाल्लेँभे मुक्तिमष्टापदाचले ॥ २४५ ॥
आर्षभिर्वृषभाधीशनिर्वाणेनातिदुःखितः ।
शोकं चकार, संसारवासिनां यदसौ स्थितिः ॥ २४६ ॥
तथा चाष्टापदाद्रौ सोऽष्टापदप्रौढविक्रमः ।
भरतस्तातनिर्वाणस्थानं वन्दितुमभ्यगात् ॥२४७॥
गतस्तत्रात्यजच्छोकं निर्मोकमिव पन्नगः ।
शोको हि तादृशां न स्याच्चिरं स्नेह इवासताम् ॥२४८॥
सोऽथ तत्र गिरौ विश्वविश्वानुग्रहधीर्मुदा ।
भरतोऽचीकरच्चैत्यं यशोराशिमिवात्मनः ॥२४९॥
भविष्यदर्हतां भक्त्यै पुनस्तातदिदृक्षया ।
जिनानिवार्यं प्रतिमास्तत्रास्थापयदर्हताम् ॥२५०॥
ततश्च पप्रथे तीर्थमिदं निर्वाणकारणम् ।
स्वलब्ध्या वन्दमानस्यावश्यं शिवसमर्पकम् ॥ २५१ ॥
संमेतोऽपि महातीर्थं त्रैलोक्यानन्दकन्दभूः ।
प्रवृत्तिं शृणु तस्यापि श्रोतृश्रुत्योः सुधोपमाम् ॥२५२॥
अनन्ता निर्वृता यत्र निर्वास्यन्ति तथाऽपरे ।
अर्हन्तो बहुभिः सार्धं साधुभिर्गुणधारिभिः ॥२५३॥
अस्यामप्यवसर्पिण्यामत्र विंशतिरर्हताम् ।
कर्म निर्मूल्य निर्वाणसुखमव्ययमेष्यति ॥२५४॥
अतस्तद्वन्दने पुंसां फलं कैवल्यलक्षणम् ।
महापुंभिस्तु यत् स्पृष्टं तद् बीजं मोक्षभूरुहः ॥२५५॥
तस्मादिमे महातीर्थे पवित्रीकृतविष्टपे ।
गत्वाऽहमपि तत्रैव करिष्ये कर्मणां क्षयम् ॥२५६॥
मन्ये तीर्थे इमे सर्वशैलेभ्योऽप्युन्नते अहम् ।
यदारूढैः क्षणेनाऽपि लोकाग्रमपि लभ्यते ॥२५७॥
इति तस्योक्तिसिक्तात्मा सागरः सार्थनायकः ।
आनन्दमेदुरो जज्ञे पीतस्तन्य इवार्भकः ॥२५८॥
अरविन्दमुनीन्द्रः स योग्यं ज्ञात्वाऽन्यदाऽथ तम् ।

---

१ सर्पत्वचम् ।

अनुजग्राह धर्मोक्त्या सन्तो हि श्रितवत्सलाः ॥२५९॥
सागरोऽस्य मुनेर्वाचा मुक्त्वा मिथ्यात्वमञ्जसा ।
भेजे धर्मं गृहस्थानां सम्यक् सम्यक्त्वसंयुतम् ॥२६०॥
अनगारं गुणागारं मार्गे सागरसार्थराट् ।
सेवमानोऽचलद् गृह्णन् मर्त्यजन्मतरोः फलम् ॥२६१॥
भिल्ल-भल्लुक-शार्दूल-शृगालकुलसंकुलाम् ।
किरातीनिकरारब्धहल्लीसकमनोहराम् ॥२६२॥
सदुर्गामिव दुर्गम्यां प्राकाराकारभूधरैः ।
व्याकुलां तस्करैः क्रूरैस्तुरङ्गैरिव मन्दुराम् ॥२६३॥
विवेकिनेव विनयः साधुना सहितः क्रमात् ।
महाटवीं विवेशासौ सागरः सागरः श्रियाम् ॥२६४॥
( त्रिभिर्विशेषकम् )

सोऽथ सार्थं सनिर्ग्रन्थः क्रामंस्तामटवीं क्रमात् ।
मरुभूतिभराजेन भूषितां भुवमालभत् ॥२६५॥
क्रीडद्द्वन्द्वचरद्वन्द्वारब्धदुन्दुभिनिस्वनम् ।
लोलरोलम्बसंरावंवेणुवीणाक्कणत्कृति ॥२६६॥
निमज्जत्सारसश्रेणीकेङ्कारालापपेशलम् ।
उच्छलत्पक्षहंसालीकृतमर्दलगुन्दलम् ॥२६७॥
उल्लल्लोलकल्लोलकल्पिताऽनल्पतालकम् ।
अनिलान्दोलिताशेषाब्जिनीजनितहस्तकम् ॥२६८॥
नाकिभिर्नुतमायातैः सङ्गीतमिव सूत्रितम् ।
परमोदकलक्ष्मीकं तत्रास्त्येकं सरोवरम् ॥२६९॥
( चतुर्भिः कलापकम् )

सार्थनाथोऽथ पानीय तृणेन्धननिधानकम् ।
वीक्ष्य प्रदेशं तं तत्र सार्थसार्धं न्यवीविशत् ॥२७०॥
अकम्पयन् केऽपि शाखिशाखाः शाखामृगा इव ।
भ्रेमु फलार्थिनः केऽपि गह्वरे शबरा इव ॥२७१॥
केऽपि मुस्ताशयाऽऽचख्नुः क्ष्मामलं सूकरा इव ।
बभञ्जुर्भूरुहान् केऽपि मत्तमातङ्गजा इव ॥२७२॥
सरोम्भोभिः केऽपि सस्नुः सस्नेहं सारसा इव ।
भारवाह इवानिन्युः केऽपि सस्येन्धनादिकम् ॥२७३॥

१ हल्लीसकम्—स्त्रीणां मण्डलीभूय गानम् । २ अश्वशालाम् । ३ मर्दल =पणवनामक वाद्यम् ।

अभक्ष्यं बुभुजिरे भक्ष्यं केऽपि जन्यजना इव ।
एवं ववृतिरे सर्वे सार्थिकाः स्वार्थनिर्भराः ॥२७४॥
( चतुर्भिः कलापकम् )
कलितः कलभैस्तुङ्गैः प्रतिच्छन्दैरिवात्मनः ।
परीतः करिणीवृन्दैः शैलिकाभिरिवाचलः ॥२७५॥
भृङ्गैर्दानार्थमायातैर्याचकैरिव सेवितः ।
मरुभूतिद्विपः सोऽथ तत्सरोवरमभ्यगात् ॥२७६॥ ( युग्मम् )
कर्णाभ्यर्णभवद्भृङ्गभङ्गिमातङ्गपुङ्गवः ।
पपौ स्वच्छं पयस्तत्र नीरधाविव नीरदः ॥२७७॥
अभितोऽभ्यङ्क्ष्यमानाङ्गः प्रोत्क्षिप्तैः करिणीकरैः ।
पतन्तीभिः पयोवाहधाराभिरिव भूधरः ॥२७८॥
कार्यमाणाम्बुजग्रासो द्विपैराधोरणैरिव ।
हस्तिमल्ल इवाम्भोधौ सस्नौ तत्र स कुञ्जरः ॥२७९॥ (युग्मम्)
अञ्जनाद्रिरिवाम्भोभिर्धौताङ्गः स सरोजलैः ।
तत्पालीमारुरोहाद्रिमेखलामिव वारिदः ॥२८०॥
पश्यन्नितस्ततोऽपश्यत् स हस्ती सार्थसार्थिकान् ।
तद्दर्शनादभूत् तस्य कोपाटोपः पटीयसः ॥२८१॥
विघ्नन् क्रमैः क्ष्मापीठं तर्जयन्निव जिह्मगान् ।
शुण्डाग्रं कुण्डलीकुर्वन् वहन्नहिमिवानने ॥२८२॥
शीकरान् निक्षिपन् सान्द्रान् क्रोधार्जीर्ण्यं वमन्निव ।
कुर्वन्नाताम्रदृग्युग्मं रुद्दं पल्लवयन्निव ॥२८३॥
सृजन्नत्युर्जितां गर्जिं पर्जन्य इव भूगतः ।
समधाविष्ट धूमोर्णाधवभूभ्र इव द्विपः ॥२८४॥ ( त्रिभिर्विशेषकम् )
दुर्लोपकोपं साटोपमापतन्तमनेकपम् ।
यमयोधमिव क्रुद्धं वीक्ष्याक्षुभ्यंश्च सार्थिकाः ॥२८५॥
सोऽथ सार्थजनान् दन्तावलः प्रोद्दामधामभृत् ।
भाययामास दन्ताभ्यां भुजाभ्यामिव धर्मराट् ॥ २८६ ॥
आरोहन् भूरुहान् केऽपि दावार्ता वानरा इव ।
गह्वरे प्राविशन् केऽपि व्याघ्रत्रस्ता मृगा इव ॥ २८७ ॥
मूर्च्छितान्येऽपतन् केऽपि विषाघ्राता इव क्षितौ ।
पर्यटन्नारटन्तश्च केऽपि भूतातुरा इव ॥ २८८ ॥

---

१ नवोढस्त्रीणा सम्बन्धिस्नेहिन । २ आधोरणा =हस्तिपका । ३ रुद्=रोष ।

नूतनोद्भूतकोपान्धे इभेऽभ्यर्णमुपेयुषि ।
एवं विचेष्टिरे सार्थलोका कोलाहलाकुला ॥२८९॥
( त्रिभिर्विशेषकम् )

रटद्रोष्टं लुठल्लोष्ठमरच्छकटसंकटम् ।
व्रजदृषभमाक्रन्दत्खराश्वतरसैरभम् ॥ २९० ॥
त्रसदेणं रुदत्क्रैणं स्फुटत्पटकुटीपटम् ।
इत्यभूद् भीषणं तस्मिन्नन्यसैन्य इवागते ॥ २९१ ॥ ( युग्म )
जीवग्राहं प्रनष्टेषु लोकेषु निखिलेषु च ।
एक एव मुनिस्तस्थौ मेरुचूलेव निश्चलः ॥ २९२ ॥
ज्ञात्वाऽथावधिज्ञानात् तस्य हस्तिनोऽतियोग्यताम् ।
कायोत्सर्गेण तस्थौ सोऽरविन्दो मुनिपुङ्गवः ॥ २९३ ॥
नाकाग्रन्यस्तदृग्द्वन्द्व सुस्थितं तं मुनिं प्रति ।
गर्जितर्जितपर्जन्यो दधावे सिन्धुरोद्धुरः ॥ २९४ ॥
ध्यानसन्धाननद्धस्य प्रभावात् तस्य सन्मुनेः ।
पय सेकादिवाङ्गारः शान्त सोऽजनि कुञ्जरः ॥ २९५ ॥
शान्तात्माऽसौ द्विपाधीशो भिक्षुं वीक्ष्य क्षमारतम् ।
संवेगं परमं भेजे पूर्वाभ्यस्तमिव त्वरम् ॥ २९६ ॥
शनैः शनैस्तपस्वीवागत्यैष द्विरदेश्वरः ।
तस्थिवांस्तन्मुने पार्श्वे सद्यः सद्यस्कशिष्यवत् ॥२९७॥
मुमुक्षुरपि शान्तात्मा परोपकृतिकर्मठ ।
कुञ्जरस्योपकाराय कायोत्सर्गमपारयत् ॥२९८॥
व्यज्ञासीज्ज्ञानविज्ञानात् तत्पूर्वाचरणं मुनिः ।
प्रत्यक्षं ज्ञानिनां नूनं स्वरूपं हि वपुष्मताम् ॥२९९
वचोर्मिमधुरैस्तस्य तिरश्चोऽपि द्विपेशितुः ।
प्रतिबोधमदाद् साधुः स हि कीटेन्द्रयोः सदृग् ॥३००॥
अनुभूतं त्वया भद्र ! मरुभूतिभवे पुरा ।
तदत्र स्मर निःशेषं निशास्वप्नमिवाहनि ॥३०१॥
विश्वभूतिं स्ववप्तारं मातरं स्वमनुद्धराम् ।
किन्न स्मरसि दन्तीन्द्रारविन्दं मां च भूभुजम् ? ॥३०२॥
हरिश्चन्द्रमुनेः पार्श्वे स्वीकृतं धर्ममार्हतम् ।
व्यस्मार्षीः किं त्वमधुना दुष्टस्वप्नमिवोषसि ? ॥३०३॥
दुष्कर्मैककर्मठेनाशु कमठेन कृतः पुरा ।
अभ्यागतो भवान् मृत्योस्तदपि स्मर कुञ्जर ! ॥३०४॥

तिर्यक्त्वकारणं क्लिष्टमार्तध्याननिबन्धनम् ।
इषत्खण्डप्रहारोत्थं मरणं स्मरणीकुरु ॥३०५॥
वाचं वाचंयमस्यैवं पपौ पीयूषवर्णिकाम् ।
निस्तन्द्रः सोऽपि हस्तीन्द्रः कूपस्याप इवाध्वगः ॥३०६॥
दृष्टदृष्टमिदं स्पष्टमिति निष्टङ्क्यन्निभः ।
अस्मार्षीत् पूर्वजां जातिं प्रवृत्तिमिव विस्मृतिम् ॥३०७॥
अविहस्तः स हस्तीन्द्रो जातिस्मृत्या यथाभवाम् ।
सर्वां पूर्वभवाभ्यस्तामद्यासीदात्मनः कथाम् ॥३०८॥
संसारासारतां ध्यायन्नन्न व्रत इव व्रती ।
चिन्तयन् कर्मवैचित्र्यं व्यापारीव श्रितोद्यमः ॥३०९॥
शुण्डाग्रं सरलीकुर्वन् वैकक्षमिव निर्मलम् ।
स्पृशन्निलातलं मूर्ध्ना पातकं पातयन्निव ॥३१०॥
करी करेण चरणौ शरणं चरणश्रियाम् ।
ववन्दे दमिनस्तस्य द्विपरूप इवामरः ॥ ३११ ॥

( त्रिभिर्विशेषकम् )

भूयो भूयो मुनेः पादौ सोऽस्पृशन्निजमौलिना ।
सार्थापल्लवजं पापं क्षामयन्निव भावतः ॥३१२॥
नोद्दध्रे सिन्धुरः साधुक्रमन्यस्तं स्वमस्तकम् ।
धर्मभाराधिरोपाय याचयन्निव संयतिः ॥३१३॥
पुनस्तं हस्तिनं शस्तं भावभावितचेतसम् ।
बभाषे भिक्षुहर्यक्षः सुधामधुरया गिरा ॥३१४॥
शृणु सिन्धुर! संसारे रम्भागर्भानुकारिणि ।
न सारं किञ्चिदीक्षेऽहं व्रीहाविव वितण्डुले ॥३१५॥
इभ्यानिभ्यजरद्बालनृतिर्यग्नारकामरान् ।
कर्मैव कुरुते जन्तूंश्चित्राणीवात्र चित्रकृत् ॥३१६॥
हसद्भिश्च रुदद्भिश्च भोगिभिश्चाप्यभोगिभिः ।
संसारप्रेक्षणे जीवैर्नटैरिव विचेष्टयते । ३१७॥
कुर्वद्भिर्विविधं कर्म कर्मवद्भिर्भवापणे ।
लभ्यन्ते लाभसामान्यसंहारा नैगमैरिव ॥३१८॥
क्व तत्पूर्वभवः क्वाऽपि श्रावकत्वमनुत्तरम् ?।
क्व तद्भूतभवेऽभ्यस्तं मार्दवं भवतः पुनः ? ॥३१९॥

---

१ हर्यक्ष —सिंह । २ प्रेक्षणम्—नाटकम् । ३ लाभ-हान्योरभाव. सामान्यम् । ४ वणिग्भि ।

विवेकविकलं क्वेदं तिर्यक्त्वं च तवाधुना ।
क्व चासौ विरतित्यागः क्वायं क्रोधो दुरुद्धरः ? ॥ ३२० ॥
इत्यस्य व्रतिनो वाचं शृण्वतस्तस्य हस्तिनः ।
निर्ययुर्दृक्पयःपूरा निर्झरा इव भूभृतः ॥ ३२१ ॥
पुनः पुनः क्षिपन् पांशून् मूर्ध्नि बाष्पितलोचनः ।
शुशोच करिराजोऽसौ नष्टश्रीरिव तद्धनम् ॥ ३२२ ॥
द्विपं खेदं प्रकुर्वाणमित्यभीक्ष्णं क्षमीशिता ।
याचमुच्चरति स्मैव वर्णिकामिव शर्मणाम् ॥ ३२३ ॥
किं खेदेनाधुना दु खदायिना द्विरदोत्तम ! ? ।
दीप्ते प्रदीपने कूपखनने नोद्यम' शुभः ॥ ३२४ ॥
कषायविषयासङ्गं मुञ्च मातङ्गपुङ्गव ! ।
यतस्तन्मोचनात् स्वर्गगामिनः पशवोऽपि हि ॥ ३२५ ॥
तथाह्यस्मिन् भवे सर्वविरतिस्तव नार्हति ।
निर्विवेके हि तिर्यक्त्वे दुर्लभा साऽभ्रपुष्पवत् ॥ ३२६ ॥
अणुव्रतानि पञ्चापि सप्तकं गुणशिक्षया ।
अनु सम्यक्त्वमेतानि व्रतानि गृहमेधिनाम् ॥ ३२७ ॥
सम्यगाराधनापूर्वं मार्गः स्वर्गापवर्गयोः ।
अर्हद्धर्मस्तवैषोऽस्तु श्राद्धस्येव धियांनिधे ! ॥ ३२८ ॥ (युग्मम्)
धर्मं पूर्वभवाभ्यस्तं भिक्षुणाऽभिहितं करी ।
मेने मूर्धप्रकम्पेन मौनीव विनयी वचः ॥ ३२९ ॥
वरुणा करिणी साऽपि तदा तत्रैव तस्थुषी ।
पश्यन्ती शमिनं लेभे जातिस्मरणमात्मनः ॥ ३३० ॥
साधूक्तं द्वादशात्मानं धर्मं तं प्रत्यपद्यत ।
हस्तिनी साऽपि हस्तीव, पत्न्यो हि पतिमार्गगाः ॥ ३३१ ॥
मुनिनाऽपि पुनः सिक्तः सन्मार्गोक्तिपयोभरैः ।
कुम्भिनो भावभूजन्मा महानन्दः फलप्रदः ॥ ३३२ ॥
निपीय पुण्यपानीयं मुनिराजसरोवरात् ।
स्तम्बेरमः स संतुष्टः प्राप्तश्रीरिव दुःस्थितः ॥ ३३३ ॥
श्राद्धधर्ममुपादाय चिन्तारत्नमिवानघम् ।
मुनिं नत्वा ततः कुम्भी व्यचरद् मुनिराजवत् ॥ ३३४ ॥

१ स्थूलेभ्य प्राणातिपात-मृषावादा-ऽदत्तादान-मैथुन-परिग्रहेभ्यो विरति अणुव्रतपञ्चकम् । २ दिक्परिमाण-भोगोपभोगपरिमाणा-ऽनर्थदण्डविरमणानि—गुणव्रतानि, सामायिक-देशावकाशिक-पौषधा-ऽतिथिसंविभागा -शिक्षाव्रतान्युच्यन्ते । ३ सम्यक्त्वेन सहेत्यर्थं ।

द्विरदोपद्रवे तस्मिन् प्रशान्ते सार्थसार्थिकाः ।
अमिलंस्तत्र संतुष्टाः सायं वृक्षेष्विवाण्डजाः ॥ ३३५ ॥
ललाटपट्टसंघट्टकरकोमलकुड्मलाः ।
यतिराजपदाम्भोजरजश्चित्रितमस्तका. ॥ ३३६ ॥
मुनिनाथगुणग्रामग्रहणैकपरायणाः ।
नेमुर्मुनिं मुदा लोका गोत्रदेवमिवागतम् ॥ ३३७ ॥
धर्मप्रभावं तं वीक्ष्य विस्मिताः सार्थवासिनः ।
यथाशक्ति मुनेः पार्श्वे धर्ममाददिरे मुदा ॥ ३३८ ॥
अमानं महिमानं तं दृष्ट्वा सार्थाधिपोऽपि हि ।
स्वं स्वान्तं दृढयामास धर्मे, धन इवाधनः ॥ ३३९ ॥
शृण्वानः शमिनः सम्यगुपदेशं स सागरः ।
श्राद्धधर्मादनल्पोऽभूद् मर्यादात इवाम्बुधिः ॥ ३४० ॥
अरविन्दमुनीन्द्रो द्राग् गत्वाऽष्टापदपर्वते ।
प्राणमत् प्रतिमास्तत्राऽर्हतां साक्षादिवार्हतः ॥ ३४१ ॥
महातीर्थे च तत्रैते कृत्वा यात्रां यतिप्रभुः ।
व्यहरत् पावयन् पीठं पृथिव्याः पांशुभिः पदोः ॥ ३४२ ॥
सनाथीभूतमात्मानं तीर्थवन्दनतो विदन् ।
सार्थनाथोऽप्यगात् स्थानमीप्सितं पूरितेप्सितः ॥ ३४३ ॥
मरुभूतिद्विपः सोऽथ प्रवणः प्राणिरक्षणे ।
व्यहार्षीत् क्ष्मानिषण्णाक्षः पतितस्वः पुमानिव ॥ ३४४ ॥
तपनातपसंतप्तं संपिबन् नैर्झरं पयः ।
शुष्कैः कन्दैः फलैर्मूलैर्दलैश्च कृतपारणः ॥ ३४५ ॥
द्वितीयारकसमुत्पन्न इव षष्ठं तपः सृजन् ।
शीतोष्णक्षुत्तृषाबाधां स सेहे प्रत्यहं द्विपः ॥ ३४६ ॥ ( युग्मम् )
विभ्राणो भावभिक्षुत्वं स मतङ्गजपुङ्गवः ।
निर्जीवे स्थण्डिले तस्थौ सुस्थितात्मेव संयमी ॥ ३४७ ॥
उच्चैर्ग्रीवोग्रशृङ्गाग्रग्रावसंगतविग्रहः ।
भजंस्तीव्रातपं तीव्रदीप्तेरद्रिरिव स्थिरः ॥ ३४८ ॥
उत्पन्नानलसंतप्तलोहकर्कशकर्करे ।
शयानोऽगमयद् ग्रीष्मं सरित्कूले परासुवत् ॥ ३४९ ॥ ( युग्मम् )
ह्रदिनीह्रदनिर्गच्छच्छीतलानिलसंकुले ।

१ परासु = गतप्राण. ।

पल्वले निशि संतिष्ठन्नुत्कीर्ण इव निश्चलः ॥ ३५० ॥
प्लवङ्गान्दोल्यमानद्रुवल्लीसम्भववायुभिः ।
निष्कम्पो निशि कुम्भीन्द्रो हेमन्तमत्यवाहयत् ॥३५१॥ (युग्मम्)
गिरीन्द्रकन्दरागारे समासीनः समाधिमान् ।
तज्जन्मेवासुमद्रक्षादक्षोऽहान्यतिवाहयन् ॥ ३५२ ॥
गतागतमकुर्वाणो बिभ्राणो दुस्तपं तपः ।
अनैषीदेष वर्षर्तुमद्रिसङ्गोऽप्यगह्वरे ॥ ३५३ ॥ ( युग्मम् )
ग्रीष्म हेमन्त-वर्षासु टौष्कर्यमिति संकिरेन् ।
शरीरं कृशयामास कर्मभिः सह सिन्धुरः ॥ ३५४ ॥
कायोत्सर्गं सृजन् क्वाऽपि स्वैकतां सूचयन्निव ।
शुण्डां संयमयंश्चण्डां क्वापि कैरविणीमिव ॥ ३५५ ॥
क्वापि मौनं वितन्वंश्च भृतकुम्भ इवाम्भसा ।
तिष्ठन् क्वापि तरोर्मूले जातश्रम इवाध्वगः ॥३५६॥
करिणीकेलिविमुखः सम्मुखः पुण्यकर्मणि ।
दध्यौ स सिन्धुरः शर्ममर्मधर्मधुरां दधत् ॥३५ ॥

(त्रिभिर्विशेषकम्)

धन्यास्ते यैस्तपस्यद्भिस्तपस्याऽऽदायि दुष्करा ।
सा नृजन्म विना न स्याद् विवेकैकनिबन्धनम् ॥३५८॥
विवेकविकलस्यात्र तपस्या नृभवोचिता ।
दुर्लभा मम दुर्बुद्धेरभव्यस्येव निर्वृतिः ॥३५९॥
धन्यास्ते यैः सुपात्रेभ्यः प्रदीयन्ते स्वसम्पदः ।
नृणामेवोचितं दानं मत्तानामिव दन्तिनाम् ॥३६०॥
आपन्नोऽहं च तिर्यक्त्वं निजदुष्कर्मदोषतः ।
नालं दातुं किमप्यस्मिन् निर्वारिरिव वारिदः ॥३६१॥
धिग् धिग् मामन्तसमयेऽप्यार्तध्यानविधायिनम् ।
येन रत्नोपमं मर्त्यजन्म हारितवांस्तदा ॥३६२॥
तिर्यक्त्वं लब्धवानार्तध्यानेन क्लिष्टचेष्टितः ।
तिर्यक्त्वेऽप्यभवं हस्ती महादेहो महीध्रवत् ॥३६३॥
गात्रगौरवतः किञ्चाक्षमोऽहं प्राणिरक्षणे ।
प्राणिप्राणपरिध्वंसी दाववह्निरिवाभवम् ॥३६४॥
गच्छस्तिष्ठंस्तथोत्तिष्ठन् यमदूत इवागतः ।
अभवं भयभीरूणां प्राणिनां भीतिहेतवे ॥३६५॥

१ बोधयन् ।

फलमूलपलालौघपलाशैः पुष्कलैरपि।
दुष्पूर्तिरुदरस्यास्य महान्धोरिव वारिभिः ॥३६६॥
आत्मानं भावयन्नाभिर्भावनाभिरहर्निशम्।
भिक्षुशिक्षां स्मरन् हस्ती गमयामास वासरान् ॥३६७॥
इतश्च कमठः क्लिष्टकर्मकर्मठमानसः।
अनुजं मरुभूतिं स्वं मृतं दृष्ट्वाऽतिहृष्टवान् ॥३६८॥
कमठः शठकोठीरः तद् दुष्कर्म मुहुर्मुहुः।
अन्वमोदत दुष्टात्मा स्वात्मानं धर्मिणं विदन् ॥३६९॥
श्रुत्वा वार्तामिमां दुष्टां गुरुरप्याश्रमादिमम्।
त्वरं निष्काशयामास मन्दिरादिव कुर्कुरम् ॥३७०॥
दुष्टदुष्टेति दुर्वाक्यैस्तापसास्तापसोऽजात्।
अमुञ्चन् दूरतः पाणिं धृत्वा पुच्छमिवोरगम् ॥३७१॥
स्थानभ्रष्टो भ्रमन् दुष्टो भोगीव कठिनाशयः।
न लेभे स्थानमप्येष क्वापि कुष्टार्तिमानिव ॥३७२॥
असौ दुष्कर्मकर्तेति गर्ह्यमाणः पदे पदे।
नीरसामपि न प्राप भिक्षां पितृजिघांसुवत् ॥३७३॥
आर्तध्याननिवद्धात्मा स मृत्वा बालमृत्युना।
समवर्तीव हिंसात्मा कुर्कुटाहिरजायत ॥३७४॥
वाह्योरिव महाचण्डो विक्षेपं पक्षयो. सृजन्।
घर्षन्नश्मनि तुण्डाग्रं कुन्ताग्रमिव कौणपः ॥३७५॥
संहरन् वहुशः सत्त्वान् मरकस्येव सोदरः।
सोऽभ्रमत् कुञ्जपुञ्जाद्रिगुहागर्भादिगह्वरे ॥३७६॥ (युग्मम्)
मरुभूतिर्द्वीपस्याथ चरतश्चारुचर्चया।
अन्यदाऽभूद् ग्रीष्मकालो दुष्काल इव पाथसाम् ॥३७७॥
नीराशयेषु वाहुल्यावाहुल्ये पङ्कपाथसोः।
अभूतां तत्र धर्मंतौ पोत्रिणां प्रेमपूरके ॥३७८॥
तृषार्तो वारणो वारिपानार्थं बंभ्रमंस्तदा।
नापश्यत् प्रासुकं क्वापि पयो ध्वान्तमिवाहनि ॥३७९॥
नानाद्रुमच्छदाच्छन्नं तीव्ररुक् तसपुष्करम्।
भ्रमन्नितस्ततः कुम्भी ददर्शैकं सरोवरम् ॥३८०॥
ज्ञात्वा तत् प्रासुकं तोयमजानन् कर्दमाम्भसोः।
स्तौक्यास्तौक्ये विवेशाऽसौ कासारे यत्नतः करी ॥३८१॥

---

१ पोत्रिण—सूकरा। २ निर्जीवं निर्दोपमित्यर्थ।

तटाकेऽथ प्रविष्टः सन् पिपासुस्तत् पयः करी ।
निर्मग्नः कर्दमे दैवात् तत्र रूढ इवाजनि ॥३८२॥
तपःक्षामतनुत्वेन ततो निर्गन्तुमक्षमः ।
तस्थौ तत्रैव निर्मग्नः कर्दमे दुर्दमे द्वीपः ॥३८३॥
भ्रूभ्रमेणापि भूतानामभितो भयकारिणा ।
स दष्टस्तेन दुष्टेनाऽटता कुर्कुटभोगिना ॥३८४॥
निष्योनात् तस्य धीरैकधुर्यस्यानेकपेशितुः ।
अजागरीदहेर्वैर क्षणं सुप्तमिव द्रुतम् ॥ ३८५॥
सपक्ष इव कीनांश उड्डीयोड्डीय मत्सरी ।
दन्दशूको ददंशैनं कुम्भिनं कुम्भमर्मणि ॥३८६॥
सदर्प्पसर्प्पदंष्ट्राभ्यां निर्गत्ता गरधोरणिः ।
व्यानशे तत्तनुं शैलनिर्झराम्भ इवावनिम् ॥३८७॥
प्रसर्पद्भिर्गरोद्गारैर्ज्ञात्वात्मानं निरायुषम् ।
विदधेऽनशन हस्ती प्रशमामृतसारणिः ॥३८८॥
तत्क्षणोल्लासिसंवेगवेगवान् गजपुंगवः ।
अस्मार्षीदरविन्दर्षे शिक्षां शिष्यो गुरोरिव ॥३८९॥
अर्हत्सिद्धगणाधीशोपाध्यायसमसाधुभि· ।
सर्वधर्म्ममयैः सर्वगुणैश्च समधिष्ठितम् ॥३९०॥
अशेषदुःखदावाग्निदाहाम्भोवाहसोदरम् ।
स सस्मार नमस्कारं सिन्धुर शमबन्धुर· ॥३९१॥ (युग्मम्)
समदृष्टी रिपौ मित्रे तृणे स्त्रैणे मणौ मृदि ।
आहारपरिहारी स दध्याविथ्थं मतङ्गजः ॥३९२॥
रे जीव! मरणं जन्मानुगं जन्मवतां स्मृतम् ।
ततो न जन्मिभिर्भाव्यं मरणे करुणस्वरै ॥३९३॥
पन्नगोऽसौ तवाधात्मन्! यातो धर्म्मे सहायताम् ।
यदेतद्विहिता पीडा सोढा दुष्कर्मभेदनी ॥३९४॥
मा कार्षीः पन्नगे मन्युमात्मन्! मृत्युविधायिनि ।
मरणं ह्यावश्यकं नूनं यत· कीटेन्द्रयोरपि ॥३९५॥
सुखे दु·खे क्षये वृद्धौ स्तुतौ गालौ महे शुचि ।
अन्यो निमित्तमात्रं स्यात् कर्माण्येवात्र कारणम् ३९६॥
एवं संवेगमारूढश्चतुर्धाहारमुक्तिवान् ।
चतुष्कषायनिर्मुक्तश्चतुःशरणमाश्रितः ॥३९७॥

१ दर्शनात् । २ हस्तिन । ३ यम । ४ क्रोध-मान-माया-लोभरूपा चतुष्कषायी, तया रहित इत्यर्थ । ५ अर्हत्सिद्ध-साधु-धर्माणा शरणम् ।

चतुर्गतिर्विरक्तात्मा चतुर्धाधर्म्मधीरधीः ।
चतुःसंज्ञासमुद्विग्नश्चतुर्विकथवर्जकः ॥३९८॥
धर्म्मध्याननिधिः शुक्लेश्योल्लासी विपद्य सः ।
सहस्रारेऽभवत् सप्तदशाब्ध्यायुः सुरोत्तमः ॥३९९॥ (त्रिभिर्विशेषकम्
सुसंस्थानः शुभाकारः सुकुमारकरक्रमः ।
मलग्लानिविनिर्मुक्तो रम्भागर्भोपमाङ्गकः ॥ ४००॥
उल्लोलैलोलकालिन्दीजलश्यामलकुन्तलः ।
सूक्ष्मस्निग्धोल्लसद्रोमाभिरामाशेषविग्रहः ॥४०१॥
उत्फुल्लोत्पलमुकुलदलविस्तीर्णलोचनः ।
स्निग्धया श्लक्ष्णया दन्तपङ्क्त्या संपूरिताननः ॥४०२॥
शौण्डीरसिन्धुरोद्दण्डशुण्डादण्डभुजाद्वयः ।
अमानमहिमागारो बुद्धिमान् वरवैभवः ॥४०३॥
उत्तप्तकाञ्चनोद्दीप्रद्युतिद्योतितदिङ्मुखः ।
अयमुपपादतल्पे यौवनेन सहाजनि ॥४०४॥ ( पञ्चभिः कुलकम् )
मणिमौक्तिकमाणिक्यमण्डिते पादुके पदोः ।
कटीतटे कटीसूत्रं हस्तसूत्रं च हस्तयोः ॥४०५॥
मस्तके दामकोटीरो हारयष्टिरुरःस्थले ।
कुण्डले कर्णयोः कान्त्या जितादित्येन्दुमण्डले ॥४०६॥
भुजाद्वये च केयूरे अङ्गुलीष्वङ्गुलीयकम् ।
लक्षणानीव भव्यानि भूषणानीति तत्क्षणात् ४०७॥
शुभ्रांशुकरशुभ्राणि दिव्यानि वसनानि च ।
इत्यजायत तद्रूपा पुण्यैरङ्कुरिता किमु?॥४०८॥(चतुर्भिः कलापकम्)
दुन्दुभिर्दिवि दध्वान ध्वानयन् ध्वनितैर्दिशः ।
चिरं जय जयेत्युच्चैरूचिरे चारुवन्दिनः ॥४०९॥
गीतसंगीतवादित्रनादकोलाहलाकुलम् ।
विमानं तत्तदाऽऽगत्य मुदेवालङ्कृतं व्यभात् ॥४१०॥
सुप्तोत्थित इवोत्तस्थौ स सुरः कान्तिभासुरः ।
विलोकयन्निदं सर्वं सर्वतो विस्मयावहम् ॥४११॥
पश्यामि किमहं स्वप्नमिन्द्रजालं किमद्भुतम् ।

---

१ मनुष्य-देव-तिर्यग्नरकगतौ विरक्त आत्मा यस्य सः सर्वत्र समवृत्तिरित्यर्थः । २ दान-शील-तपो-भावरूपे चतुष्प्रकारे धर्मे निश्चला बुद्धिर्यस्य स । ३ चतुर्णाम्—आहार-भय-मैथुन-परिग्रहाणा सञ्ज्ञा, चतुःसञ्ज्ञा । ४ चतुर्णाम्—स्त्री-भक्त-देश-राज्ञा कथा विकथा उच्यन्ते । ५ उल्लोला महाकल्लोला । ६ कालिन्दी-यमुना । ७ उपपादनाम्न्या शय्यायाम् ।

किं वा महीयसी माया यदिदं दृश्यते दृशा ॥४१२॥
इति संशयदोलायां खेलन्तं लेखनायकम् ।
प्राञ्जलिः प्रोचिवान् द्वाःस्थो नरेन्द्रमिव धीसखः ॥४१३॥
एता· श्रियस्तव स्वामिन् ! दास्यः क्रीता इवाभवन् ।
सनाथा वयमद्यैव नाथ ! नाथेन च त्वया ॥४१४॥
स्वामिन्नादिश किं कृत्यं कुर्महे किंकरा वयम् ? ।
आदेशः स्वामिनां दासैर्धार्यते मूर्ध्नि मौलिवत् ॥४१५॥
अनल्पश्रीः सहस्रारः कल्पोऽसौ कल्पितप्रदः ।
अमानानि विमानान्यसमानान्येतकानि च ॥४१६॥
त्वद्दर्शनसुधाधामधामसिधवलाननाः ।
त्वदादेशं प्रपश्यन्तः त्वन्मुखन्यस्तलोचना· ॥४१७॥
सामानिकाश्चात्मरक्षास्त्रयस्त्रिंशा· सभासद· ।
सेनान्यो लोकपालाश्च देवाश्चान्ये पुर· स्थिताः ॥४१८॥(युग्मम्)
सर्वर्तुसुमनोभ्राम्यद्भृङ्गझङ्कारहारिणी ।
इयं त्वन्मनसस्तुष्ट्यै क्रीडाक्रीडपरम्परा ॥ ४१९ ॥
उन्निद्राम्भोजिनीराजीराजितान्तरभूमयः ।
हंससारसचक्राङ्कुलकेङ्कारसंकुला· ॥ ४२० ॥
अतिस्वच्छैरतुच्छैश्च जलैर्निभृतसंभृवाः ।
एताश्च दीर्घिका दीर्घमुदे सन्तु तवाधुना ॥ ४२१ ॥
सत्फलैरतुलैर्वृक्षैः शोभिता मुकुटैरिव ।
अमी क्रीडाचलाश्चेतश्चतुरं रञ्जयन्तु ते ॥ ४२२ ॥
ध्वजदण्डमुखैर्भिन्ना नतकल्पद्रुहाङ्गिण· ।
प्रासादा अप्यमी रम्या नानारत्नविनिर्मिताः ॥ ४२३ ॥
सद्य· प्रेमास्पदं नद्यः सद्यस्ककमला इमा ।
सरित्तुल्या इमा· कुल्या उद्यानद्रुममातरः ॥ ४२४ ॥
सभाया मण्डपोऽयं च मण्डितो मणिमौक्तिकैः ।
इदं श्वेतातपत्रं च शरदिन्दुसहोदरम् ॥ ४२५ ॥
निर्झरा इव गाङ्गेया अमी चामरचामराः ।
इमाश्चामरधारिण्यो वारनार्यः पुर·स्थिताः ॥ ४२६ ॥
अयं गन्धर्ववर्गोऽपि गान्धर्वोऽखर्वगर्ववान् ।
त्वद्गुणग्रहणव्यग्र प्राञ्जलिस्त्वामुपस्थित ॥ ४२७ ॥
इदं सर्वं त्वदाधीनं त्वत्पुण्यैरिव यन्त्रितम् ।
अस्मान् संभावय स्वामिन् ! कूर्मीवाऽसदृशा दृशा ॥४२८॥

उपयोगवशात् सद्यो विस्फूर्तिरवधेस्ततः।
अस्मार्षीदात्मनो जन्मातीतं स्वप्नमिव द्रुतम् ॥ ४२९॥
सोऽहं हस्ती भवे पूर्वे निर्घृणानां शिरोमणिः।
अजानमरविन्दर्षेर्महर्षेर्धर्म्ममार्हतम् ॥ ४३० ॥
प्रतिपद्य तदादेशविरतिं पशुरप्यऽहम्।
व्यधामनशनं स्वर्गश्रियामिव करग्रहम् ॥ ४३१ ॥
तैः पुण्यैरासदं कल्पमनल्पसुखतल्पनम्।
यस्मादनशनं नाकिभोगानां प्रतिभूरिव ॥ ४३२ ॥
स्मृत्वैवं च समुत्थाय वेऽर्यसन्यस्तहस्तकः।
स्नानासनमलंचक्रे राजहंस इवाम्बुजम् ॥ ४३३ ॥
गान्धर्वैर्गीतसंगीतकलमङ्गलगायिभिः।
चिरं जीव चिरं जीवेत्यूचिवद्भिश्च बन्दिभिः ॥ ४३४ ॥
आनन्दाद्वैतसंनद्धैरमरैरमराग्रणीः।
अभिषिक्तः सुखैः सार्धं मेघैर्मेरुरिवाम्बुभिः ॥ ४३५ ॥ (युग्मम्)
उत्थाय वाचयामास ततः प्रशस्तपुस्तकम्।
आत्मकृत्यं च जज्ञेऽसौ गुरूक्तामिव तत्त्वधीः ॥ ४३६ ॥
गत्वा सिद्धालयेऽथासौ सुमनोभिर्मनोहरैः।
प्रतिमाः पूजयामास शाश्वतीः पुण्यपुण्यधीः ॥ ४३७ ॥
इति प्रकृत्य कृत्यानि कृत्यानि कृतिनां वरः।
अभुङ्क्त विविधान् भागान् धर्म्मद्रुमसंनिभान् ॥ ४३८ ॥
अथ कुर्कुटसर्प्पोऽपि पर्यटन्नटवीतटे।
अमारयद् बहून् जीवान् कालरात्रेरिवात्मजः ॥ ४३९ ॥
भूरिभिर्वासरैर्भूरिपापभारेण भारितः।
मृत्वाऽधोगतिभाग् जज्ञे सोऽश्मखण्डमिवाम्बुधौ ॥ ४४० ॥
रौद्रध्यानपरः कृष्णलेश्यालिप्तमन स्थितिः।
क्षुत्तृषाशीततपोत्थपीडानामेकमास्पदम् ॥ ४४१ ॥
पञ्चमक्षोणिगः सप्तदशवारिनिधिस्थितिः।
पञ्चभावनियोग्याश्च वेदना अन्वभूदसौ ॥ ४४२ ॥ (युग्मम्)
वरुणा हस्तिनी हस्तिवियोगादतिखेदभाक्।
दुःखिताऽजनि तत्रैकस्थल उसेव पद्मिनी ॥ ४४३ ॥
व्यधाद् विशेषतः साऽपि तपः पत्युर्वियोगतः।
मरणे रमणानां हि रमणीनां तपः श्रिये ॥ ४४४ ॥
दुस्तपं च तपस्तप्त्वा कृत्वान्तेऽनशनं पुनः।

ययावीशानकल्पेऽथ दुरापे सा करेणुका ॥ ४४५ ॥
स्मितविस्मयविस्मेरदेवदृग्मृगवागुरा ।
तारुण्याऽगण्यलावण्यपुण्यपानीयकूपिका ॥ ४४६ ॥
तदोपपादशय्याया प्रादुरासीत् सुरी च सा ।
पयोनम्रपयोवाहसंपुटादिव ह्लादिनी ॥ ४४७ ॥
बिभ्रती वदनं वृत्त पुष्पचापमहीपतेः ।
प्रवेशायेव संपूर्णं कुम्भं काञ्चननिर्म्मितम् ॥ ४४८ ॥
पीवरोन्नतवक्षोजभारभुग्नवपुर्लता ।
चक्राकारनितम्बेनाऽभिभूततटिनीतटा ॥ ४४९ ॥
मध्यदेशं च बिभ्राणा कुलिशोदरसोदरम् ।
निर्गच्छदलकङ्केल्लिपल्लवाभकरक्रमा ॥ ४५० ॥
मृगारातिरवत्रस्तमृगशावविलोचना ।
भ्रुवोर्विभ्रममात्रेण भ्रामयन्ती सुपर्वणः ॥ ४५१ ॥
सा सुरी क्षोभयामास कटाक्षैर्निशितैः सुरान् ।
सेनेवानङ्गराजस्य बाणैस्रस्तजगत्त्रयैः ॥४५२॥ (पञ्चभिः कुलकम्)
तत्र कल्पे न कोऽप्यासीद् देवो देवशिरोमणिः ।
तां निभाल्य मनोजन्मबाणैर्भिन्नं न यन्मनः ॥ ४५३ ॥
ज्ञानाविज्ञातहस्तीन्द्रपूर्वस्नेहनिबन्धना ।
न सा व्यधाद् मनः स्वीयं कस्मिन्नप्यमरे वरे ॥ ४५४ ॥
गजजीवं विना क्वाऽपि सुरे नाप सुरी रतिम् ।
अर्हेऽन्यस्मिन् विना भातुं किमब्जिन्या भवेद्रतिः ? ॥ ४५५ ॥
दूरस्थमपि दन्तीन्द्रजीवदेवं प्रति द्रुतम् ।
अयस्कान्तमिवायस्कं धावति स्मामरीमनः ॥ ४५६ ॥
हस्तिजीवसुर सोऽपि हस्तिन्यामतिरागवान् ।
न हि क्वापि रतिं प्राप करीव मरुनीवृति ॥ ४५७ ॥
अथोपानेन विज्ञाय सुरीं तामतिरागिणीम् ।
सहस्रारेऽमुना निन्ये परिणीतेव साऽमरी ॥ ४५८ ॥
रूपातिशयशालित्वात् पूर्वप्रेमवशादपि ।
अमरीममरश्चक्रे तामन्तःपुरमण्डनम् ॥ ४५९ ॥
सुपर्वाऽसौ पपौ दृष्टिपुटैस्तद्रूपसंपदम् ।
शरदभ्रविनिर्मुक्तां चकोर इव चन्द्रिकाम् ॥४६०॥
मेनेऽनिमिषमुख्योऽसौ धन्यां स्वामनिमेषताम् ।

---

१ निपुर। २ कङ्केल्लि = अशोकवृक्ष ।

दृष्टिभ्यां यत् प्रियारूपं निर्विघ्नं पिवतो मम ॥४६१॥
अथैतौ दम्पती जातौ मिथः प्रेमातिरेकिणौ ।
पूर्वस्नेहे भवेत् स्नेहो विशेषाज्ज्ञानशालिनाम् ॥४६२॥
अथ नन्दीश्वरादीनां तीर्थानां यात्रया सुरः ।
दर्शनं द्योतयामास वह्नितप्त्येव काञ्चनम् ॥४६३॥
कदाचिच्छाश्वतीर्जैनीः प्रतिमाः प्रत्यपूजयत् ।
कदाचिदर्हतां जन्मोत्सवैरुत्साहमासदत् ॥
कदाचिदतिसंतुष्टः साधूनां पर्युपासनैः । ॥४६४॥
कदाचिच्छासनोन्नत्यामुन्नतिं मनसो व्यधात् ॥४६५॥
कदाचिन्नन्दनोद्याने चिक्रीड करिराजवत् ।
कदाचिद् मेरुचूलायां तस्थिवान् सुरशाखिवत् ॥ ४६६॥
कदाचिद् व्यचरद् व्योम्नि विमानस्थोऽशुमानिव ।
कदाचिदभ्रमद्भूमीमण्डले भूमिभूरिव ॥४६७॥
एवं देव्या तया सार्धं शर्माण्यनुभवन् सदा ।
भूयांसं गमयामास कालं सोऽमरपुंगवः ॥४६८॥
श्रीविश्वभूतिसुतकुञ्जरनिर्जरेश—
लीलाविलासललितो ललितार्थबन्धः ।
श्रीपार्श्वनाथचरिते त्रिभवस्वरूपः
सर्गः समाप्तिमगमत् प्रथमः प्रधीयान् ॥४६९॥

इतिश्री तपागच्छाधिराजभट्टारकसार्वभौमश्रीहीरविजयसूरिश्री-विजयसेनसूरिराज्ये समस्तसुविहितावतंसपण्डितकोटीकोटीरहीर पं० श्रीकमलविजयगणिशिष्य भुजिष्यग० हेमविजयगणिविरचिते श्रीपार्श्वनाथचरिते प्रथमः सर्गः समाप्तः ॥ छ ॥ श्री॥१॥

अर्हम्

# अथ द्वितीयः सर्गः

अथ पूर्वविदेहेऽस्ति सुकच्छविजयो महान् ।
धनकाञ्चनरत्नादिसंपदां निधिभूरिव ॥१॥
सन्ति सौख्यान्यसंख्यानि संततं यन्निवासिनाम् ।
स्वर्लोक इव कालस्य तुल्यत्वं यत्र सर्वदा ॥२॥
अस्ति तत्र धनैराढ्यो वैताढ्यो नाम पर्वतः ।
यस्मिन् निर्ग्रन्थनाथेन क्षमाधरतया स्थितम् ॥३॥
पञ्चाशत्पञ्चविंशतियोजनैः पृथुलोच्चकः ।
राजतो राजते यश्च यशःपुञ्ज इवार्हताम् ॥४॥
मेखलाभ्यामुभाभ्यां यः पार्श्वयोरुभयोर्व्यभात् ।
विस्तारिताभ्यां पक्षाभ्यां पक्षिराज इव स्थिरः ॥५॥
कूटैर्नवभिरुत्तुङ्गै रत्नराजिविराजितैः ।
यो रराज महाशैल उत्कटैर्मुकुटैरिव ॥६॥
योजनानां सहस्रे द्वे द्वे शते साधिके च यः ।
अभिव्याप्य स्थितः क्षोणिं शेषनाग इवापरः ॥ ७ ॥
यद्गुहागह्वरे सिद्धवध्व क्रीडन्त्यनेकशः ।
विस्मारयन्त्य सौधेषु रह केलि प्रकल्पिताम् ॥ ८ ॥
यद्गुहाद्वारमासीनो विद्याधरवधूजन ।
नागाद् निश्यपि वेश्म स्वं दिवाभ्रान्तिर्मणित्विषा ॥ ९ ॥
यद्गुहागह्वरागारे निषण्णं खेचरीजनम् ।
वीक्ष्याजग्मुर्विमानस्थसुरीभ्रान्त्या सुरा अपि ॥ १० ॥
भान्ति यस्योपरि प्रौढा रत्नकाञ्चनसानवः ।
संमुक्ताः सिद्धकन्याभिः क्रीडान्ते कन्दुका इव ॥ ११ ॥
दक्षिणोत्तरयोः श्रेण्यौ पुराणां यत्र राजतः ।
सौधर्मैशानयो स्वर्गिगेहयोरिव संस्थिती ॥ १२ ॥
तत्रास्ति निखिलक्षोणितलैकतिलकोपमा ।
तिलकेति पुरी रम्या स्वःपुरीवाययौ क्षितौ ॥ १३ ॥
उच्चैश्चैत्यास्थितैः कुम्भैर्भास्वरैर्भूरिभिर्भृशम् ।
संक्रान्तैर्गेहभूर्भाति स्वर्णाङ्कुरेव मेरुभूः ॥ १४ ॥
पतद्भिर्दामपुष्पौघैर्यूनामध्वनि गच्छताम् ।
यत्र भूर्भाति मन्दारपतत्पुष्पेव नान्दनी ॥ १५ ॥

वन्धकीनां प्रयान्तीनां त्रुटित्वा हारमौक्तिकैः ।
पतितैर्भाति यद्भूमिस्ताम्रपर्ण्या इवाणुजैः ॥ १६ ॥
वीक्ष्य यद्विपणिश्रेणिं मणिमाणिक्यमण्डिताम् ।
संलक्ष्यते इषच्छेषा रोहणाद्रेरधित्यका ॥ १७ ॥
प्रतापविद्युदा दग्धविपक्षवनगह्वरः ।
तत्र विद्युद्गतिर्नाम भूपो भूवरेश्वरः ॥ १८ ॥
यत्प्रतापस्य सूरस्य सामान्यमभिदध्महे ।
यदुद्गते रिपुस्त्रीहक्कैरवैर्मुकुलायितम् ॥ १९ ॥
यत्प्रतापातपस्योष्णदीप्तिदीप्तेर्महान्तरम् ।
निश्यानन्दस्तया तप्ते तत्तन्तेऽहर्निशं न हि ॥ २० ॥
राज्ञस्तस्याभवद्राज्ञी तिलकेत्यभिधानतः ।
यया लावण्यलीलाभिः स्त्रैणेषु तिलकायितम् ॥ २१ ॥
दृग्मुखाभ्यां जितौ जाने यस्या मृगमृगाङ्कौ ।
एकत्रीभूय यद् मन्त्रं कुर्वाते तज्जिगीषया ॥ २२ ॥
यन्मुखे विहिते चन्द्रं वृथा जानन् पयोजभूः ।
मषीपुञ्जं निचिक्षेप लक्ष्यलक्षणमन्तरे ॥ २३ ॥
सोऽथ विद्युद्गतिर्भूपः सा राज्ञी तिलकावती ।
मिथस्तयोरभूत् प्रेम गौरीगौरीशयोरिव ॥ २४ ॥
नम्रानेकमहीपालमौलिमालार्चितक्रमः ।
बुभुजे भूपतिर्भोगांस्तया सार्धमहर्निशम् ॥ २५ ॥
विलासैर्ललितैर्लास्यैर्हास्यैश्च भूरिभिः सदा ।
सा भर्तो रञ्जयामास राज्यश्रीरिव भूभुजः ॥ २६ ॥
एवं सुखमहाशाखिशाखाशाखामृगोपमौ ।
कालं लवमिवानल्पमित्यवाहयतामिमौ ॥ २७ ॥
इतः करटिकोटीरजीवः सोऽष्टमकल्पगः ।
स्वीयायुः पूरयामास भानुमानिव वासरम् ॥ २८ ॥
पक्वपर्णमिव च्युत्वा ततः सोऽवातरत् सुरः ।
कुक्षौ श्रीतिलकावत्या मुक्तावच्छुक्तिसंपुटे ॥ २९ ॥
अद्राक्षीत् पद्मपत्राक्षी स्वप्नं साऽस्वप्नसूचितम् ।
गर्भानुभावतः स्वप्ना अपि स्युः शुभशंसिनः ॥ ३० ॥
मेरुभूरिव मन्दारप्ररोहं प्रतिबिभ्रती¹ ।
तं गर्भं साऽभवद्भूमीभर्तुः प्रेम्णो महीयसे ॥ ३१ ॥

---

१ अस्वप्न = देव. ।

देवी सा समये दिव्यासंख्यलक्षणलक्षितम्।
सुखेन सुषुवे सूनुं पूर्णेन्दुमिव पूर्णिमा ॥ ३२ ॥
सुधापानोपमं श्रुत्यो श्रुत्वा जन्माङ्गजन्मनः।
कृतकृत्य इवात्यन्तं मुमुदे मेदिनीधनः ॥ ३३ ॥
चक्रे महोत्सवं सूनोरनूनं खेचरेश्वरः।
जनने तादृशां यस्मादुत्सवानामतुच्छता ॥ ३४ ॥
उत्सवैरुद्रहस्यास्य किरणवेग इत्यसौ।
अभ्यधादभिधां भूपो मुदां मन्त्रमिवादिमम् ॥३५॥
धात्रीभिर्वृद्धिधात्रीभिर्लाल्यमानः क्रमेण च।
स वृद्धिं कलयामास कलावानिव बालकः ॥ ३६ ॥
अङ्कादङ्कं हंस इव पङ्कजात् पङ्कजं व्रजन्।
उज्झांचकार स क्षीरकण्ठतां शठतामिव ॥ ३७ ॥
उपोपाध्यायमानिन्येऽन्येद्युरेष क्षमाभुजा।
तस्माद्विद्यां ललौ न्यासीकृता इव कृती च सः ॥ ३८ ॥
कुलक्रमागता विद्याः प्रज्ञप्तिप्रमुखाः पुनः।
विनेयायेवोपाध्यायो नृपोऽप्यस्मै ददौ तदा ॥ ३९ ॥
तं वीक्ष्य यौवनारूढं स्मरराजमिवापरम्।
निखिला अपि खेचर्यस्तन्मय्य इव जज्ञिरे ॥ ४० ॥
पित्रा पद्मावतीनाम्नीं कन्यां लावण्यशालिनीम्।
सद्वंशसरसीहंसीमुदवाहि निजोद्वह ॥ ४१ ॥
पद्मयेव पद्मनाभ पद्मावत्या तया समम्।
रेमे विषयपाथोधिपाठीनः पार्थिवात्मज ॥ ४२ ॥
स्वराज्यकुञ्जरालानं निभाल्य निजमङ्गजम्।
विद्युद्गतिर्नृपो दध्यौ संवरप्रवराशयः ॥ ४३ ॥
यमलेख इवायाते वार्द्धिके पलिताक्षरे।
ये हितं नानुतिष्ठन्ति मूर्खमुख्या हि तेऽखिलाः ॥ ४४ ॥
वार्द्धिकेऽस्मिन् समायाते वीर्यहानिविधायिनि।
नात्र धर्मं विधास्ये चेत् तदाहमपि दुर्मतिः ॥ ४५ ॥
एवं संवेगरङ्गेण रञ्जितः खेचराधिपः।
उत्सवैर्निदधे राज्ये पुत्रं बिम्बमिवात्मन ॥ ४६ ॥
श्रुतसागरसूरीणामभ्यर्णे भूमिवल्लभः।
स्वयं संयमसाम्राज्यमाददे जन्मन फलम् ॥ ४७ ॥
विद्युद्गतिसुतः सोऽथ पदं संप्राप्य पैत्रिकम्।

लोकानावर्जयामास गुणै स्वैरिव मार्गणान् ॥ ४८ ॥
परिणिन्येऽमुना नीतिर्मुश्चता करपीडनम् ।
अतश्चित्रावहा कीर्त्तिः प्रासरत् पृथिवीभुज. ॥ ४९ ॥
वैताढ्याधित्यकासूच्चैः खेचर्यो रासकेलिषु ।
गायन्ति यद्यशः पुण्यपुण्यपानीयनीरधेः ॥ ५० ॥
सुखं सांसारिकं सोऽथ भुञ्जानोऽपि विरक्तधीः ।
न बबन्ध मनः क्वापि वारनारीव सर्वदा ॥ ५१ ॥
अर्थकामाविमौ धर्मपरिध्वंसकरावपि ।
तस्य धर्ममयौ जातौ तादृशां शक्तिरद्भुता ॥ ५२ ॥
अन्यदा तत्प्रिया पद्मावती प्रासूत नन्दनम् ।
पित्रा किरणतेजाश्चेत्यभिधा विदधे शिशो. ॥ ५३ ॥
कनचंक्रमणप्रह्वः पित्रोरानन्दमन्दिरम् ।
अवर्धिष्ट क्रमाच्छावः सिंहशाव इवोद्धुरः ॥ ५४ ॥
लब्धविद्यः क्रमेणैप पितेवाऽजनि दुर्धरः ।
किं चित्रं केसरिस्फूर्त्तिं लभेद् यत् केसरिप्रसूः ? ॥ ५५ ॥
एवं किरणवेगः स राज्यमेकातपत्रकम् ।
कुर्वाण' शुशुभे भूमौ नभसीव नभोमणिः ॥ ५६ ॥
अन्येद्युस्तत्पुरोद्याने जंगमः कल्पपादप. ।
गुरु. सुरगुरुर्नाम्नाऽभ्यगात् सुरगुरूपमः ॥ ५७ ॥
उपोपवनमायातं मूर्तं धर्म्ममिवार्हतम् ।
राजा किरणवेगस्त ययौ वन्दितुमादरात् ॥ ५८ ॥
सर्वशृङ्गारभृङ्गारा नागरा नागरीवृताः ।
ययुस्तं वन्दितुं साधुं न्यषदंश्च यथोचितम् ॥ ५९ ॥
ततः कारुण्यपाथोधिः सत्त्वानुग्रहकारिणीम् ।
भवाम्भोधितरीदेश्यां देशनां व्यतरद् मुनिः ॥६०॥
धर्मः कार्मणनिर्म्माणं श्रियां स्वर्गापवर्गयोः ।
यदा तदिच्छवो भव्या ! यतध्वं तत्कृते तदा ॥६१॥
कर्म्मधर्म्मसुधास्फूर्त्यो धर्म्मदेशनयानया ।
मुमुदे जनताऽतुल्यकुल्ययेव वनस्थली ॥६२॥
राजा पि धर्ममाकर्ण्य धर्मात्मा तन्मुनेर्मुखात् ।
संवेगमतुलं भेजे श्रुतेः साफल्यसूचकम् ॥६३॥
गृहागतः स किरणवेगः संवेगवेगवान् ।
राज्यभारं सुतस्यादाद् धुर्यस्येवोद्धुरां धुराम् ॥६४॥

प्राव्राजीत् त्यक्तराज्यः स पार्श्वे सुरगुरोर्गुरोः ।
यतो विदिततत्त्वानां सत्त्वानां स्थितिरीदृशी ॥६५॥
ग्रहणासेवनाशिक्षां गृह्णन् स्थविरसंनिधौ ।
अप्रमत्तः स सिद्धान्तमपाठीदशठाशयः ॥६६॥
भालं तिलकयन् नित्यं गुरुपादाब्जपांशुभिः ।
गीतार्थश्च क्षमाजज्ञे सिद्धान्ताम्भोधिकुम्भभूः ॥६७॥
अथान्येद्युरनुज्ञाप्य गुरुमेकः स साधुराट् ।
पुष्करद्वीपमगमत् पक्षिवद् व्योममार्गगः ॥६८॥
विद्याढ्यैः खेचरैराढये वैताढ्ये तत्र सोऽगमत् ।
निनंसुः प्रतिमा जैनीः शाश्वतीः शाश्वतश्रिये ॥६९॥
तत्राऽर्हतः प्रणम्यैष हेमाद्रौ तत्समीपगे ।
तत्पाद इव निष्कम्पस्तस्थौ प्रतिमया मुनिः ॥७०॥
कर्मक्लेशविनाशाय सहमानः परीषहान् ।
धर्मासक्तिं भजंश्चित्ते मालतीमिव षट्पदः ॥७१॥
मनोवाक्तनुसंपन्नां दधद् बुद्धिं त्रिधाऽपि हि ।
ज्ञानदर्शनचारित्रबीजाङ्कुरमिवाऽपरम् ॥७२॥
कुर्वाणश्चार्हदादीनां पञ्चानां हृदि संस्तवम् ।
ज्ञानानां मतिमुख्यानां मूलमारोपयन्निव ॥७३॥
अहौ हारे तृणे स्त्रैणेऽरण्ये सौधे समन्मनाः ।
तत्रैष गमयामास समयान् समयार्थवित् ॥७४॥ (चतुर्भिः कलापकम्)
इतः कुर्कुटजीवः स श्वभ्राद् निर्गत्य पञ्चमात् ।
यियासुरिव तत्रैव सर्पयोनिमशिश्रयत् ॥७५॥
तत्रैव हेमशैलस्य गहने क्वापि गह्वरे ।
सोऽपि सर्पोऽभवत् सर्पन् पविः प्रेतपतेरिव ॥७६॥
कालिन्दीकज्जलाभोगभोगः खड्ग इवाऽऽन्तकः ।
दधज् जिह्वाद्वयं दीर्घं दीर्घपृष्ठाविवापरौ ॥७७॥
प्रवालमिव कोपद्रोर्दधद्रक्तं दृशोर्युगम् ।
धूमोर्णायां इव दर्वी दर्वीं कुर्वंस्तथोद्भटाम् ॥७८॥
फूत्कारपवनोल्काभिर्ज्वालितानल्पपादपः ।
ससर्प सर्पस्तत्रैष संहार इव मूर्त्तिमान् ॥७९॥ (त्रिभिर्विशेषकम्)
चण्डो दण्डधरस्येव दोर्दण्डः प्राणिसंहृतौ ।
न्यभालयद् भुजङ्गः स भ्रमंस्तं भिक्षुभूषणम् ॥८०॥

---

१ धूमोर्णा=यमपत्नी । २ दर्वी=सर्पस्फटा कम्बिश्च ।

धर्मध्याननिधावस्मिन् निध्याते साधुधूर्वहे ।
निखातमुखखानैष रोषराशिं भुजङ्गमः ॥८१॥
प्राग्भवाभ्यस्तवैरः स भोगी भोगेन भिक्षुकम् ।
वेष्टयामास दुष्टात्मा प्रकाण्डमिव चान्दनम् ॥८२॥
कुण्डलीकृतकायेन तेन कुण्डलिना तदा ।
वेष्टित संयमी शातकुम्भकुम्भ इव व्यभात् ॥८३॥
दर्वीं दर्वीकरो दीर्घां दीर्घनिद्राविधायिनीम् ।
विधाय यतिनः कायं फूत्करोति स नि:समम् ॥८४॥
जिह्वाभ्यामेष प्रह्वाभ्यां तं मुनिं प्रतिमाधरम् ।
अलीलिहल्लेलिहानस्तदायुः स्वादयन्निव ॥८५॥
उद्भटेन फटेनाहिर्मारयामास तं यतिम् ।
सुतं निर्गमितद्रव्यं स पितेव चपेटया ॥८६॥
विषराशिभिराशीभिरेष आशीविषो रुषा ।
अदशत् साधुधौरेयं श्वभ्रे गन्तुमिवोत्सुकः ॥८७॥
तेन प्रसर्पता सर्पविषेणाक्रमितं वपु. ।
ज्ञात्वा विज्ञजनाधीशो ध्यातवानिति साधुराट् ॥८८॥
शल्योद्धारकृते च्छेदकारितुल्योऽहिरेष मे ।
एतद्दंशार्त्तिरेषा यत् सोढा प्रौढाय शर्मणे ॥८९॥
धीरेणापि ह्यधीरेण मर्तव्यं बत जन्मिना ।
परत्र शर्मणे धैर्यमधैर्यं स्यादशर्मणे ॥९०॥
दशति दंदशूकेऽस्मिन् साममेवोचितं मम ।
स्तोतर्यऽस्तोतरि स्वान्तं तुल्यं नि श्रेयसश्रिये ॥९१॥
शमसंयमशीलादिपालनात् कर्मणां क्षयः ।
एतत्पीडैव तं कुर्यात् सर्पोऽसावुपकारकृत् ॥९२॥
एवं साम्यसुधासिक्तधर्मध्यानधरारुहः ।
क्रियाऽऽन्तिक्यऽस्फुरत् तस्य व्रतद्रोरिव मञ्जरी ॥९३॥
आलोच्य विधिवत् पापं भजन् साम्यं च जन्तुषु ।
व्यधादनशनं साधुर्धर्मसौधध्वजोपमम् ॥९४॥
ध्यायंश्चानित्यतां चित्ते स्मरन् पञ्चनमस्कृतिम् ।
विपद्यैष ययौ कल्पमच्युतानन्दमच्युतम् ॥९५॥
दीप्तिमानिव दीप्तानां दीप्तीनामेकमास्पदम् ।
सर्वावयवसुभगः स्रष्टुः शिल्पमिवादिमम् ॥९६॥
भूषितो भूषणैर्भव्यै. शोभितः पुष्पदामभिः ।

यौवनालङ्कृतो देवदूष्यवासोविराजितः ॥९७॥
वृत्तं जम्बूद्रुमावर्तं विमानं सर्वतः शुभम् ।
दीप्तिभिर्द्योतयन्नुच्चै. प्रदीप इव मन्दिरम् ॥९८॥
द्वाविंशत्यम्बुराश्यायुरच्युतेन्द्र इवापरः ।
सोऽभूज्जम्बूद्रुमावर्तविमानाधीश्वरः सुरः ॥९९॥
(चतुर्भिः कलापकम्)
सेव्यमानक्रमाम्भोजः संनम्रामरकोटिभिः ।
गीयमानगुणग्राम. सोत्कण्ठममरीजनैः ॥१००॥
वन्दिभि सुन्दरारावैः स्तूयमान पदे पदे ।
सम्यक्त्वोद्भावनां कुर्वन्ननैषीत् समयानसौ ॥१०१॥ (युग्मम्)
प्राणिनां प्रालयः काल इवातिप्रलयं सृजन् ।
रूपिवात्ताघसंघातं बिभ्रत् कालत्वदम्भतः ॥१०२॥
आशीविषो विषोद्गारान् फूत्कारव्याजतो वमन् ।
पर्यटद् गिरिकूटके कृतान्तस्येव किंकर. ॥१०३॥ (युग्मम्)
सत्त्वानां करुणाध्यानस्नेहसेकादिबाधिकः ।
दावाग्निरन्यदा तत्र हेमाद्रावुदपद्यत ॥१०४॥
ज्वालाभिरुच्छलन्तीभिर्विद्युद्भिरिव लाञ्छितः ।
धूमोऽपि व्यानशे धूम्रो धरोत्थ इव वारिदः ॥१०५॥
कारस्करत्रटत्कारैः कन्दरान् रोदयन्निव ।
स्फुलिङ्गैरुच्छलद्भिश्च तारकान् नोदयन्निव ॥१०६॥
धूसरैर्धूमसंदोहैरन्धयन्निव भूतलम् ।
प्रासीसरद् वने तत्र दावाग्निः कालरात्रिवत् ॥१०७॥
आकृष्ट इवर्षिघातपापपाशेन पापदृक् ।
सर्पजितस्ततः सर्पो दावाग्नौ तत्र सोऽपतत् ॥१०८॥
दग्धोऽसौ पन्नगस्तत्र कृष्णात्मा कृष्णवर्त्मना ।
ययौ धूमप्रभां धूमप्रभां तां संस्मरन्निव ॥१०९॥
स्वयमुप्तां च यातनां भुञ्जानो भूरिशोऽनिशम् ।
तस्थौ सप्तदशाब्ध्यायुस्तत्रासौ दु:खमावहन् ॥११०॥
अथास्ति जम्बूद्वीपेऽस्मिन् प्रत्यग्विदेहभूषणम् ।
सुगन्धिनामा विजयः श्रियामेकनिकेतनम् ॥१११॥
अस्ति तत्र जगल्लोकलोचनानां शुभंकरा ।
सुगन्धिविजयांत्तस्यमण्डनं पू. शुभंकरा ॥११२॥
यत्र प्रोत्तुङ्गप्रासादश्रेणी राजति हारिणी ।

सुखारोहेव निःश्रेणिः स्वर्गापवर्गवेश्मनोः ॥११३॥
हित्वा याम्योदक्पथाभ्यां यत्पुरं याति भानुमान् ।
प्रासादोत्तुङ्गशृङ्गाग्रे रथभङ्गभयादिव ॥११४॥
यत्र रत्नमये चैत्यकुट्टिमे विम्बितः शशी ।
राजते राजतस्थालमिव कस्तूरिकान्वितम् ॥११५॥
यच्चैत्यशृङ्गकलशश्रेणीभिर्निर्जिता घटाः ।
कुम्भिकुम्भेषु कतिचित् कतिचित्स्त्रीकुचेष्वगुः ॥११६॥
यदारामाभिरामश्री-वसन्तसमयावुभौ ।
दम्पती इव शोभेते यन्नित्यमवियोगिनौ ॥११७॥
वज्रिवीर्योऽभवद् वज्रवीर्याख्यस्तत्र भूपतिः ।
वैर्यद्रौ वज्रिवज्रवत्प्रदण्डश्चण्डशासनः ॥११८॥
यत्कीर्त्तिपद्मिनी व्योम्नि प्रससार शरत्प्रभा ।
यस्याः पुष्पाणि तारालो कोशः पूर्णेन्दुमण्डलम् ॥११९॥
यत्प्रतापः प्रदीप्रात्मा प्रदीपक इव व्यभात् ।
प्लुष्टेष्वरिपतङ्गेष्वञ्जनं वैर्ययशोऽजनि ॥१२०॥
तस्याजनि महीजानेर्जाया मायाविवर्जिता ।
यथा लक्ष्मीपतेर्लक्ष्मी नाम्ना लक्ष्मीवती सती ॥१२१॥
यद्रूपं द्रष्टुमाधाय्यनिमेषैरनिमेषता ।
अविघ्नकाङ्क्षिणः सर्वे सदर्थे यदनुष्ठिते ॥१२२॥
शोणितैः पाणिपादोष्ठपुटैर्भाति स्म या भृशम् ।
दलैर्विदलितै रक्ताम्भोजिनीव सुकोमलैः ॥१२३॥
यदास्यस्याकलङ्कस्य सदैवोदयिनो न हि ।
हीयमानकलस्याङ्ककालस्येन्दोः समानता ॥१२४॥
सत्यप्यन्तःपुरे पत्युः सैव चेतोऽन्तरेऽविशत् ।
यतस्तारास्वनल्पासु रोहिण्येव विधोर्हृदि ॥१२५॥
दम्पत्योः सुखनिर्मग्नमनसोरनयोर्बहुः ।
समयोऽगमदेकान्तसुषमारसहोदरः ॥१२६॥
इत कन्दर्पदर्पैककेलिविह्वलबुद्धिभिः ।
नानाशृङ्गाररचनाचतुराशयचारुभिः ॥१२७॥
संक्रान्तकान्तरागाभिरङ्गसङ्गैर्निरन्तरम् ।
सुखं वैषयिकं चेतःसंक्रमादेव भेजुषः ॥१२८॥
पूर्णीबभूव किरणवेगजीवसुपर्वणः ।
आयुस्तस्याच्युते कल्पे भूमिः सायं रवेरिव ॥१२९॥त्रिभिर्विशेषकम्

ततश्च्युत्वा स गीर्वाण उदियाय मरालवत् ।
राज्ञीलक्ष्मीवतीकुक्षिसरसीसरसीरुहे ॥१३०॥
ईषन्निद्राविमुद्राक्षी साऽद्राक्षीत् स्वप्नमुत्तमम् ।
भुवोऽन्तर्मणिवद् गर्भस्तत्कुक्षौ ववृधे च सः ॥१३१॥
वज्रवीर्यकुलाकाशप्रकाशविधिधूर्वहम् ।
रविबिम्बमिव प्राची साऽसूत सुतमुत्तमम् ॥१३२॥
कृतोत्सवो धराधीशस्तनोस्तस्य शुभेऽहनि ।
वज्रनाभ इति ख्यातामाख्यामाख्यत् सुखावहाम् ॥१३३॥
शशीव कलयामास स क्रमात् सकलाः कलाः ।
निदर्शनमिवाज्ञानाद् विदुस्तु जनकोऽप्यमुम् ॥१३४॥
तमालिलिङ्ग तारुण्यावस्था वल्लीव शाखिनम् ।
सुवर्णं मणिवत् तस्मिंस्तारुण्यमपि दीप्तवत् ॥१३५॥
तारुण्यं तस्य निर्वर्ण्य वार्णिनीवर्गलोचनैः ।
निपेते निर्भरं तस्मिन् सरोजे भ्रमरैरिव ॥१३६॥
यौवनालङ्कृतः क्ष्मापनन्दनो जननन्दनः ।
आक्रीडादौ स सव्रीडश्चिक्रीड द्वीपपोतवत् ॥१३७॥
इतोऽजनि जनपदो वङ्काह्वश्चक्रिमाश्रयः ।
यज्जना विजयानन्दाः स्वर्जना इव जज्ञिरे ॥१३८॥
तत्राभूच्चन्द्रवत् कान्तश्चन्द्रकान्तोऽवनीपति ।
यत्कीर्तिश्चन्द्रिकेवाभूत् कुमुदौत्सुक्यवत्सला ॥१३९॥
जयन्तीं जयन्ती स्वीयवपुर्लक्ष्म्या अजायत ।
विजयाह्वा सुता तस्य कमलेव पयोनिधेः ॥१४०॥
यौवनालङ्कृतांगी च यूनां चेत क्षणादपि ।
जहार नृपपुत्री सा, योषितां नेदमद्भुतम् ॥१४१॥
वीक्ष्यैनां यौवनारूढां भुवो वोढा व्यचिन्तयत् ।
सुतैषाऽजनि निःशेषयोषितां मुखभूषणम् ॥१४२॥
तदेनां वितरिष्यामि कस्मै राजाङ्गजन्मने ।
संयोगः श्लाघ्यते रत्नस्वर्णयोरेव धीधनैः ॥१४३॥
पुत्रीचिन्ताब्धिनिर्मग्नो वज्रवीर्यनृपात्मजम् ।
सोऽश्रौषीत् सुभगोत्तंसं रूपश्रीजितमन्मथम् ॥१४४॥
तस्मै दातुं निजां पुत्रीं स्त्रीरत्नमिव चक्रिणे ।
आययौ चन्द्रकान्तः स नगरीं तां शुभकराम् ॥१४५॥

१ लघुवयसः । २ इन्द्रपुत्रीम् ।

स्वयंवरां वराङ्गीं तां पित्रादिष्टः शुभे क्षणे ।
उपयेमे वज्रनाभः पद्मनाभ इव श्रियम् ॥१४६॥
विजया तं पतिं प्राप्य मेने स्वात्मानमुत्तमम् ।
तादृक्पुंरत्नसंयोगे प्रमोदः प्रगुणीभवेत् ॥१४७॥
कुबेराख्योऽन्यदा वज्रनाभमातुलनन्दनः ।
न्यत्कृतो जनकेनागाद् वज्रनाभस्य संनिधौ ॥१४८॥
परलोकात्ममोक्षादि नास्तित्वेन विदन् हृदि ।
नास्तिकोऽसौ कुबेरस्तं कुमारमन्ववर्तत ॥१४९॥
धर्मं शर्ममयं कुर्वन्नित्यूचे तेन भूपभूः ।
किं वृथा कुरुषे धर्मं पाथसामिव मन्थनम् ? ॥१५०॥
शिरीषसुकुमारं स्वं शरीरं भोगभाजनम् ।
मा ज्वालय महाकष्टैः श्रीखण्डमिव पावकैः ॥१५१॥
मृगीदृगङ्गकौशेयतलिकाभ्यङ्गमज्जनैः ।
फलैरेभिः सफलय स्पर्शनेन्द्रियमात्मनः ॥१५२॥
स्वादुभिर्दधिदुग्धान्नपानप्रमुखभोजनैः ।
फलं भुङ्क्ष्व रसज्ञायाः फलैरेभिः सुदुर्लभैः ॥१५३॥
कुन्दचम्पककङ्केल्लिमालतीसुमनःस्रजाम् ।
सफलीकुरु सौरभ्यैरिन्द्रियं घ्राणसंज्ञकम् ॥१५४॥
नेत्रोरुमुखवक्षोजाधराङ्घ्रिकरविभ्रमान् ।
एणीदृशां निभाल्यैतान् स्वनेत्रे सफलीकुरु ॥१५५॥
वेणुवीणाकलालापमृदङ्गमधुरैः स्वरैः ।
श्रुत्योः फलं गृहाणेदं फलैरेभिर्महामते ! ॥१५६॥
स्वैरं प्राप्तान् सखे ! भुङ्क्ष्व विषयान् विषयेप्सितान् ।
पीयूषन्ति हि तारुण्ये विषया विषयैषिणाम् ॥१५७॥
शर्मैहिकं त्यजन् प्रेत्यसुखेच्छुः खेदमेष्यसि ।
स्तोकमम्भो विहायैणतृष्णया धाविताङ्कवत् ॥१५८॥
कुमार ! सुकुमाराङ्ग ! मुधा ते मानुषं जनुः ।
यदेतान् दुर्लभान् भोगान् न भुङ्क्षेऽन्नमिव ज्वरी ॥१५९॥
श्रुत्वेति नास्तिकस्यास्यात्यद्भुतं वचनं चिरम् ।
कृतमौनो महात्माऽसौ चिन्तयामास चेतसि ॥१६०॥
नास्त्यसौ समयो नूनममुना सह जल्पने ।
मर्मज्ञानं विना न स्याच्चिकित्सा कल्पकारिणी ॥१६१॥
मर्मवेत्तुः कुतोऽप्येनं बोधयिष्याम्यहं गुरोः ।

शक्यन्ते न विना वैद्यैरुच्छेत्तुं रोगिणां रुजः ॥१६२॥
ध्यात्वेति पृथिवीनाथपुत्रः साधुसमागमम् ।
चप्पीह इव पाथोदागमं ध्यायंश्च तस्थिवान् ॥१६३॥
अन्येद्युर्बहिरुद्याने लोकचन्द्राभिधो गुरुः ।
आनीत इव तत्पुण्यै रागाद् धर्म इवाङ्गवान् ॥१६४॥
सूरेस्तस्यागमोदन्ताज्जनता तन्निवासिनी
निर्वृतिं परमां प्राप सतीव पतिदर्शनात् ॥१६५॥
निशम्य गुरुमायातं कुमारो मुदमाप च ।
चिन्तितार्थे हि निष्पन्ने हर्षोऽप्युत्कर्षतां व्रजेत् ॥१६६॥
कुबेरस्त्रपया तस्य राजसूश्च स्वभक्तितः ।
मुनिं नन्तुमितौ तौ द्वौ तमःसत्त्वगुणाविव ॥१६७॥
सदःकुमुदिनीचन्द्रं लोकचन्द्रं महामुनिम् ।
भूपभूर्भावतोऽनंसीत् कुबेरस्तस्य लज्जया ॥१६८॥
तेषु सत्सु सभासत्सु निषण्णेषु यथोचितम् ।
(प्रारेभे देशनां साधुः प्रशमामृतनिर्झराम् ॥१६९॥
इह स्वभावस्वच्छोऽपि चेतनश्चेतनात्मकः ।
कारक पुण्यपापानां भोक्ता स्वकृतकर्मणाम् ॥१७०॥
कर्ममलावृतो नित्यमेति दुःखं भवे भ्रमन् ।
तन्निवृत्तिचकीर्षा चेद् यतध्वं पुण्यकर्मणि ?) ॥१७१॥
श्रुत्वेत्यात्ममतध्वंसी कुबेरोऽवक् तंपरिवनम् ।
वियत्पुष्पमिवात्मेव तावन्नास्त्येव भिक्षुक ! ॥१७२॥
भूम्यऽप्तेजोमरुद्व्योम्नः प्रादुर्भवति चेतना ।
नष्टेष्वेतेषु साप्यभ्रपटलीव विलीयते ॥१७३॥
यदात्मा प्रेत्य गन्तेति तद्वचोऽप्यसमञ्जसम् ।
तदभावाद् विना मातापितृभ्यां न सुतोद्भवः ॥१७४॥
पृथग् नास्ति शरीरेऽपि शरीरीह शरीरिणाम् ।
प्रयाति परलोके कः परित्यज्य वपुस्तदा ? ॥१७५॥
वन्ध्यासूनुरिव प्रेत्यगतिस्तस्मादशङ्कितम् ।
निषेव्या विषया नित्यं भोगिभिर्भोगभासुरैः ॥१७६॥
यदुक्तं चेतनात्मात्मा सापि नात्मगुणो भवेत् ।
यत सा भूतसम्भूता तद्विनाशे विनश्यति ॥१७७॥
यदुक्तमात्मा कर्तेति धर्माऽधर्मविधेर्न तत् ।
तत्फलाभावतो नेह तौ स्त. खरविषाणवत् ॥१७८॥

तपोभिर्दुस्तपैरात्मा भवद्भिः कृशितश्चिरम् ।
तत्फलं चेद्‌ह चेत् तर्हि स्युर्वः साम्राज्यसम्पदः ॥१७९॥
हत्वाऽन्यप्राणिनां प्राणानस्माभिः पोष्यते वपुः ।
तत्फलं चेत् तदास्माकं रङ्कत्वमिह जायते ॥१८०॥
देवानामप्यलभ्ये यद् भालभागे च भूभुजाम् ।
मणिर्दर्पन्मयोऽप्यस्थात् पुण्यं तेनात्र किं कृतम् ? ॥१८१॥
उत्पन्नेऽपि शरीरेऽपि चारुचन्दनचर्चिते ।
मलोऽसौ त्यज्यते लोकैः पापं तेनात्र किं कृतम् ? ॥१८२॥
यदुक्तमयमात्मा स्वकृतभोक्ताऽत्र तन्मुधा ।
धर्मिणाऽधर्मिणा चात्र कृतं स्वं स्वं न दृश्यते ॥१८३॥
कृतानुसारतः प्राप्तिश्चेति यत् तदसंगतम् ।
कृतेन केनेन्द्रचापः प्राप सौन्दर्यमद्भुतम् ? ॥१८४॥
शुभाशुभं स्वं तन्मन्ये यत्प्रत्यक्षं, न चेतरत् ।
विमुच्योत्सङ्गं गर्भगतेहा नेह शोभना ॥१८५॥
अन्योऽप्यात्मनि यः कश्चिद् गुणारोपो मुधैव सः ।
तदभावात् तयोर्यस्मादाधाराधेयता स्मृता ॥१८६॥
गुरुरप्याह शान्तात्मा पीयूषसदृशा गिरा ।
भद्र ! निस्तन्द्र ! भद्राय शृणु स्वोक्तैः सदुत्तरम् ॥१८७॥
अध्यात्मज्ञानगम्योऽयमात्मा मान्यो मनीषिणा
सुखी दुःख्यस्म्यहं चैव प्रत्ययो जीवसूचकः ॥१८८॥
शरीरं मामकं चैतद् मतिरेषा वपुष्मताम् ।
कोऽपि देहान्तरे देही संभाव्यो देहभेदभाग् ॥१८९॥
देहे गेहे धने धान्ये द्विपदे च चतुष्पदे ।
विना नेतुर्न शक्नोति कर्तुमङ्गीकृतिं परः ॥१९०॥
विद्यते स्वशरीरे चेदात्माऽसौ सुखदुःखभाक् ।
परेषामपि कायेऽयं भविता श्रितविभ्रमः ॥१९१॥
संवेत्ता सुखदुःखानामात्मैवास्ति तनुर्न हि ।
यदभावे न शीतोष्णक्षुत्तृषां वेत्ति यत् तनुः ॥१९२॥
अस्त्यात्मनोऽस्य सद्भावे परलोकगतिर्ध्रुवम् ।
वस्तुनोऽपि विनष्टस्य पर्यायेण पुनर्जनिः ॥१९३॥
चेतनं चेतनाऽप्येति प्रेत्यात् कान्तिरिवारुणम् ।
मुखे क्षिपति वक्षोजमनुक्तोऽपि यतः शिशुः ॥१९४॥
अचेतनेभ्यो भूतेभ्यश्चेतना चेष्यते कथम् ।

यादृक्कारणसांकर्यं कार्यं भवति तादृशम् ॥१९५॥
शैशवे सैव तारुण्ये तारुण्ये सैव वार्द्धके ।
जन्तोर्भवान्तरेऽप्येवं चेतना सैव वर्तते ॥१९६॥
चेतना चेतनस्यैव गुणो नान्यस्य वस्तुनः ।
तयैवोन्मीयते सोऽयं धूमेनेव मरुत्सखा ॥१९७॥
यदुक्तं मणिमान्यत्वं त्याज्यत्वं मलवस्तुनः ।
तद्युक्तं, तयो सौख्याऽसौख्यवेत्तृत्वहानितः ॥१९८॥
कर्तृता भोक्तृता चैव वर्तते देहिनो ध्रुवम् ।
कृतानुसारतो भुङ्क्ते धर्माधर्मफलं हि सः ॥१९९॥
कर्पूरागरुकस्तूरीधूपधूपितविग्रहः ।
स्वैरं भ्रमति सौरभ्यपटीवैकोऽत्र यत् पुमान् ॥२००॥
भस्माभ्यङ्गसमालिङ्गिधूलिधोरणिधूसरः ।
यदेकः पशुवत् पांशुपात्रं पर्यटति क्षितौ ॥२०१॥
अङ्गनालिङ्गनानङ्गरङ्गचाङ्गिमसंगमः ।
यत् सुधाधामधामाभे सौधे स्वपिति चैककः ॥२०२॥
ऊर्ध्वीकृतनिजजानुजनितालिङ्गनश्रिरम् ।
लोलुठीति लुठल्लालो यदेकश्चोपरक्षितौ ॥२०३॥
रम्यां रसवतीं दिव्यस्वादां च सुखभक्षिकाम् ।
यदेकः स्वेच्छया भुङ्क्ते सुधामिव सुरार्पिताम् ॥२०४॥
गेहे गेहे भ्रमन् शश्वद् ब्रुवंश्चाटुशतानि च ।
न प्राप्नोति यदेकश्च भिक्षामप्यत्र नीरसाम् ॥२०५॥
दिव्याम्बरधरो भव्याभरणैः शरणीकृतः ।
यद् मनो हरते चैक कल्पशाखीव मूर्तिमान् ॥२०६॥
शीर्णजीर्णाम्बरोत्कीर्णपरिधान पिशाचवत् ।
यदेकः कुरुते द्वेपश्चक्षुषा वीक्षितः क्षणात् ॥२०७॥
कोकिलाकुलरोलम्बसंरावमुखरीकृते ।
वने निषण्णोऽमीषां यच्छृणोत्येकः कलध्वनिम् ॥२०८॥
व्यालवेतालशार्दूलशृगालकुलसंकुले ।
श्मशाने यत् स्थितश्चैकः शृणोत्येषां दुरारवान् ॥२०९॥
पाणिपादमुखाकारे समाने पुण्यपापयोः ।
पुंसोरेव महान् भेद आलोकध्वान्तयोरिव ॥२१०॥
निदानमयमात्मैव संसारशिवमूलयोः ।
कषायैश्च पराभूतः पराभूतकषायक ॥२११॥

कषायाः स्युः क्रोधमानमायालोभाभिधा अमी ।
चत्वार एव संसारदुर्गद्वारा इवोद्भटा. ॥२१२॥
रूपगन्धरसस्पर्शशब्दाख्या विषया अमी ।
कारणानि कषायाणां बीजानीवावनीरुहाम् ॥२१३॥
एकैकोऽपि विषयः ( स ? ) सर्वासक्त्या निषेवितः ।
महानर्थाय जायेत हालाहल इवाङ्गिनाम् ॥२१४॥
तस्माद् विषयमूलो यः संसारधरणीरुहः ।
तमाच्छेत्तुममी च्छेद्या यथाऽसौ नैव वर्धते ॥२१५॥
इत्यमुष्य गुरोर्वाचा तस्य मिथ्यात्वसंगतिः ।
द्रुतद्रुतं निर्जगाम रवेर्द्युत्येव शर्वरी ॥२१६॥
गुरुणोक्तमिदं तत्त्वं निर्वाणपथदर्शकम् ।
रुरुचेऽस्य कुबेरस्य निर्जरस्येव भोजनम् ॥२१७॥
भून्यस्तमस्तको भालसंलग्नकरकुड्मल. ।
जातश्रद्धः कुबेरः स पप्रच्छ प्रशमीश्वरम् ॥२१८॥
भगवन् ! केन मार्गेण प्राप्यते चापुनर्भवः ? ।
न तं विनेह शर्मास्ति विनाम्भोदं यथा कृषिः ॥२१९॥
परोपकारप्रवणः प्रवीणः पुण्यकर्मसु ।
सूरीशः कथयामास धर्मं शर्मैककारणम् ॥२२०॥
अर्हन् देवः कृपा धर्मो गुरवश्च मुमुक्षवः ।
धर्मोऽयमार्हतस्तत्त्वत्रयीरूपः सुखावहः ॥२२१॥
सूरिवा (क्कृत ?) कक्षोदनिर्मलीकृतहृज्जलः ।
कुबेरस्तमुपादत्त धर्मं बीजमिव श्रियाम् ॥२२२॥
चिरञ्जीव जगल्लोके सवारिरिव वारिदः ।
उज्जगार वचोगर्जिं धर्मोद्गारमिवापरम् ॥२२३॥
चिरञ्जीव जगल्लोकशोककोकहिमद्युते ! ।
सूरे ! दुर्द्रोहमोहाद्रिभिदैकभिदुरोपम ! ॥ २२४ ॥
त्वत्प्रसत्तेर्गुणागारानगारगणपुंगव ! ।
इत्यजानमहं धर्मं जात्यन्ध इव सत्पथम् ॥२२५॥
वचोभिर्विविधैरेवमभिष्टुत्य यतिप्रभुम् ।
प्राशंसत् पुनरप्येष वज्रवीर्यनृपात्मजम् ॥२२६॥
वज्रवीर्यमहीपालकुलमालैकभूषण ! ।
धर्मानुग्रहकारित्वात् त्वं मे बन्धुर्गुरुश्च मे ॥२२७॥
येनाहं बोधितो धर्ममुत्पश्य इव सत्पथम् ।

उपकारी स एवात्र यो दत्ते धर्ममार्हतम् ॥२२८॥
वज्रनाभोऽपि सूरीशसन्निधौ द्वादशव्रतीम् ।
अग्रहीद्नुसम्यक्त्वं तरीमिव भवाम्बुधेः ॥२२९॥
प्रणम्यैषोऽथ निर्ग्रन्थनाथं लक्ष्मीवतीसुतः ।
न्यवर्तत कुवेरेणानुगो दन्तीव दन्तिना ॥२३०॥
मुनिराजगुणग्राममानसोल्लासिमानसौ ।
राजहंसाविमौ चोक्षपक्षौ स्वं जग्मतुर्गृहम् ॥२३१॥
धर्मं देहमिवात्मीयं कुवेरस्तमपालयत् ।
प्रतिज्ञा हि सतां वज्रोत्कीर्णवर्णैकवर्णिका ॥२३२॥
मातापित्रोः पदाम्भोजे राजहंसत्वमाश्रयन् ।
धर्मं च विदधद् वज्रनाभोऽपि सुखमन्वभूत् ॥२३३॥
वज्रवीर्यनृपोऽन्येद्युर्वीक्ष्य पुत्रं धुरंधरम् ।
चिन्तयामास निर्विण्णः संसाराच्चारकादिव ॥२३४॥
सूनौ साम्राज्यधौरेये धर्तुं राज्यं न मेऽर्हति ।
सह्यते किं हि शीतार्तिः शीतत्राणपटे सति ? ॥ २३५ ॥
ध्यात्वेत्येष धराधीशो न्यधाद्राज्यं निजात्मजे ।
भवभङ्गाय जग्राह स्वयं दीक्षां च सत्क्रिया ॥२३६॥
पालयन् पृथिवीपालः पृथिवीं वज्रवीर्यभूः ।
चकासे तेजसामेकभाजनं भानुमानिव ॥२३७।
यत्प्रतापो रिपुस्त्रीणां श्यामयो. स्तनतुण्डयोः ।
अपीपतत् स्पर्धयेव तयोः साञ्जनमक्षि वा ॥२३८॥
संभग्नारातिहृत्कुम्भो यत्प्रतापोग्रमुद्गर. ।
फुल्लति स्म विना मूलं सिक्तो रिपुस्त्रीदृगम्बुभि ॥२३९॥
यत्प्रतापस्य यस्यासेः कलिरेवं च यन्मया ।
अनिद्रा विहिताऽरीणां दीर्घनिद्रा त्वया कृतः ? ॥२४०॥
प्रजा इव प्रजा रक्षन् नीतकालो महीपति ।
समाः स गमयामास पुरंदर इवापर. ॥२४१॥
राज्ञोऽस्य विजया राज्ञी प्रासूत सुतमन्यदा ।
अधित्यका काञ्चनाद्रेर्मन्दारद्रोरिवाङ्कुरम् ॥२४२॥
चक्रायुध इति क्ष्मापश्चक्रे नामाङ्गजन्मनः ।
अवर्धिष्ट क्रमात् सोऽपि मातापित्रोर्मुदा समम् ॥२४३॥
महीपतेरस्य सूरिवचोभिः सलिलैरिव ।
सिक्तः पुरा यः संवेगपादप' फुल्लति स्म स. ॥२४४॥

दध्यावित्येष भूभर्ता कैषा मोहविडम्बना ।
क्रियते विवशोऽवश्यं यया मत्त इवासुमान् ? ॥२४५॥
दर्शनस्पर्शनासङ्गालिङ्गनादिभिरङ्गनाः ।
हरन्ति सुकृतप्राणान् राक्षस्य इव देहिनाम् ॥२४६॥
मित्रपुत्रकलत्रेषु यः स्नेहो देहिनां महान् ।
ते बद्धा निगडेनेव तेन तिष्ठन्ति संसृतौ ॥२४७॥
निधानमिव समताशमशीलदमादिकम् ।
ह्रियते च प्रमत्तानामिन्द्रियैस्तस्करैरिव ॥२४८॥
एवं संवेगमारूढो वज्रनाभोऽवनीधन ।
अभाषिष्ट सुतं दीक्षां जिघृक्षुर्मोक्षसाक्षिणीम् ॥२४९॥
वत्सादत्स्व भुवो भारीमुक्षेव धुरमानसीम्[1] ।
कृतकृत्यो यथा स्वार्थे कृतेऽत्यर्थं भवाम्यहम् ॥२५१॥
एवं स विविधैर्वाक्यैः प्रतिबोध्य स्वमात्मजम् ।
राज्ये न्यस्य जयश्रीणामलंकर्मीणकार्मणम् ॥२५१॥
स्वयं संवेगकुशलः शम्बलं शिववर्त्मनः ।
व्रतं जग्राह स क्षेमंकरतीर्थकरान्तिके ॥२५२॥
गुरुक्रमाम्बुजोन्मुद्रमुद्रायां विभ्रताऽलिताम् ।
पेठिरे द्वादशाङ्गानि साङ्गानि मुनिनाऽमुना ॥२५३॥
षष्ठाष्टमादिभिर्भेदैश्च दुस्तपं तपतस्तपः ।
तस्याभूद् व्योमगामित्वं तपोद्रोरिव पल्लवः ॥२५४॥
अन्याश्च बह्वो लब्ध्यस्तस्यासंस्तपतस्तप. ।
यत् तपस्तपतां लब्ध्यः किंकर्य इव पृष्ठगाः ॥२५५॥
शान्तात्मा वज्रनाभर्षिः स्वशरीरेऽपि निःस्पृहः ।
स्वगुरोराज्ञयैकाकी प्रतिमां प्रतिपन्नवान् ॥२५६॥
अन्येद्युर्विहरन्नेष एकाकी प्रतिमाधुरः ।
सुकच्छविजयं प्रापदभिवन्दितुमर्हतः ॥२५७॥
संवन्दितार्हत्प्रतिमोऽप्रतिमः प्रगुणैर्गुणै. ।
विजह्रे व्याजनिर्मुक्तः सुकच्छविजयावनौ ॥२५८॥
इतश्चोरगजीवः स पञ्चमावनिसंभवम् ।
संवेद्य विविधं दुःखं ततो द्रागुदवर्तत ॥२५९॥
निर्गतः श्वभ्रत. श्वभ्रादभ्रपीडानुगानिव ।
तिर्यग्योनिषु बभ्राम स भवान् भूरिशो भ्रमी ॥२६०॥

१ अनस —शकटस्येयमानसी ।

भवे भ्रमन्नरण्यान्यां सार्थच्युत इवाध्वगः ।
सोऽभूद् भिल्लः कुरङ्गाङ्को ज्वलनाद्रौ सुकच्छगे ॥२६१॥
अत्यन्तश्यामलच्छायः कज्जलैरिव निर्मितः ।
कठोरतरनिष्काणो मूर्त्तिमानिव वायसः ॥२६२॥
पिङ्गलोत्खण्डचिकुरः सदावाग्निरिवाचलः ।
संभ्राम्यत्पिङ्गदृग्युग्मो मार्जार इव मूर्त्तिमान् ॥२६३॥
उपासितो भिल्लवृन्दैः प्रतिच्छन्दैरिवात्मनः ।
स बभ्रमे गिरौ तत्र यमस्येव सहोदरः ॥२६४॥ (त्रिभिर्विशेषकम्)
कुण्डलीकृतकोदण्डदण्डेनानेन पापिना ।
त्रास्यन्ते पशवोऽरण्ये कृतान्तेनेव देहिनः ॥२६५॥
स दृग्भ्यामुल्मुकाकारसदृग्भ्यां पशुनाशकृत् ।
अत्यन्तनिष्ठुरो जज्ञे घटितः पातकैरिव ॥२६६॥
यानाच्च स्थाननिध्यानाद् गाहनखननादिभिः ।
कुरङ्गः प्राणिनां प्राणान् स संहार इवाहरत् ॥२६७॥
सोऽन्यदा वज्रनाभर्षिः समदृग् मित्रशत्रुषु ।
ज्वलनाद्रावाजगाम जगामास्तं रविस्तदा ॥२६८॥
न गन्तव्यमितः स्थानाद् मया प्राणात्ययेऽपि हि ।
ध्यात्वेति धीरधीः साधुः कायोत्सर्गेण तस्थिवान् ॥२६९॥
वालरोलम्बकालिन्दीलोलकल्लोलसोदरैः ।
अन्धकारैर्जगद् व्याप्तं मषीपात्रमिवाजनि ॥२७०॥
करालव्यालवलयभूषणैरतिभीषणैः ।
स्पर्धयेवान्धकाराणां विचेरे शर्वरीचरैः ॥२७१॥
सम्पराभूतभूतानां भूतानामतिहुंततैः ।
तदा जगद्गृहं भीमं भयाद्वैतमिवाजनि ॥२७२॥
द्युतिद्योतितहृद्गृहं दीपं ज्ञानप्रदीपकम् ।
दधत् तस्थौ तदा निर्भी प्रतिमा प्रतिमाधुरः ॥२७३॥
मुमुक्षोर्भवतस्तस्य मुमुक्षा तत्र तस्थुषः ।
क्षीयते स्म क्षणाद् मैत्री दौर्जनीव विभावरी ॥२७४॥
अलंचक्रे चक्रबन्धुरुदयाचलचूलिकाम् ।
विश्वातिशायिमाहात्म्यं दिदृक्षुरिव तं मुनिम् ॥२७५॥
भानुना भानुभिः स्पृष्टं दृष्ट्वाऽध्वानमसौ मुनिः ।
चचाल युगमात्रांशं लेलिलोचनकुड्मलः ॥२७६॥

---

१ ललि=विकसितम् ।

कोदण्डपाणिः परमाधार्मिकस्येव नन्दनः ।
भिल्लोऽपि निरगात् तिर्यग्नारकत्रासकारणम् ॥२७७॥
आगच्छन् सम्मुखः साधुर्दृष्टोऽनेन पापिना ।
ममामङ्गलमद्यैष चिन्तितं चेति दुर्धिया ॥२७८॥
कोऽयं मुण्डः प्रचण्डात्मा प्रोद्दण्डाखण्डविग्रहः ?।
गच्छतो मम पापर्द्धावन्तराय इवान्तरे ॥२७९॥
चेदहं स्खलितोऽनेन मृगयार्थं व्रजन् वने ।
तदाहमप्यमुं मुण्डं स्खलयामि भुजङ्गवत् ॥२८०॥
पीतश्वापदरक्तानां रक्तानां मनुजाऽसृजि ।
पृषत्कानां ममाद्यैष भूयाद् भुक्तिर्मुनिब्रुवः ॥२८१॥
एवं दुर्ध्याननद्धात्मा दुर्बुद्धिः शबरब्रुवः ।
बाणेन निजघानैनमायान्तं यतिपुंगवम् ॥२८२॥
प्रहरस्य प्रहारेण तेन प्राणान्तकारिणा ।
ज्ञात्वाऽऽयुषोऽवधिं दध्यौ संयमी संयमाशयः ॥२८३॥
मा कुप्यस्त्वं किरातेऽस्मिन्नात्मन् ! वधनिबन्धने ।
कारणं सुखदुःखेषु प्राणिनां हि पुराकृतम् ॥२८४॥
भवाब्धौ जन्म सुप्रापं दृषत्खण्डमिवाटताम् ।
चिन्तारत्नमिवाप्राप्यं मानुजं जन्म जन्मिनाम् ॥२८५।
तत्प्राप्तावपि दुष्प्रापं कुलमार्यजनोचितम् ।
कुलेऽपि धर्मसामग्री मरुच्छायेव दुर्लभा ॥२८६॥
सामग्र्यामपि च श्रद्धा ग्रीष्मेऽम्भ इव दुर्लभा ।
श्रद्धाङ्कुरे सति प्रौढे दुष्प्रापोद्योगयोग्यता ॥२८७॥
उद्यमेऽपि हि निःशेषविरतिर्दुर्लभा भृशम् ।
आत्मन् ! सापि त्वया लब्धा क्षुधितेनेव भोजनम् ॥२८८॥
अमुष्मिन् शबरे रोषोऽधुना चेद् भविता तव ।
सलब्धमपि तत्सर्वं वृथाऽमेघ इवाङ्कुरः ॥२८९॥
इत्यात्मानमभिषिच्य शमीशः शमवारिणा ।
व्यधादाराधनां सिद्धसाक्षिकं साक्षराग्रणीः ॥२९०॥
मनोवाक्तनुमूलानि पापान्यालोचयन् पुनः ।
विपद्य वज्रनाभर्षिर्मध्यग्रैवेयकं ययौ ॥२९१॥
विद्युत्पुञ्ज इवोद्दामधामश्रीसमलङ्कृतः ।
ललिताङ्ग इति ख्यातो ललिताङ्गः सुरोऽजनि ॥२९२॥
कुरङ्गः स कुरङ्गात्मा वीक्ष्यैनं पतितं यतिम् ।

प्राणिनां प्राणनान्दोलं प्राशंसद्भुजयोर्बलम् ॥२९३॥
मयैकेनैव बाणेन हतोऽयं कुञ्जरोपम. ।
अभवं दोष्मतां मुख्य. प्रबलैर्दोर्बलैरतः ॥२९४॥
ततो धनुर्धरंमन्यः स्वात्मानं शवरध्रुवः ।
नित्यं चभ्राम पापर्द्धि. पापर्द्धौ त्रासयंस्त्रसान् ॥२९५॥
भृत्वाऽऽत्मानं महापापैः प्रसेवकमिवाश्मभिः ।
कालेन कियताप्येष कुरङ्ग' प्राप पञ्चताम् ॥२९६॥
ऋषिघातात् कृतोत्कृष्टपापपूरेण पूरितः ।
उत्कृष्टायुस्ततो माघवत्यां पृथ्व्यामगादसौ ॥२९७॥
वेदना भूरिशो भुञ्जन् शीताः शीतार्तिविह्वल. ।
अनेषीद्देष समयानप्रतिष्ठानप्रस्तरे ॥२९८॥
ललिताङ्गः सुपर्वापि प्राप्य वैभवमद्भुतम् ।
ग्रैवेयकोचितानन्दकन्दभू' समजायत ॥२९९॥
विषया भवविषया हित्वा तं ययुरन्यतः ।
पूर्वजन्मार्जितद्वेषरुषया रुषिता इव ॥३००॥
कषायाः क्षीणतां प्रापु' सर्वे तस्य सुधान्धसः ।
पूर्वारब्धमहाध्यानहिमानीज्वालिता इव ॥३०१॥
कदाचिद् विदधत् तत्त्वविचाररचनाश्रियम् ।
कदाचित् श्लाघयन् श्राद्धान् कुर्वतः पात्रपोषणम् ॥३०२॥
यतीनत्युग्रचारित्रान् कदाचिदनुमोदयन् ।
कदाचिद् विदधद् ध्यानं सिद्धानां धर्मधीरधीः ॥३०३॥
अनन्तशर्मनिर्मग्नो विदग्धोऽप्रविचारवान् ।
इत्यसौ ललिताङ्गाख्यो लेखः कालमवाहयत् ॥३०४॥
(त्रिभिर्विशेषकम्)

श्रीविद्युद्गतिनन्दनोऽच्युतसुर श्रीवज्रनाभावनी—
जानिर्निर्जरकुञ्जरोऽजनि ततो ग्रैवेयके मध्यमे ।
एवं चारुचतुर्भवोद्भवमहाभूतिप्रभूताद्भुतः
पार्श्वार्हच्चरिते समाप्तिमगमत् सर्गो द्वितीयोऽनघ' ॥३०५॥

इतिश्रीतपागच्छाधिराजभट्टारकसार्वभौमश्रीहीरविजयसूरिश्रीवि-
जयसेनसूरिराज्ये समस्तशास्त्रसुविहितावतंसपण्डितकोटी-
कोटीरहीर पं० श्री कमलविजयगणिशिष्यभुजिष्यग०हेम-
विजयविरचिते श्रीपार्श्वनाथचरिते द्वितीय.
सर्गः सम्पूर्णः ॥ छ ॥

# अर्हम्

## अथ तृतीयः सर्गः ।

अथास्मिन् जम्बूद्वीपेऽस्ति प्राग्विदेहविभूषणम् ।
पुरं सुरपुरं नाम्ना पुरन्दरपुरोपमम् ॥१॥
नन्दनक्रीडनानन्दा सुरसार्थश्रिताशयाः ।
यत्र गेहेषु भामिन्यो भान्ति रम्भा इवाङ्गनाः ॥२॥
सद्‌वर्णाः सद्‌भूपाः सद्‌वस्त्राः सद्‌मुखाः ।
भिन्ना अप्येकहृद्भाजो यत्र लोकाः कुचा इव ॥३॥
यत्र स्फटिकहर्म्यालो स्पृष्टा पीयूषरोचिषा ।
पौराणां स्वर्णदीनारस्नानस्नेहमपूरयत् ॥४॥
वीक्ष्य स्फटिकहर्म्येषु संक्रान्तं तरणिं नवम् ।
पाणीन् क्षिपन्ति पद्माक्ष्यो घुसृणास्पदकाम्यया ॥५॥
यत्र सौधमहानीलरत्नभाः प्रेक्ष्य चन्द्रमाः ।
शष्पभ्रान्त्या लम्बयति करांश्चारयितुं मृगम् ॥६॥
तत्रारिनृपनिकरकोकशीतकरोपमः ।
भूपो नाम्ना वज्रबाहुर्वज्रपाणिरिवाजनि ॥७॥
यदारातिवधूलोकः स्वशेषो रौति निर्भरम् ।
बाष्पपूरैः स्वपतीनां प्रकुर्वन्निव तर्पणम् ॥८॥
यतश्चित्राः खगारण्यमण्डपाः शवराजयः ।
यत्प्रत्यार्थिनृपग्रामाः सङ्ग्रामा इव रेजिरे ॥९॥
गेहाद् नो वरमत्यन्तं वनं यद्वैरिसुभ्रुवः ।
अशिवा अप्यभवाम सशिवा वयमत्र यत् ॥१०॥
त्रस्तैणीदृशना नित्यं दर्शनानन्ददायिनी ।
सुदर्शनेति तस्याभूद्राज्ञी राज्ञोऽतिवल्लभा ॥११॥
भूषणेनेव शीलेन सलीलं समलङ्कृता ।
सद्गुणैः साऽऽत्मनो वंशं पताकेव व्यभूषयत् ॥१२॥
जितो यद्वदनेनेन्दुः कषायकलुषीकृतः ।
पादैस्तन्नेत्रमित्राणि तापयत्यम्बुजानि यत् ॥१३॥
अस्यै ददौ विधिर्लात्वा लावण्यं सुरसुभ्रुवाम् ।
तदन्वेष्टुमिवैतासामनिमेषा दृशोऽभवन् ॥१४॥
गाम्भीर्यस्थैर्यमाधुर्यचातुर्यप्रमुखैर्गुणैः ।

रञ्जयामास सा नित्यं पतिं निजं पतिव्रता ॥ १५ ॥
पञ्चेन्द्रियैकविषयान् ( सानन्दं ? ) विषयाधिपः ।
तया सममभुङ्क्तैव दाग्दुरुक इवामरः ॥ १६ ॥
मध्यग्रैवेयकस्थो योऽन्वभवन् सुरसम्पदः ।
जीवः श्रीवज्रनाभर्षेर्निजां स्थितिमपूरयत् ॥ १७ ॥
च्युत्वा सुदर्शनादेव्या उदरे सोऽमराग्रणीः ।
अवातरद् व्योम्नः कुलङ्कषाकुले मरालवत् ॥ १८
प्रसुप्ता सुखशय्यायां तदैवैषा सुदर्शना ।
चक्रिजन्मकृतः स्वप्नानीक्षांचक्रे चतुर्दश ॥ १९ ॥
तदनु पट्टराज्ञी सा दृष्ट्वा स्वप्नान् शिवावहान् ।
विमुमोच द्रुतं निद्रां पद्मिनीव प्रबोधभाग् ॥ २० ॥
विभरामास सा गर्भं सन्दर्भमिव सम्पदाम् ।
बभूवुर्दोहदा गर्भानुभावाच्च शुभावहाः ॥ २१ ॥
गर्भप्रभावतो भाविमहोदयमहीभुजः ।
विशेषात् कल्पवल्लीव वल्लभा वल्लभाऽभवत् ॥ २२ ॥
द्योतयत् सूतिकावेश्म वेश्मरत्नमिव त्विषा ।
देवी सुदर्शना काले सुतरत्नमजीजनत् ॥ २३ ॥
कर्णयोरमृतस्यन्दं जन्माकर्ण्याङ्गजन्मनः ।
उच्छश्वास महीजानिः सुधासिक्त इवाङ्घ्रिपः ॥ २४ ॥
चक्रे महोत्सवो राज्ञा जन्मनस्तनुजन्मन. ।
श्रियां मन्त्र इवायाते पुत्रे कः संशय क्षणे ? ॥ २५ ॥
उत्सवैरुत्सुकोत्साहो वज्रबाहु शुभेऽहनि ।
व्यधाद् नाम स्वर्णबाहुरित्यस्य स्वात्मजन्मनः ॥ २६ ॥
धात्रीभिरिव धात्रीशैर्नीयमानो मुहुर्मुहुः ।
अवर्धिष्ट कुमारेन्द्रः प्रमोद इव पैत्रिकः ॥ २७ ॥
दिक्चक्रश्रीवशीकर्मैककर्मठः क्ष्मापनन्दनः ।
बाल्येन वयसाऽमोचि तमसेव तमीपतिः ॥ २८ ॥
परित्यक्तरजःक्रीडोचितावस्थः स भूपभूः ।
कलाभ्यासविभुः शुक्लपक्षे चन्द्र इव व्यभात् ॥ २९ ॥
युवतीजनदृक्चक्रचक्रचक्रसहोदरम् ।
वयो द्वितीयमापैष आम्नायमिव मान्मथम् ॥ ३० ॥
अलका लेभिरे काल्यं नामुष्य गुणिनो गुणाः ।
दृक्कोणैः शोणिमा लब्धा मनसा नास्य संस्तुतौ ॥ ३१ ॥

वक्त्रस्य स्पर्धयेवास्य विस्तीर्णाऽऽसीदुरःस्थली ।
स्कन्धाभ्यां सार्धमेवास्य पीनतां प्राप च त्रपा ॥ ३२ ॥
अस्याभूद् मार्दवं पाणिपादेषु स्पर्धया हृदः ।
नासाङ्गुलीषु सारल्यं चम्पककलिस्पर्धया॥ ३३ ॥
विकारैर्यौवनोद्भूतैरपराभूतचेतसा ।
लोकोत्तरा लौकिकाश्च प्रासास्तेनाखिला गुणाः ॥३४॥
अष्टाधिकैः सहस्रैश्च लक्षणैर्लक्षितः शुभैः ।
सुमेरुरिव मन्दाराङ्कुरैर्भाति स्म तद्वपुः ॥३५॥
अन्येद्युः प्राप्तसंवेगो वज्रबाहुः क्षितीशिता ।
प्रोवाच स्वात्मजं राज्यं दित्सुर्भारमिवात्मनः ॥३६॥
राज्यं वत्स ! गृहाणेदं शर्मणामिव कार्मणम् ।
अतः संयमसाम्राज्यं समादास्यामहे वयम् ॥३७॥
श्रुत्वैतद्वचनं वप्तुर्बाष्पप्लावितलोचनः ।
स्वर्णबाहुरभाषिष्ट पितरं प्रणताननः ॥३८॥
मा त्याक्षीः समयेऽमुष्मिंस्तात ! मां पूतरोपमम् ।
बाला हि लाल्यमानाः स्युः पादपा इव शर्मणे ॥३९॥
हे तात ! त्वां विना धर्तुं नालं प्राणानिमानहम् ।
प्रौढोऽपि पादपः पाथो विना जीवेत् कियद्दिनम् ? ॥४०॥
या शोभा तात ! मद्भाले भवच्चरणरेणुभिः ।
चित्रिते सा न चाऽखण्डश्रीखण्डमृगनाभिभिः ॥४१॥
यत्सुखं त्वत्पदाम्भोजच्छायायां तस्थुषो मम ।
राकेन्दाविव विशदच्छत्रे मूर्ध्नि धृते न तत् ॥४२॥
यत् सुखं शृण्वतो वाक्यमेहि गच्छेति तावकम् ।
न तद् मे बन्दिनां वाचो जीव जीवेति जीवनाः ॥४३॥
त्वत्पुरस्तस्थुषा क्षोणौ यत्सौख्यमनुभूयते ।
न तद् मयाधिरूढेन रत्नसिंहासनोपरि ॥४४॥
यत्सुखं धावतः पद्भ्यां त्वत्पुरः पत्तिवद् मम ।
प्रोन्मत्तसिन्धुरस्कन्धाधिरूढस्य न तद् मम ॥४५॥
हे तात ! भूमिभारोऽसौ भवदीयशिरोमम ।
नोचितः कुञ्जरस्येव सन्नाहो रसनालिहः ॥४६॥
बालं मां मुञ्चतस्तव चेत् कृपा हृदिनो न च ।
का तदा व्रतमर्यादा दयालोः प्राणरक्षणे ॥४७॥
राज्यं राजशिरोरत्नं भुजाभ्यामर्जितं त्वया ।

परित्यक्तं प्रलीस्यन्ति शत्रवश्छलकाङ्क्षिणः ॥४८॥
न्यायमार्गं प्रवृत्तानां न्यायं कारयतां सताम् ।
साम्राज्यमपि भूपानां धर्मकर्मनिबन्धनम् ॥४९॥
कृत्वा दयां दयालो ! तत् पूर्जने च शिशौ मयि ।
कुरु निःशेषलोकानां पालनं लालनं च मे ॥५०॥
ब्रुवाणमिति तं स्वर्णबाहुमुद्वाहुं धूर्वहम् ।
वज्रबाहुर्वभाणैवं भावभिक्षुत्वमुद्वहन् ॥५१॥
पुत्र ! पुत्रकलत्रादिपरिग्रहाः शरीरिणाम् ।
अर्गला इव जायन्ते यातां निर्वाणवर्त्मनि ॥५२॥
यत्किञ्चित् सुखत्वावाप्तिर्गृहित्वे गृहमेधिनाम् ।
पञ्चेषुस्तदपि प्रायो मुष्णाति परिमोषिवत् ॥५३॥
मुक्ताऽमुक्तमिदं राज्यं शिवश्वभ्रनिबन्धनम् ।
अतो मुञ्चाम्यहं राज्यं वत्स ! मोक्षाभिलाषुक. ॥५४॥
लिप्यते पातकैस्तिष्ठन् गेहे सुकृतवानपि ।
श्यामत्वे को हि सन्देहः कज्जलालयमीयुषाम् ॥५५॥
भुक्ता भूरर्जितं राज्यं शुभ्रिता. कीर्त्तिभिर्दिशः ।
धर्मं विना न न. कृत्यं किमप्यत्र परत्र शम् ॥५६॥
अतो वयसि पाश्चात्ये तुभ्यं राज्यं वितीर्यते ।
स्वान्ता चेक्षुलता प्रान्ते भक्षिता विरसा भवेत् ॥५७॥
इत्यसौ भूपतिर्भूय संवेगवचनौषधैः ।
कदाग्रहरुजं पुत्रमुख्याणामुदतारयत् ॥५८॥
जगन्मुदामिव मूलं महीशः स महामहे. ।
सूनुमस्थापयद्राज्ये प्रतिच्छन्दमिवात्मनः ॥५९॥
विहाय तृणवद्राज्यं स्वयं चायं महीपति. ।
दीक्षां जग्राह मुक्तिश्रीवशीकरणकारणम् ॥६०॥
मध्याह्नमिव घर्मांशुः पदं सम्प्राप्य पैत्रिकम् ।
द्युते स्वप्रतापेन स्वर्णबाहुर्महीशिता ॥६१॥
सोऽरक्षयज्जयंल्लोकान् गुणैर्लोकोत्तराशयः ।
आरामिक इव वनीमवनीमवनीधनः ॥६२॥
निःशेषरिपुभूपालकुलशैलशचीपति. ।
न्यायेन पालयामास राज्यं राजशिरोमणि. ॥६३॥
आस्थान्यां तस्थुषोऽन्येद्युर्भूभुज कोपि सार्थराट् ।

---

१ आजानुबाहुम् ।

अश्वरत्नमढौकिष्ट शस्तलक्षणलक्षितम् ॥६४॥
स्तब्धकर्णं लघुग्रीवं स्निग्धरोमालिमालितम् ।
तुच्छपुच्छं च दध्मानं पृष्ठमम्बुफुटं स्फुटम् ॥६५॥
वीक्ष्य तं तुरगं भानुतुरगाणामिवाष्टमम् ।
सप्तसप्तिमर्मस्तैष सप्तसप्तिमहीपतिः ॥६६॥ (युग्मम्)
आदाय वाजिनं राजा सच्चक्रे सार्थनायकम् ।
अश्वदाता हि भूपानां प्रेमपात्रं प्रजायते ॥६७॥
वेगमादाय वाहानां सर्वेषां विदधे विधिः ।
अस्मिन् यद् धावतोऽमुष्य कोप्यश्वो नाभवत् पुरः ॥६८॥
उच्चैःश्रवप्रभृतीनां वाजिनां राजिराजिना ।
वाजिना तेन भूभर्त्तुर्मन्दुरा सुन्दराऽजनि ॥६९॥
सुपर्णमिव गोविन्दस्तमारूढोऽन्यदा नृपः ।
निरगात् क्रीडया भूपः परीतः पुरतः पुरः ॥७०॥
पतद्भिः फेनसन्दोहैर्मुकाङ्कुराङ्कितामिव ।
प्रकुर्वन् खुरलीं सोऽप्यचालीदश्वः शनैः शनैः ॥७१॥
वेगज्ञानाय तं वाजिराजं राजाशिरोमणिः ।
कशयाऽताडयच्छात्रमुपाध्याय इवोच्चकैः ॥७२॥
गाल्येव सुभटोत्तंसस्ताडितः कशया तया ।
अधाविष्ट समाकृष्टवल्गोऽप्येष तुरङ्गमः ॥७३॥
उत्पतत्पक्षिराजं स तर्जयन्नचलद् नभः ।
तुरङ्गः स्वं तुरङ्गत्वं जने सत्यापयन्निव ॥७४॥
राज्ञाऽतिरक्ष्यमाणोपि योगिनेव मनो गतम् ।
न तस्थावेष प्रतीपशिक्षितत्वात् तुरङ्गमः ॥७५॥
पश्यतः परिवारस्य स तस्योन्मुखचक्षुषः ।
तरसाऽश्वस्तिरोऽधत्त सन्ध्यायामिव गोष्पतिः ॥७६॥
भ्रमाद्वैतमिवात्मानं मन्वानो मेदिनीपतिः ।
स्थावरान् नगनागादीनस्थावरतयाऽविदत ॥७७॥
तुरगं तं समारूढश्चक्रारूढ इव भ्रमन् ।
ययावेष वने दूरमभ्रान्तरिव भास्करः ॥७८॥
मनसा सह सर्वेषां भूपानां पश्यतां सताम् ।
शूंकलेनामुना राजा निन्येऽरण्येऽथ गह्वरे ॥७९॥
कर्षणात् स्वेदमापन्नः सप्तेस्तस्यातिधावतः ।

---

१ दुर्विनीतेन ।

वल्गां मुमोच भूभर्ता खलमैत्रीमिवाऽखलः ॥८०॥
मुक्तिं प्राप्य ततः सप्तिर्भवाटव्या भवी क्षणात्।
गतिनिरोधं विदधे लब्धलक्ष इवाशुगः ॥८१॥
भ्राम्यद्भ्रमरझङ्कारैः कृताध्वन्याभिमन्त्रणम्।
उल्लल्लोलकल्लोलारब्धाध्वन्योपगूहनम् ॥८२॥
पद्मपत्रपतत्पिङ्गपरागै क्लृप्तमण्डनम्।
हंसहंस्युच्छलत्पक्षव्यजनवीजितान्तरम् ॥८३॥
कोकलोककुलाकीर्णाऽसान्तरान्तरभूमिकम्।
पीयूषोपमपानीयं भव्यभुक्तिभृतान्तरम् ॥८४॥
वीवाहमण्डपमिव पद्मिनीशस्तहस्तकम्।
ददर्शाप विशामीशस्तत्र चैकं सरोवरम् ॥८५॥ (चतुर्भिःकलापकम्)
मार्गश्रमसमुत्पन्नतापसन्तापविह्वलः।
तद् दृष्ट्वा हृष्टवान् भूपो बप्पीह इव नीरदम् ॥८६॥
निर्गच्छत्पवनप्रोथपथफूत्कारफेनलात्।
उत्ततार तुरङ्गात् स्म क्ष्मापतिः सरसीतटे ॥८७॥
तत पर्याप्तमुत्तीर्य स्वस्थीभूतेन भूभुजा।
पायितः शीतलं वारि वाहः स स्नानपूर्वकम् ॥८८॥
ममज्ज तदनु क्ष्मापो वारिणा श्रमवारिणा।
स्नानं यदध्वनीनानामध्वश्रमविमुक्तिकृत् ॥८९॥
साधुस्वान्तमिव स्वच्छं पथश्रमविपौषधम्।
भूपः पपौ हिमवारि चलचञ्चुरितेन्दुभम् ॥९०॥
पार्थिवोऽथ पय. पीत्वा तत्पालीमारुरोह च।
पर्यंस्तत्परित क्रीडाकाननं श्रीमुखाननम् ॥९१॥
चम्पकाशोकपुन्नागनागनारङ्गसङ्गते।
विकसत्कुसुमामोदोत्पादितघ्राणतर्पणे ॥९२॥
तत्रारामे तरोः सान्द्रस्कन्धे देव इवागतः।
नृदेवोऽसौ विशश्राम विस्मरन् स्वौकस. सुखम् ॥९३॥ (युग्मम्)
विश्रम्य क्षणमेकं स कौतुकोत्कण्ठिताशयः।
चचाल पुरत. पश्यन् वनं निर्भीरिवाद्रिभित् ॥९४॥
तत्र ग्राममिवात्यन्तं मुनिलोकैः समाकुलम्।
तापसाश्रममद्राक्षीद् गच्छन्नग्रे नराग्रणीः ॥९५॥
मृगैरुपासितानङ्के शयानैः शावकैरिव।
जरद्भिश्च मृगैः शृङ्गैर्घृष्टत्वचस्तरूनिव ॥९६॥
नीवारकणशादानं कुर्वतो वृषभानिव।

कन्दमूलफलादीनि चिन्वतो मालिकानिव ॥९७॥
तत्रेत्यानेकशो वीक्ष्य तापसांस्तपतस्तपः ।
मेदिनीपतिमूर्धन्यो मुदमाप वचोतिगाम् ॥९८॥(त्रिभिर्विशेषकम्)
तदा क्षोणिपतेश्चक्षुर्दक्षिणं स्फुरितं द्रुतम् ।
कान्तं लाभमिदं वक्ति निश्चिकायेति भूपतिः ॥९९॥
भाविलाभसमुद्भूतभावुकः क्षोणिकामुकः ।
मुदामिव सदःस्थानं प्राविशत् तत् तपोवनम् ॥१००॥
स विशन् पुरतोऽपश्यदाह्लादोत्फुल्ललोचनः ।
एकां निर्वर्ण्यलावण्यां कन्यामालिसहायिनीम् ॥१०१॥
सृजन्तीं स्वस्तनस्पर्धिकुम्भाभ्यां वल्लिसेचनम् ।
एकतानमनाः क्ष्मापः प्रेक्षांचक्रेऽमरीमिव ॥१०२॥
तस्यां राज्ञो मनोनेत्रे जग्मतुर्यन्त्रिते इव ।
अशक्ता ते विना स्थातुमिवागादपि धीरता ॥१०३॥
अक्षाणामस्य सर्वेषां वृत्तिर्दृग्विषयं ययौ ।
रुद्धान्याक्षपथः पृथ्वीनाथस्तामेव बुद्धवान् ॥१०४॥
साफल्यं स्वदृशोर्जानन् जन्मना सह भूपतिः ।
निर्वर्ण्य वर्णिनीमेनां ध्यातवानिदमात्मगम् ॥१०५॥
अहो ! अस्याः शिरःकेशपाशोऽसौ श्यामलच्छविः ।
कातरं हन्ति मामुच्चैर्मन्मथीवासिवल्लरी ॥१०६॥
सीमन्तः स्थपुटः स्पष्टो भात्यस्या मूर्ध्नि सुभ्रुवः ।
अध्वेव मुष्णतो विश्वं पञ्चेषोः परिमोषिणः ॥१०७॥
भालं बिभर्ति सुभ्रूर्भ्रूयुतं बालेन्दुसोदरम् ।
चारुचापमिवानङ्गोऽधिज्यीकृत्यात्र मुक्तवान्॥१०८॥
कज्जलच्छलतः कामौषधं धत्ते दृशोरियम् ।
यदेतद्दृग्निपातेन दग्धोऽप्युज्जीवति स्मरः ॥१०९॥
त्रस्तबिम्ब. प्रभात्यस्याः शोणिमाऽधरबिम्बयोः ।
प्रवाल इव चेतोभूभूरुहः प्रथमोद्गमः ॥ ११० ॥
भात्यस्या वदनं रम्यं पार्वणेन्दुसहोदरम् ।
विभ्रत्कस्तूरिकाचित्रश्यामलं लक्ष्मलक्षणम् ॥ १११ ॥
त्रिरेखाखचितः कण्ठः शोभतेऽस्या मृगीदृशः ।
कामदिग्विजये कम्बुरिव मङ्गलनादकृत् ॥११२॥
स्तनौ तुल्यौ बिभातोऽस्याः पीनौ मीनाङ्कचक्रिणा ।
दृढाक्रे कर्तुमारब्धौ युगपत् कलशाविव ॥ ११३ ॥

शोभेते सुभ्रुवोऽमुष्याः सरलौ च भुजावुभौ ।
नृहृद्मनकबन्धौ रते: प्रेङ्खागुणाविव ॥ ११४ ॥
नलिनीदलमृदुल भात्यस्या. करयोर्युगम् ।
तारुण्यनिम्नगाकूले किं लावण्यद्रुपल्लव. ? ॥ ११५ ॥
नितम्बबिम्बे भातोऽस्या नितस्विन्या' समुन्नते ।
शारदिकैर्घनैर्धौते कूले स्वर्गधुनेरिव ॥ ११६ ॥
उद्वृत्ते सरले जङ्घे विभातोऽस्या मृगीदृश. ।
न्यासीकृताविवात्मीयौ तूणीरौ मीनकेतुना ॥ ११७ ॥
विश्वातिशायिरूपश्रीरेषा रेखा वधूजने ।
मनोहरा मनोहर्षा वल्लभेव मनोभुवः ॥११८॥
तन्नूनं काऽप्यसौ विद्याधरी वा किन्नरी सुरी ।
न च क्षौणिशिरोमण्याः किमस्या रूपमद्भुतम् ॥११९॥
तया हृतमनस्कत्वात् सुमना अपि भूपति. ।
नाज्ञासीद्विषयानन्यत् वेत्तृत्वं हि मनोऽनुगम् ॥१२०॥
एवं तद्रूपकूपान्तः पतित' काश्यपीपतिः ।
चेतनाचातुरीशून्यः पीतासव इवाभवत् ॥१२१॥
त्रस्तसारङ्गशावाक्षी साऽथ स्वं वल्कलं दृढम् ।
बद्धं च श्लथयामास मज्जनार्थमिवोद्यता ॥१२२॥
कङ्केल्लिपाणिरम्भोमिः कङ्केल्लिं सेक्तुमुद्यता ।
तस्येहां महिलासंगभवां सेक्तुमिव स्वयम् ॥१२३॥
भूयो दध्यौ धराधीशो विस्मयस्मेरलोचनः ।
क्वैषा रूपपराभूतपुरुहूतानितम्बिनी ॥१२४॥
क्व चेदं कर्कशं कर्म मर्मकर्मकरोचितम् ।
धिग् विधिं दधतं द्वेष गुणेषु निखिलेष्वपि ॥१२५॥
तस्याश्च प्रकटैश्चिन्हैः पुनश्चिन्तितवान् नृपः ।
कस्यापि भूभुजो वंशे पताकेवेयमङ्गना ॥१२६॥
इतश्चैषा कुरङ्गाक्षी वल्लीपल्लवमण्डिता ।
मण्डपे प्रययौ वेगाद् विमानान्तरिवामरी ॥१२७॥
तस्याः मुखे प्रफुल्लाक्षे जातोन्मुद्राम्बुजभ्रमः ।
भ्रमरो न्यपतत् मत्तयुवेव ग्रासमादधत् ॥१२८॥
वेल्लितोप्येष रोलम्बः पाणिपल्लववेल्लनैः ।
विरराम न तद्वक्राद् मालतीमुकुलादिव ॥१२९॥
तद्दंशाविधुरा बाला सा जगाद सखीं प्रति ।

रिपोरिवालिनश्चास्मात् पाहि पाहि सहायिनि ! ॥१३०॥
तत्पीडापीडिता साऽऽली प्रोवाच चतुरं वचः ।
कस्त्वां पातुमलं भद्रे ! स्वर्णबाहोर्ऋते पुरः ॥१३१॥
य पाति स्वीयवेश्मेव निखिलं मेदिनीतलम् ।
शीतार्त इव तरणिं तमेव शरणीकुरु ॥१३२॥
इत्याकर्ण्य वचस्तस्याः श्रवणामृतसन्निभम् ।
चमच्चक्रे वज्रबाहुकुलाकाशनभोमणिः ॥ १३३॥
को वामूमुपप्लवं कर्तुमलंभूष्णुः शुभाशये ! ।
हराविव वनं वज्रबाहुपुत्रेऽवति क्षितिम् ॥१३४॥
एवं ब्रुवाणो बिभ्राणो मुदं च परमां नृपः ।
प्रादुरासीत् तयोरग्रे पिनाकीव जयोमयोः ॥१३५॥
पुरतः सहसा प्रेक्ष्य तं साक्षाद् मकरध्वजम् ।
ससंभ्रान्ते अभूतां ते च्छलिते इव रक्षसा ॥१३६॥
परिचेरतुर्न किंचिद् नोचतुश्चतुरं वचः ।
विस्मयस्मेरनयने जाते सुनयने उभे ॥१३७॥
मा भूयाद्भयमनयोर्मत्तो मृग्योर्हरेरिव ।
इत्यभाषिष्ट भूभर्त्ता प्रेमगर्भतया गिरा ॥१३८॥
भो भद्रे ! विस्मयोन्मुद्रे ! भाविभद्रे तपोवने ।
अस्ति भद्रं तापसानां दुस्तपं तपतां तपः ॥१३९॥
स्वयं पायितपयसः स्वपाणिकृतलालनाः ।
पादपाः सन्ति सशिवाः कच्चिद् वां बालका इव ॥१४०॥
नीवारैः कृतसम्भागा महाभागे ! मृगाः सुखम् ।
स्वपाणिविहितावाला वल्यः सन्ति शिवं शिवे ! ॥१४१॥
पल्वलाम्भसि रूढानां धर्मवृद्धिविधायिनाम् ।
व्रीहीणामिव रम्याणां नीवाराणां शुभं शुभे ! ॥१४२॥
स्वयंसूत्रितसेतूनां स्वयमुप्तसरोरुहाम् ।
कुशले ! अस्ति कुशलं सरसां वयसामिव ॥१४३॥
आलवालपयःपानकारिणां नादहारिणाम् ।
वार्ता वर्तितसौभाग्ये ! वर्तते वरपत्रिणाम्॥१४४॥
कल्याण्यावस्ति कल्याणं युवयोस्तपसि ध्रुवम् ।
इत्यपृच्छदतुच्छात्मा तयोर्भद्रं सभद्रयोः ॥१४५॥
अशक्ता वक्तुमप्येषा तथाप्यालम्ब्य धीरताम् ।
धीमती धरणीनाथं सख्यूचे चतुरं वचः ॥१४६॥

महाभाग ! स्वसौभाग्यपराभूतमनोभव ! ।
आवयोरस्ति कुशलं सर्वत्रापि निरर्गलम् ॥१४७॥
स्वर्णबाहौ महाबाहौ भूपे पाति वसुन्धराम् ।
कोऽत्र नस्तपसां भूयात् प्रत्यूहव्यूहकारणम् ॥१४८॥
कान्दिशीककुरङ्गाक्षी किन्त्वेषा बालकोलिना ।
दृष्टाऽऽननेऽम्बुजभ्रान्त्या सभ्रमा मधुपी यथा ॥१४९॥
व्याधूतोप्यनया भृङ्गो नागाद् माधुर्यलोलुपः ।
यद् वामाधरमाधुर्ये धुर्यं मधुरवस्तुषु ॥१५०॥
तत्पीडाविगतव्रीडा बालैषा भयभीलुका ।
पाहि पाहीति मामूचे कातर्यं सहजं हि नः ॥१५१॥
इत्युदार्यं वयस्या सा प्रतिपत्तिं महीपतेः ।
व्यधात् स्थानोचिता गेहानुसृत्यातिथयः स्मृताः ॥१५२॥
प्रियालकदलीशालरसालादिरसोरुहाम् ।
मञ्जुलानीव फलानि साऽढौकिष्ट महीपतेः ॥१५३॥
आनिन्ये बालया नीरं पद्मिनीपत्रसंपुटैः ।
वीजितं व्यजनाकारैर्मृदुलैः कदलीदलैः ॥१५४॥
मल्लिकामालतीकुन्दमुचुकुन्दसुमोत्करम् ।
साऽढौकिष्ट नृशिष्टाय सर्वस्वमिव मान्मथम् ॥१५५॥
प्रत्यग्रैः पल्लवैः सोऽभ्वैरचटिष्टाथ विष्टरम् ।
भूर्जत्वक्छादनं स्वच्छं स्वस्वान्तमिव चामुचत् ॥१५६॥
मृद्वी मृदुलतोल्लासे मण्डपे मण्डितासने ।
आसयामास तत्रैनं नृपं स्वमनसीव सा ॥१५७॥
स्वयं तल्लोचने लीनलोचना लोललोचना ।
देवमूर्तेरिवैतस्य पुरस्तात् प्राञ्जलिः स्थिता ॥१५८॥
दशनद्युतिवाःपूरैः क्षालयन्तीव तत्पादौ ।
स्थिता तत्पुरतः प्रोचे सा वचश्चारुचातुरि ॥१५९॥
तपोवनमिदं देव ! अद्य स्वर्लोकतोऽधिकम् ।
सम्प्रसादैर्यतो युष्मत्पादैरद्य पवित्रितम् ॥१६०॥
देव ! त्वद्ग्रामनामादि लोकोत्तरयाऽनया ।
आकृत्यैवाववुद्धं च पाण्डित्यमिव भाषया ॥१६१॥
तथापि चक्षुषी एते साक्षात् पितामृते इव ।
त्वद्दर्शनसुधासिक्ते यथा निर्वृतिमापतुः ॥१६२॥

१ बालभ्रमरेण ।

यथा युष्मद्गुणग्रामग्रहणग्रहिलाऽधुना ।
संलब्धात्मफलेवाभूज्जिह्वेपा सुखभाजनम् ॥१६३॥
तथान्यकुलनामादिश्रवणे श्रवणे इमे ।
उत्कण्ठिते असम्मातोल्लासेनाह्लादिते इव ॥१६४॥ ( युग्मम् )
अतः कुलादिकथनप्रथापीयूषपानतः ।
कर्णयो. कुरु संतुष्टिमावयोर्मनसोरिव ॥१६५॥
आत्मनश्चात्मना ख्यातिराख्याता ख्यातिमेति न ।
इति ध्यात्वा धराधीशोऽभिदधे मधुरं वचः ॥१६६॥
स्वर्णबाहुमहीशितुरस्म्यहं किंकर खलु ।
नित्यं तिष्ठामि तत्पार्श्वे द्वितीयमिव तद्वपुः ॥१६७॥
अभूद् विघ्नकर. कोऽपि तापसानां तपोविधे. ।
इति तेन महीशेन प्रहितोऽहमिहागमम् ॥१६८॥
इति तस्य वचः श्रुत्वा भावज्ञा सा व्यचिन्तयत् ।
स्वर्णबाहुः स एवासौ राजा राजसमानन' ॥१६९॥
ज्ञातवान् भावविदुरो भूपस्तद्भावमान्तरम् ।
मामज्ञासीदसौ विज्ञा रसज्ञेव रसज्ञताम् ॥१७०॥
पुनस्तां विस्मयापन्नां प्रोचे वसुमतीपतिः ।
केयं कन्या च किंनामा कुतस्त्या किमिहागता ? ॥१७१॥
कुरुते किमिदं कर्म वपुष क्लेशकारणम् ? ।
इत्युक्ता सा सखी स्माह बाष्पप्लावितलोचना ॥१७२॥ (युग्मम्)
शृणु नाथ ! कथां तथ्यां प्रथितां पृथिवीतले ।
वैताढ्यभूधरेऽत्राभूद् वरं रत्नपुर पुरम् ॥१७३॥
तत्र विद्याभृतां मूर्ध्नि शेखरो रत्नशेखरः ॥
राजाऽऽसीत् त्रासिताऽशेषशत्रुर्लोकोत्तराशयः ॥१७४॥
तस्य रत्नावली राज्ञी रत्नं निःशेपयोपिताम् ।
शुभां सा सुपुवेऽन्येद्युः पद्मां स्वप्नोपसूचिताम् ॥१७५॥
तस्यां गर्भमुपेतायां प्रसूः पद्मां ददर्श यत् ।
अतोऽभिधानतः साऽऽसीत् पद्मा पद्मानना शुभा ॥१७६॥
तस्यां तु जातमात्रायां पिता पञ्चत्वमाप्नवान् ।
बभूवु: सूनवस्तस्य सर्वे पितृपदार्थिन. ॥१७७॥
सर्वे च तनयास्तस्य राज्यलक्ष्म्यभिलाषुकाः ।
मिथो युयुधिरे क्रोधाद् व्याला इव मदोद्धुराः ॥१७८॥
तेषां तु युध्यमानानां बाढं राज्याभिलाषिणाम् ।

भुजिष्यो भूपतिर्वापि नालं रोद्धुमजायत ॥१७९॥
तदा तत्र पुरे प्रौढमस्वास्थ्यं समजायत ।
भूयो भवति लोकानामस्वास्थ्यं राज्यविग्रहे ॥१८०॥
तदा तज्जननी रत्नावली भूमीशभामिनी ।
दुश्चेष्टित तनूजानां वीक्ष्य चाऽजनि दुःखिनी ॥१८१॥
सुतां निधिमिवाऽऽदाय पुरात् सा निर्ययौ द्रुतम् ।
स्वभ्रातुर्गोलवाख्यस्य मुनेश्चाश्रममभ्यगात् ॥१८२॥
तत्राऽवर्धिष्ट बाला सा कल्पवल्लीव नन्दने ।
क्रमाच्च यौवनं प्राप लावण्यमिव मूर्तिमत् ॥१८३॥
वरार्हां बालिकां तां च संदृश्य गोलवो मुनिः ।
वरचिन्तासमुद्भ्रान्तर्निमग्नो निर्ममोऽपि हि ॥१८४॥
यथैषाऽशेषवामाक्षीरत्नं मङ्गिनी सुता ।
नृरत्न रत्नगर्भायां भावी कोपि वरस्तथा ॥१८५॥
अभ्रच्छायानुकारिण्या कृतं मच्चिन्तयाऽनया ।
यदाख्या रत्नगर्भाया रत्नगर्भेति विश्रुता ॥१८६॥
अथाऽन्यदाऽऽश्रमे तत्र ज्ञानवान् मुनिराययौ ।
गोलवोऽपि मुनेस्तस्याऽभ्यगादभ्यर्णमञ्जसा ॥१८७॥
अप्राक्षीज्ज्ञानिनं तं च गोलवः परया मुदा ।
अस्याः कुमार्याः विवोढा भावी कः पुरुषोत्तमः ? ॥१८८॥
मुनिरप्यभ्यधादत्र वज्रबाहुनृपात्मजः ।
अस्ति भूभामिनीभालभूषणं भूमिवल्लभः ॥१८९॥
चक्रवर्तिश्रियो यस्य पाणिपल्लवपल्वले ।
भल्लकीभूय भूयोऽपि पूरयिष्यन्ति दोहदम् ॥१९०॥
शूकलापहृतः सोत्राऽऽगमिष्यति धराधवः ।
त्वच्चिन्ताकूलिनीकूलमुक् स्वं नेष्यति पण्डवत्[1] ॥१९१॥
अत्राऽऽगतस्य भविता कन्यकैषा कृशोदरी ।
भामिनी तस्य भूभर्तुः स्वाहा स्वाहापतेरिव ॥१९२॥
स्वामिरूपा सरोजाक्षी कुमारी साऽमरीनिभा ।
वल्ल्यादिसेचनासक्ता क्रीडति स्वेच्छया वने ॥१९३॥
स चायमाश्रमो यत्र गोलवस्तापसस्तपः ।
तपति स्वस्वसुः पुत्रीं लालयंल्लतिकामिव ॥१९४॥
तथेत्युक्ते नृपो दध्यौ तद्वचोभिर्मुदं दधत् ।

१ अब्जसमूहवत् पतिष्यति ।

नूनमश्वापहारोऽसौ ममाभूद् भद्रकारणम् ॥१९५॥
अश्वरूपं विधिर्नूनं कृत्वा चैतद्विजृम्भितम् ।
रत्नदोषीति दोषं स्वमपाकर्तुमिव व्यधात् ॥१९६॥
ध्यात्वेति स्माह भूभर्ता भद्रे ! कुलपतिः क्व स ।
सुधामिव स्वचक्षुर्भ्यां तद्दर्शनं पिबाम्यहम् ॥१९७॥
तेनेत्युक्ते जगौ साऽथ तापसं गोलवोऽन्वगात् ।
तापसं प्रस्थितं चैकमितोऽन्यत्र यियासया ॥१९८॥
अनुगम्य मुनिं दूरमधुनैष्यति गोलवः ।
अत्रान्तरेऽभ्यगादेका जरती तत्र तापसी ॥१९९॥
हे नन्दे ! विहितानन्दां पद्मामानय सत्वरम् ।
आगमे गोलवस्याथ जातोऽस्ति समयोऽधुना ॥२००॥
इतश्च भूभुजः सैन्यं खुरलीमध्यसंस्थितम् ।
यातं वायुमिवाश्वं तं वीक्ष्य विस्मयमाप्तवत् ॥२०१॥
क्षणेनायं हयो दूरमादाय नृपतिं ययौ ।
सर्वेषां भूभुजां तेषां पश्यतामिव विस्मयम् ॥२०२॥
तिरोभूतं भुवो नाथं विज्ञाय निखिला अपि ।
बभूवुर्भूभुजाः सर्वे गतस्वा इव दुःखिताः ॥२०३॥
किं कोऽपि स्वामिनः शत्रुरसुरः खेचरः सुरः ।
सप्तिरूप इहागत्यापजह्रे व्यंसको नृपम् ॥२०४॥
तदस्माकमपि क्ष्मापानुपदं गन्तुमर्हति ।
छायावन्नैव मुञ्चन्ति नाथं दुःखसुखाऽनुगाः ॥२०५॥
ध्यात्वेति ते नृपाः सर्वे सर्वतः क्षिप्तचक्षुषः ।
अश्वस्याऽनुपदं जग्मुः पश्यन्तो गिरिगह्वरान् ॥२०६॥
भ्रमन्तो भूभुजास्तत्राऽरण्येऽश्वपदपद्धतिम् ।
अपश्यंस्तिमिरे घोरे प्रदीपकलिकामिव ॥२०७॥
ततस्तदनुसारेण व्रजन्तस्ते महीभुजः ।
पवित्रितं स्वामिपादैस्तापसाश्रममभ्ययुः ।२०८॥
हेषाभिर्वाजिराजानां गजानां वर्यगर्जिभिः ।
सिंहनादैश्च वीराणां बलस्यन्दनचित्कृतैः ॥२०९॥
भूयोभिः सैन्यसंमर्दादुत्थितैश्च रजोभरैः ।
चलनादचलायाश्चागतं सैन्यं नृपोऽविदत् ॥२१०॥ ( युग्मम् )
ज्ञात्वाऽऽगतिमनीकिन्या[1]ः कन्यात्रासनिबन्धनं ।

1 अनीकिनी = सेना ।

बभाषे भूपतिर्भद्रे ! सुखं यात निजाश्रमम् ॥२११॥
एषा मद्वाहिनी पूर्णवाहिनीपूरदुर्धरा ।
अतोऽहमेनां नयामि पृथुले क्वापि भूतले ॥२१२॥
इत्युक्तवन्तं गम्भीरं वेगेन सरसं नृपम् ।
तमापतद् वाहिनी सा वाहिनीव पयोनिधिम् ॥२१३॥
बलादियं सखी पद्मामादाय स्थानतस्ततः ।
समपासारयद् धेनुस्तनेभ्य इव तर्णिकाम् ॥२१४॥
पदे पदे निपतन्ती व्याप्तेव विषमैर्विषैः ।
पश्यन्ती वलितग्रीवं कुरङ्गीव भयातुरा ॥२१५॥
मूर्च्छामतुच्छां गच्छन्ती पतितेव गिरेस्तटात् ।
मुञ्चन्ती वाष्पपूरांश्च गिरिभूरिव निर्झरान् ॥२१६॥
पुनः पुनः प्रोच्चरन्ती स्वर्णबाहुनृपाभिधाम् ।
यूथादिव मृगी सख्या ततः सा प्रापिताश्रमम् ॥२१७॥
(त्रिभिर्विशेषकम्)
नन्दाऽऽनन्दाद् गोलवस्य स्वर्णबाहुमहेशितुः ।
आगतिं चान्यवृत्तान्तं यथाजातमचीकथत् ॥२१८॥
आकर्ण्याकर्णनीयं तद् गोलवो ध्यातवानिति ।
अहो तस्य मुनेर्ज्ञानसंपदत्यन्तसद्भुता ? ॥२१९॥
अर्हत्यातिथ्यं मेऽतिथिः सर्वोपि गृहमागतः ।
दत्तो ह्यतिथये मानः स्यादमानयशःश्रिये ॥२२०॥
असौ विशेषतः क्ष्मापः पूज्यो लोकहितो हि नः ।
अतो गच्छामि वर्णानां गुरोस्तस्यान्तिके स्वयम् ॥२२१॥
जातायां तत्कथायां च पथिक्यां श्रवसो पथे ।
रत्नावल्यपि संलब्धसमृद्धिरिव शर्मिता ॥२२२॥
पद्मां रत्नावलीं नन्दान्वितामादाय गोलवः ।
बिभ्रदर्घ्यमनर्घ्यं द्रागुपभूपमुपेयिवान् ॥२२३॥
आयातं तं मुनिं वीक्ष्य राजाऽथ सहसोत्थितः ।
अभ्यागात् प्रश्रयिश्रेष्ठे महतामिदमर्हति ॥२२४॥
यथार्हमर्हणीयं तं सचक्रे भूपतिर्यतिम् ।
प्राञ्जलिः प्रोचिवांश्चैवमग्रणीर्नीतिशालिनाम् ॥२२५॥
वयसा तपसा वृद्धा भवन्तो धर्मधूर्वहाः ।
अहं राज्यमहारम्भसंरम्भभरभारितः ॥२२६॥
किमर्थमयमायासः कृतस्तद् मुनिपुङ्गवैः ।

ममैव घटते तत्रागमनं युष्मदन्तिके ॥२२७॥
सुविनीतैर्विनीतस्य वचोभिस्तस्य रञ्जितः ।
सुदुद्गारमिवोदारमुच्चचार वचो मुनिः ॥२२८॥
भूमीन्द्र ! भवदाधीना वर्णानां कार्यसिद्धयः ।
अतः पूज्योऽसि नास्माकं किमु वर्णगुरुर्गुरुः ? ॥२२९॥
किं चैषा भागिनेयी मे पद्मा पद्मेव दुर्लभा ।
ज्ञानिनाऽभिहिता भूप ! भाविनी भामिनी तव ॥२३०॥
कन्यायाः प्राक्कृतैः पुण्यैरधुनोन्मुकुलायितम् ।
अत्रायातोऽसि यत् स्वामिन्नुदुम्बरफलोपमः ॥२३१॥
त्वयि संयमितस्नेहां नलिनीमिव भास्करे ।
उद्वहोद्वाहुधौरेय ! जामेयीं तदिमां मम ॥२३२॥
इत्युक्ते मुनिना मेने स्वाभिप्रायपरंपराम् ।
फलितामचलाधीशस्तायातामिव पद्मिनीम् ॥२३३॥
गान्धर्वविधिना कन्यामेनामेष महीशिता ।
चक्रिश्रियामिवामोघं बीजं पर्यणयद् मुदा ॥२३४॥
दोर्दण्डमण्डिताखण्डमण्डपौ तौ च दम्पती ।
व्यभातामेककावालुलीनौ वल्लीतरू इव ॥२३५॥
इतश्च गगनाभोगे विमानै रत्ननिर्मितैः ।
दूरमनुत्तरस्वर्गभ्रमं कुर्वन्निवामितः ॥२३६॥
पद्मोत्तराख्यः पद्माया भ्राता चापरमातृजः ।
परीतः खेचरैस्तत्र खेचरेन्द्रः समाययौ ॥२३७॥ (युग्मम्)
रत्नावल्याः क्रमद्वन्द्वं नत्वा पद्मोत्तरो नृपः ।
उपात्तप्राभृतोऽभ्यागादुपराजं जगाद च ॥२३८॥
स्वर्णबाहो ! महाराज ! जगदानन्ददायिनीम् ।
प्रज्ञप्तिविद्ययाऽज्ञासं भवद्वार्त्तामिमामहम् ॥२३९॥
खेचरामर्त्यमर्त्यश्रीमुखाम्भोरुहषट्पदः ।
यो भवेद् मत्स्वसुर्भर्त्ता तं पश्यामि स्वचक्षुषा ॥२४०॥
अतोऽत्राहं समायातो यत् त्वा निषेवितुमुद्यतः ।
क्रीतोऽस्मि भवता स्वामिन् ! स्वगुणैर्द्रविणैरिव ॥२४१॥
अनुगृह्य ततो नाथ ! सर्वान् विद्याधराधिपान् ।
वैताढ्यश्रीमुखाम्भोजे भृङ्गी भवितुमर्हसि ॥२४२॥
गाढं निवध्नतस्तस्य मेने राज्ञाऽथ तद्वचः ।
सन्तो हि प्रणयिप्रेमप्रीणनप्रवणाशयाः ॥२४३॥

अथो कुलपतिं प्रेम्णा पृष्ट्वा प्रणतिपूर्वकम् ।
श्वश्रूरत्नावलीपादौ प्राणमत् प्रणयी नृपः ॥२४४॥
तत्कृते-तत्क्षणादेव स पद्मोत्तरखेचरः ।
सद्विमानं स्वविमानप्रतिमानमसूत्रयत् ॥२४५॥
आपृच्छ्य परिवारं स्वं परीतः खेचरैर्नृप ।
आरुरोह विमानं तत् कुबेर इव पुष्पकम् ॥२४६॥
पादौ कुलपतेस्तस्य क्षालयन्ती जलैर्दृशोः ।
पद्माऽपि क्षामयामास मातुलं मन्तुमात्मनः ॥२४७॥
हे तात ! यो मयाऽकारी विघ्नस्तपसि तावके ।
तदज्ञाया ममाशेषं क्षमस्वागः क्षमानिधे ! ॥२४८॥
भूयो भूयः पतन्ती सा पद्मा तत्पदयोः पुरः ।
तमापृच्छ्य स्वसवित्रीसंनिधौ द्रुतमाययौ ॥२४९॥
स्वयमुत्सलतेवाहं हे मातः ! पालिता त्वया ।
मन्दभाग्याऽहमभवं न ते प्रत्युपकारिणी ॥२५०॥
एतेऽभिरामा आरामाः फलदाः सोदरा इव ।
एता मृग्यो विमृग्याक्ष्यो वयस्या इव वत्सलाः ॥२५१॥
संमृष्टा उटजा एते प्रसादा इव शर्मदाः ।
एते च पादपाः क्लृप्तालवाला बालका इव ॥२५२॥
पट्टकूलमिव स्वच्छं मृदुलं वल्कलं त्वद् ।
कथमेकपदे मातरिदं मोक्ष्याम्यहं समम् ॥२५३॥

( त्रिभिर्विशेषकम् )

सौवागांसीव वाष्पाणि मुञ्चन्ती च मुहुर्मुहुः ।
रुदती सुदती साऽथ न्यपतद् मातृपादयोः ॥२५४॥
साऽथ मात्राऽश्रुपूर्णाक्ष्या जगदे गद्गदस्वरम् ।
वत्से ! च्छायेव भूयात् त्वं स्वभर्तु सहचारिणी ॥२५५॥
सपत्नीष्वसापत्न्यं कुर्याः कार्यविचक्षणा ।
तदपत्येषु प्रणयः कार्यः प्रणयिनि ! त्वया ॥२५६॥
किञ्च सम्पादितानन्दा नन्दाख्याऽसौ सखी तव ।
द्वितीयेव भवन्मूर्त्तिर्भूयात्त्वत्सहगामिनी ॥२५७॥
सर्वविज्ञानविज्ञा कुशला सर्वकर्मसु ।
भवतीमनुगन्त्र्यस्ति तदिमामुररीकुरु ॥२५८॥
एवं मात्रा प्रदत्ताभिः शिक्षाभि' सा विचक्षणा ।
धन्यंमन्या स्वमात्मानं निरगाद् नन्दया युता ॥२५९॥

प्रक्षरद्वाष्पपूर्णाक्षी स्मेराक्षी सा शनैः शनैः ।
पत्याश्रितं विमानं तमारोहद् गौरिवाचलम् ॥२६०॥
विमानं तं समारूढो मूर्तिमन्तमिवानिलम् ।
पश्यन्निलातलं भूपो वैताढ्याद्रिमुपेयिवान् ॥२६१॥
अभिगम्य समायातं तत्रैनं वज्रबाहुजम् ।
ढौकनं ढौकयामासुः सर्वे विद्याधराधिपाः ॥२६२॥
मत्वा तस्य भुजिष्यत्वमात्मनां भावि सर्वदा ।
उदग्दक्षिणयोः श्रेण्यो राज्यमस्मै ददुर्नृपाः ॥२६३॥
नमद्विद्याधराधीशमौलिसम्मृष्टपन्नख ।
सोथ तस्थौ कियत्कालं तत्र भूपः सुखैकभूः ॥२६४॥
अन्यदा स्वपुरे गन्तुं समीहाऽजनि भूभुजः ।
स्नेहो हि जन्मनो भूमेर्बलीयान् महतामपि ॥२६५॥
आपृच्छ्य खेचराधीशान् सामन्तान् भूरिभूभुजान् ।
अचालीद् व्योममार्गेण यियासुः स्वपुरं प्रति ॥२६६॥
व्योममार्गे पद्मरागरत्नसारैर्विनिर्मितैः ।
विमानैर्विदधद् बालहेलिलीलोदयभ्रमम् ॥२६७॥
ध्वजैश्चैतैर्विमानस्थैः शतचन्द्रभ्रमं सृजन् ।
वन्दिकोलाहलैः कुर्वन् भ्रमं गर्जैः पयोमुचः ॥२६८॥
खेचरीखेचरैर्व्योम्नि विदधन् नगरभ्रमम् ।
सृजन् श्वेतातपत्रैः खे श्वेताऽब्जसरसीभ्रमम् ॥२६९॥
पत्नीभिः सहितः स्वामिस्ताराभिरिव चन्द्रमा ।
आययौ स्वपुरि क्ष्मापोऽमरावत्यामिवाद्रिभित् ॥२७०॥
(चतुर्भिः कलापकम्)
समेतमनया लक्ष्म्या समेतं भूभुजं निजम् ।
वीक्ष्य पौरा मुदं प्रापुः प्राप्तपुण्योदया इव ॥२७१॥
स्वजनाऽस्वजनानन्दाऽनानन्दोद्भिदकारिणी ।
तदाज्ञा भूधवैर्दध्रे पुष्पदामेव मूर्धनि ॥२७२॥
खेचरीभिः समन्ताभिः क्रीडन्नुक्षेव धेनुभिः ।
भुवं पाति स्म भूमीन्द्रः पाकशासनशासनः ॥२७३॥
इतश्चायुधसद्माधिकारी पुरुषो द्रुतम् ।
आस्थानीस्थितमूर्वीशं प्राञ्जलिः प्रोचिवानिदम् ॥२७४॥
नाथ ! त्वदस्त्रशालायामस्त्राणामधिदैवतम् ।
अजनि चक्ररत्नं दिक्चक्रं द्योतयद् द्युता ॥२७५॥

श्रुत्यौरश्रुतपूर्वं तत् श्रुत्वा तेनोदितं वचः ।
मुदामिव प्रतिष्ठानमजनिष्ट महीपतिः ॥ २७६ ॥
विग्रहादथमुत्थायोपास्त्रागारमुपेयिवान् ।
प्रेक्षांचक्रे चक्ररत्नं चक्री रोमाञ्चकञ्चुकः ॥२७७॥
चक्री चक्रं नमश्चक्रे ललाटघटिताञ्जलिः ।
शक्रं देवमिवाराध्यं क्षत्रियाणामहर्निशम् ॥२७८॥
आदाय मृदुलं बालहस्तं हस्तेन भूभुजा ।
उन्मृष्टं चक्ररत्नं तत् प्रतिबिम्बमिवाशयम् ॥२७९॥
स्नानासनं निवेश्योच्चैश्चक्रं भूशक्र आदरात् ।
सलिलैः स्नपयामास प्रतापमिव जङ्गमम् ॥२८०॥
चक्रमभ्यर्च्य कस्तूरीकर्प्पूरागुरुचन्दनैः ।
प्रत्यग्रैः पूजयामास पुष्पैः सौरभ्यमासुरैः ॥२८१॥
मङ्गलान्यष्ट रजततन्दुलैरतुलैस्तत्र ।
चक्रे चक्राग्रतश्चक्री जयश्रीणामिवाङ्कुरान् ॥२८२॥
गान्धर्वविधिमाधाय तदग्रे पार्थिवाग्रणीः ।
इतीमं स्तोतुमारेभे चक्रं गुरुमिवान्तिषत् ॥२८३॥
त्वं जयाखण्डषट्खण्डश्रयरङ्गावतारक ! ।
शत्रुस्त्रीनेत्रनेत्राम्भःपिपासाजयसूचक ! ॥२८४॥
एवं विहितसद्भक्ति कृत्वा चाष्टाह्निकोत्सवम् ।
स्नानपीठमलंचक्रे चक्री हंसः इवाम्बुजम् ॥२८५॥
तैलैरभ्यङ्गथ सर्वाङ्गे चूर्णैश्चोद्धृत्य चारुभिः ।
विमलैः सलिलैरेनं स्नपयामासुरङ्गनाः ॥२८६॥
रेजुः काश्चिच्च वक्षोजैः स्पर्धिकुम्भाङ्कितोरसः ।
एतत्तुल्या स्तनश्रीर्न इति वक्तुमिवोद्यताः ॥२८७॥
रेजुः काश्चित् क्षिपन्त्यश्च पयः पार्थिवमूर्धनि ।
प्रोत्तुङ्गे काञ्चनगिरेः शृङ्गे घनघटा इव ॥२८८॥
रेजुः काश्चिच्च कनककलशाङ्कितमस्तकाः ।
बिभ्रत्य इव लावण्यमसंमादिव विग्रहे ॥२८९॥
काश्चिच्च क्षालयामासुस्तत्क्रमौ रक्तिमाङ्कितौ ।
सञ्जातालक्तकभ्रान्त्या उद्धर्तुमिव हस्तयोः ॥२९०॥
काश्चिच्च चिक्षिपुश्चक्षुःकटाक्षान् सलिलैः समम् ।
स्नानभङ्गोऽम्भसः स्वाल्प्याद् मा भूदस्येति कम्पया ॥२९१॥
एवं स विहितस्नानो रेजे राजशिरोमणिः ।

वार्विन्दुमिर्विपुलैर्ग्नैर्नक्षत्रैरिव मन्दरः ॥२९२॥
पट्टकूलाञ्चलेनासौ निर्जलीकृतविग्रहः ।
पर्यदधत् सिते वस्त्रे सूते इव सितांशुना ॥२९३॥
दिव्यदामधरो दिव्यैश्चन्दनादिभिरार्चितः ।
ललाटपट्टे तिलकं माङ्गल्यं कृतवानसौ ॥२९४॥
वीराङ्कमिव वलयं पाणौ भूवलयेश्वरः ।
बभार भटमुख्यानां मुख्यमाभरणं ह्रदः ॥२९५॥
सोऽधाद् मुक्तावलीं वक्षःस्थलमण्डनमादिमम् ।
मुखेन्दोरुदयाद्धर्षशौर्याब्धेरिव बुद्बुदान् ॥२९६॥
भूशक्रः सूत्रयामास कटीसूत्रं कटीतटे ।
अभ्यन्तर्मुक्तादवादौ चेत्रिताहीशतां स्मरन् ॥२९७॥
कुण्डले अयतः स्मैनं सकर्ण कर्णपर्णयोः ।
प्रतापमुखवित्रस्ते सूर्येन्द्वोरिव मण्डले ॥२९८॥
नृकोटीरः स कोटीरं वर्ण्यस्वर्णमयं दधौ ।
काञ्चनाचलचूलाग्रे हेलिबिम्बमिवोल्बणम् ॥२९९॥
पुण्डरीकातपत्रं स एकं मूर्ध्नि दधार च ।
एकातपत्रं मद्राज्यमिति जनान् विदन्निव ॥३००॥
छत्रैस्त्रिभिर्नृपच्छत्रं व्यभादिन्दुसनाभिभिः ।
मिलितैरदभ्रैरभ्रैः शारदीनैरिवाद्रिराट् ॥३०१॥
चामरैर्वीजितो रेजे राजा कुन्देन्दुसोदरैः ।
निर्झरैः काशसंकाशैरिव शैलशिरोमणिः ॥३०२॥
चामरग्रहणव्यग्रपाणिपण्याङ्गनाननैः ।
भाति स्म भूपतिस्ताम्यचारामिरिव शीतगुः ॥३०३॥
वर्षं सन्दानधाराभिर्गर्जन्तं निम्ननिस्वनम् ।
गच्छन्तं मन्दया गत्या मूर्तिमन्तमिवाम्बुदम् ॥३०४॥
उत्तभकुम्भसंरम्भस्थिताशाननान्तरम् ।
मदवारिक्षरद्धाराधोरणीधौतभूतलम् ॥३०५॥
तालवृन्तैरिवोत्तालै. कर्णतालैः प्रचारिभिः ।
विनिवारयन्तं भ्रमरान् भ्रमतो दानविह्वलान् ॥३०६॥
कालिन्दीजलकल्लोलस्वकज्जलश्यामलच्छविम् ।
गतं जङ्गमतां मूर्त्या शैलोच्चयमिवाञ्जनम् ॥३०७॥
सिन्दूराक्तशिरःपिण्डजितबालार्कमण्डलम् ।
शुण्डादण्डपराभूतभुजगाधिपविग्रहम् ॥३०८॥

जय जयेत्युच्चरद्ध्वन्दितततमङ्गलमञ्जुलम् ।
अध्यारुरोह मनुजकुञ्जरो रत्नकुञ्जरम् ॥३०९॥(पड्भिः कुलकम्)
निःशेषसैन्यसंहूता दूतिका इव सर्वतः ।
प्रणेदुः वर्यतूर्याणां पङ्क्तय पटुनिस्वनाः ॥३१०॥
प्रभूतैः पत्तिभि. क्लृप्तपरिपन्थिविपत्तिभिः ।
तदुच्चैःश्रवोभिश्चोच्चैःश्रवस्तुल्यैस्तुरङ्गमैः ॥३११॥
अनेकपैरनेकैश्च हस्तिमल्लसहोदरैः ।
पटुघण्टाटणत्कारकारिभि. स्वमहारथैः ॥३१२॥
भूपतिः स्थगिताकाशः पांशुभिः पृतनोत्थितैः ।
पूर्वं पूर्वदिशं प्रति सोऽचलत् चक्री दुर्धरः ॥३१३॥(त्रिभिर्विशेषकम्
अचालीच्चक्रमग्रेऽस्याः पृतनाया नभश्चरम् ।
ध्वस्तारातितमःस्तोमं विम्बं व्योममणेरिव ॥३१४॥
हयरत्नं समारूढो दण्डरत्नधरः पुरः ।
सेनानीरत्नमचलच्चक्रिमूर्त्तिरिवापरा ॥३१५॥
मन्त्रशक्तिरिवात्यर्थं कर्मठं शान्तिकर्मणि ।
पुरोधोरत्नमचलदचलापतिना समम् ॥३१६॥
दिव्यभोजनं निर्मातुमलं सैन्यकृतेऽचलत् ।
गृहिरत्नं समं राज्ञा शत्रशालेव जंगमा ॥३१७॥
विश्वकर्मेव निर्मातुमलं सैन्यश्रियाविकम् ।
अचालीद् वार्धकिरत्नं रत्नगर्भाभुजा सह ॥३१८॥
चर्मरत्नमचालीच्च रात्रिरत्नमिव द्रुतम् ।
तदैव स्थानविस्तारशक्तिविस्फूर्त्तिमूर्त्तिमत् ॥३१९॥
पुनः प्रचेलतु रत्ने मणिकाक्किण्यौ तमोपहे ।
रवीन्द्वो. प्रसरद्धाममण्डले मण्डले इव ॥३२०॥
असिरत्नं नृरत्नेन सार्धमचालीदुल्वणम् ।
दीप्रप्रतापदीपस्य कलिकेवास्य चक्रिणः ॥३२१॥
एवं च गच्छतस्तस्य चक्रिणोऽध्वनि दिग्जय. ।
शकुनैरनुकूलार्थैः प्रत्यपादि सुरैरिव ॥३२२॥
रजोभिर्भूरिभिः सैन्योत्थितैश्छन्नं नभोऽङ्गणम् ।
भूमेः समुत्थितैर्वारिवाहाभ्रपटलैरिव ॥३२३॥
रजस्तमसि सान्द्रेऽपि तत्सैन्यं सुखमव्रजत् ।
दृष्टमार्गमिवोद्दीप्रकुन्तकोटिप्रदीपकै ॥३२४॥
चित्कारैः स्यन्दना वाहा हेषाभिर्गर्जितैर्गजाः ।

कुन्ताग्रैः सुभटाः सैन्ये लक्ष्यन्ते पांशुदुर्दिने ॥३२५॥
प्रयाणैरेकयोजनमात्रैर्मार्गे व्रजन् नृपः ।
प्रापत् क्रमान्नतः कूलंकषाकूलं स दक्षिणम् ॥३२६॥
वारीणि वारुणादेव नद्या आददतस्तदा ।
ववर्षुर्मदमित्यते मा भूत् स्तोकमदःपयः ॥३२७॥
कार्श्यं गङ्गा नैतत्सैन्यगृह्यमाणजलाऽप्यगात् ।
स्फार्ति साऽतीव तद्वैरिमानिनीनयनाम्बुभिः ॥३२८॥
एवं स्व कूलिनीकूलेऽनुकूलगमनं व्रजन् ।
मागधं तीर्थमापैष चक्री चक्रानुगः क्रमात् ॥३२९॥
द्वादशयोजनायामं नवयोजनविस्तरम् ।
सैन्यं न्यवीविशदसौ पूर्वपाथोधिरोधसि ॥३३०॥
वार्धकिः कृतवांस्तत्र बन्धुरां सौधधोरणिम् ।
एकं च पौषधागारमगारं पुण्यसम्पदाम् ॥३३१॥
कृताष्टमतपास्त्यक्तस्रग्नेपथ्यविलेपनः ।
पौषधौषधमग्रहीत् (रोगद्वयविनाशकम् ?) ॥३३२॥
मागधतीर्थाधिदेवं देवं चेतसि संस्मरन् ।
कुशसंस्तारके तत्र चक्री तस्थौ दिनत्रयम् ॥३३३॥
पौषधान्तेऽथ पौषधागाराद् निर्गतवानसौ ।
स्वर्भानुमुखतस्तूर्णं पूर्णेन्दोरिव मण्डलम् ॥३३४॥
स्वर्णस्तम्भपताकाभिर्भासुरं वरविग्रहम् ।
निभृतं च भृतं दिव्यशक्तिभिः शस्त्रजातिभिः । ३३५॥
किङ्कणीक्वाणसुभगं चतुरश्वं महारथी ।
रथमध्यास्त मघवा विमानमिव पालकम् ॥३३६॥ (युग्मम्)
तुरङ्गप्रोथफूत्कारत्रस्तनक्रकुले कूले ।
उच्छलल्लोलकल्लोलकोलाहलसमाकुले ॥३३७॥
प्रविश्य जलधौ नाभिदघ्नं जलनिधेर्जलम् ।
अभ्यगाहत भूभर्ता रथेन रथिनां वर. ॥३३८॥ (युग्मम्)
अधिज्यीकृतकोदण्डः पाणिनाकृष्य शिञ्जिनीम् ।
धनुर्वेदोङ्कारमिव स टङ्कारमकारयत् ॥३३९॥
भुजङ्गमिव रन्ध्राद् नीरन्ध्रौजाः क्षमापतिः ।
अथेषुमिषुधेः स्वीयनामाङ्कं कृतवान् बहिः ॥३४०॥
सौष्ठवस्पृष्टया मुष्टया बाणं बाणासने नृपः ।
न्यधात् प्रत्यर्थिभूपानां वज्रदण्डमिवोरसि ॥३४१॥

आकर्णान्तमाचकर्ष सायकं लोकनायक । .
किञ्चिद्वक्तुमनःपुङ्ख वचःश्रोतुमिवोद्यतः ॥३४२॥
क्ष्मापं तादृगवस्थानस्थितं वीक्ष्य पयोनिधिः ।
चुक्षोभ मम सर्वस्वं हर्तुमित्येष उद्यतः ॥३४३॥
सुरासुरोरगाधीशैरभ्यधिष्ठितमन्वहम् ।
पुङ्खानने वहिर्मध्ये तत्रैवावस्थितैरिव ॥३४४॥
साक्षरमाज्ञाकारकं सलेखमिव हेरिकम् ।
बाणं मागधतीर्थेशं प्रत्यमुञ्चद् महीपति. ॥३४५॥
पवनापूरितपुङ्खो वासुखप्रस्थविहङ्गमः ।
वाणः स रुरुवे गच्छन्नुत्पक्ष इव पक्षिराट् ॥३४६॥
वज्रपाणेरिव वज्रो दण्डो दण्डधरादिव ।
विद्युद्दण्ड इवाम्भोदात् कोपशक्तिर्मुनेरिव ॥३४७॥
शूलपाणेरिव शूलं सीरं सीरधरादिव ।
तत्कोदण्डादधोगच्छन्नशोभिष्टेष सायकः ॥३४८॥ (युग्मम्)
अतिक्रामन् क्रमादेष बाणो द्वादशयोजनीम् ।
मागधेशसभाभूमौ हृदि वज्रमिवापतत् ॥३४९॥
विद्युत्पात इवोत्पातकृत् पृषत्क पतन् पुर' ।
सद्यो मागधतीर्थेशक्रोधाग्नीन्धनतामगात् ॥३५०॥
पतितं पत्रिणं पृथ्व्यां ततो मागधतीर्थराट् ।
भोगीवात्मीयहन्तारं वीक्ष्य कोपपरोऽजनि ॥३५१॥
कृतान्तकार्मुकाकारभ्रूकुटीभङ्गभीषणः ।
वायुपूरितभस्त्राभनासासम्पुटदारुणः ॥३५२॥
आताम्रीकृतनयनस्त्रिरेखाकृतभालभू ।
इत्यसौ वचनं प्रोच्चै कोपोद्गारमिवावमत् ॥३५३॥ (युग्मम्)
य कण्डूं चक्षुपोस्तीक्ष्णकुन्ताग्रेण चिकीर्षति ।
यः केसरैः केसरिणस्तालवृन्तं विधित्सति ॥३५४॥
सुखाभिलाषुको यश्च संयमिनीं दिदृक्षति ।
मज्जनाय भुजाभ्यां यो वैतरणीं तितीर्षति ॥३५५॥
अवज्ञातस्वजीव' स चिक्षेपैनं शिलीमुखम् ।
इति ब्रुवन् स दष्टोष्ठसम्पुटं विष्टरं जहौ ॥३५६॥(त्रिभिर्विशेषकम्)
हस्तेन हस्तमास्फाल्य कोशात् कौक्षेयकं द्रुतम् ।
आकर्षत् कर्दमाच्छुण्डादण्डं कुञ्जरादिव ॥३५७॥
तस्मिंश्च कुपिते बाढं कुपितास्तत्पदातयः ।

स्वामिवैरिणि यः कोपाटोपोऽधात् स हि सेवकः ॥३५८॥
शुद्धधीर्धीसखस्तस्य वीक्ष्य रोषारुणेक्षणम् ।
नाथं, जग्राह तं बाणं स्वामिक्रोधाग्निवारिदम् ॥३५९॥
वाचयामास स प्रीतिवर्णान् निर्वर्ण्य पत्रिणम् ।
स्वर्णबाहुरयं चक्री त्वत्तः सेवां समीहते ॥३६०॥
आदाय तमिषुं मन्त्री समागात् स्वामिनोऽन्तिकम् ।
बाणं च दर्शयामास क्रोधव्याधेरिवौषधम् ॥३६१॥
स्वर्णबाहुरयं चक्री त्वत्सेवापूर्वकं विभो ! ।
त्वत्तः समीहते दण्डं तत् त्वं च प्रगुणीकुरु ॥३६२॥
श्रवणाद् मन्त्रिणो वाचो वीक्षणात् तस्य पत्रिणः ।
इयाय शान्ति तत्कोपोऽङ्गारराशिरिवाम्भसः ॥३६३॥
तदाज्ञामिव तं बाणमादायोपायनान्वितः ।
समेत्य मागधाधीशश्चक्रिणं प्राञ्जलिर्जगौ ॥३६४॥
दिष्ट्या दृष्टोऽसि दृष्ट्याऽद्य मया त्वं जगतीपते ! ।
निशाक्लेशासशोकेन कोकेनेव नभोमणिः ॥३६५॥
भूपकोटीर ! काटीरमिवाज्ञां तव मूर्धनि ।
अतः परं वहिष्यामि भृत्यं मामुररीकुरु ॥३६६॥
उक्त्वैवमर्पयामास मार्गणं तं च चक्रिणे ।
कोटीरं कुण्डले द्वे च स सर्वस्वमिवात्मन ॥३६७॥
जग्राह तदनुग्रहहेतवे प्राभृतं च तत् ।
राजा तं समभाषिष्ट भाषयाऽमृततुल्यया ॥३६८॥
तत्रैव मागधाधीशं यशःस्तम्भमिव स्वकम् ।
संस्थाप्य विससर्जैनं सैन्यं चागाद् महीशिता ॥३६९॥
अपसृत्य ततः स्थानाद् विहिताष्टमपारणः ।
चक्री चक्रे मागधेशोत्सवमष्टाह्निकं तदा ॥३७०॥
ततो नभसि चलता चक्रेणार्कसनाभिना ।
नेत्रिणेवानुगतः स चक्रवर्त्ती चचाल च ॥३७१॥
प्रत्यहं पथि गच्छंश्च प्रयाणैरेकयोजनैः ।
चक्री वरदामतीर्थं प्रत्यगाच्चक्रपृष्ठगः ॥३७२॥
एलाककोललवलीलवङ्गफलसङ्कुले ।
दक्षिणाम्भोधिपुलिने स स्वसैन्यं न्यवीविशत् ॥३७३॥
तत्राप्यष्टमभागेष पौषधव्रतमाददे ।
पौषधान्ते रथारूढोऽम्भोधिमध्ये समागमत् ॥३७४॥

पूर्वेण विधिना चक्री वरदामसुरं प्रति ।
प्राहिणोद् बाणमात्मीयमिव सन्देशहारकम् ॥३७५॥
शान्तिं जगाम तन्मन्युराश्रुतैराशुगाक्षरैः ।
दिव्यमन्त्राक्षरै. सर्पन् विषवेग इवोरगः ॥३७६॥
वरदामामरः सोऽथ तमादाय शिलीमुखम् ।
उपतस्थे महीनाथं दूताहूत इवानुगः ॥३७७॥
प्रीत्यैवानाथनाथस्त्वमनाथेन मयाऽधुना ।
दृष्टोऽस्यद्याटताऽटव्यां तापार्तेनेव भूरुहः ॥३७८॥
प्राढ्यमिव तं बाणं मुक्त्वाऽस्याग्रे ददौ मुदा ।
दिव्यमेकं कटीसूत्रं सूतमंशोरिवांशुभिः ॥३७९॥
प्राभृतीकृतवानेष पुरस्ताच्चक्रिणः पुन. ।
मुक्ताराशिं पयोराशेः सर्वस्वमिव संहृतम् ॥३८०॥
अनुग्रहाय जग्राह तत्सर्वं तेन ढौकितम् ।
तत्रैव स्थापयामास तं सामन्तमिवात्मन. ॥३८१॥
नत्वैनं तुष्टिपुष्टात्मा तत्रास्थाद् वरदामपः ।
पीतामृतमिव स्वामिप्रसादस्तुष्टिपुष्टिकृत् ॥३८२॥
स्कन्धावारं समागत्य राजा विजयिनां वरः ।
सार्धमात्मपरीवारैर्विदधेऽष्टमपारणम् ॥३८३॥
तत्रैव स्वीयसर्वर्द्ध्याऽष्टाह्निकं जगदुत्सवम् ।
उद्दिश्य वरदामेशं चक्री चक्रे महोत्सवम् ॥३८४॥
ततः प्रभासमुद्दिश्य चक्री चक्रानुगोऽचलत् ।
प्रतीचीं प्रति प्राचीनबर्हिबन्धुरिवापर. ॥३८५॥
रथचीत्कारभेदेन भुवमाराटयन् पथि ।
दिनैः कतिपयैः प्राप तत्सैन्यं पश्चिमाम्बुधिम् ॥३८६॥
पूगीप्रियालहिन्तालनालिकेरवनाकुले ।
मण्डपीकृतताम्बूलवल्लीपल्लवलालिते ॥३८७॥
निदधे च निजस्कन्धावारं वारितशात्रवः ।
तत्र भूमीभुजां मुख्यः पश्चिमाम्भोधिरोधसि ॥३८८॥ (युग्मम्)
प्राग्वत् तत्रापि शिबिरे पौषधं पौषधौकसि ।
चक्री चक्रे प्रभासेशं विदधद् ध्यानगोचरम् ॥३८९॥
पौषधान्ते महीनाथो रथमारुह्य साश्वकम् ।
सत्वरं पश्चिमाम्भोधिं सिन्धुपूर इवाविशत् ॥३९०॥
बाणं बाणासने पञ्चबाणरूपो निधाय सः ।

प्रभासाधीशमुद्दिश्याऽमुञ्चदिन्द्र इवाशनिम् ॥३९१॥
निर्वर्ण्य बाणवर्णास्तान् सोऽपि कोपं जहौ द्रुतम् ।
गन्धान्धमधुपैः क्रुद्धान् गन्धेभानिव मत्कुणः ॥३९२॥
बाणपाणिरुपादायोपायनं स उपेयिवान् ।
गुरुं शिष्य इव प्रोचे चक्रिणं च कृताञ्जलिः ॥३९३॥
अद्य भूप ! भवन्मूर्त्तिं वीक्ष्याहमभजं मुदम् ।
वर्षाकलुषवाःक्लिष्टो मराल इव मानसम् ॥३९४॥
उरोमणिशिरोरत्नाङ्गदस्वर्णादिकं मुदा ।
ददाति स्म नृपायैष इषुदानपुरःसरम् ॥३९५॥
उपदादानतुष्टः स तत्रैवाऽस्थापि भूभुजा ।
आगतं च स्वयं सैन्ये वन्ध्याद्राविव कुम्भिना ॥३९६॥
सद्यः कल्पद्रुमेनैव गृहिरत्नेन निर्मितम् ।
दिव्यं भोज्यमभुक्तैष पार्थिवोऽष्टमपारणे ॥३९७॥
विहिताष्टाह्निकमहो महीनाथपुरन्दरः ।
अन्वादित्यमिवालोकोऽनुचक्रमचलद् मुदा ॥३९८॥
ततः प्राचीमुखं प्राचीस्वामीव विक्रमी क्रमात् ।
स्कन्धावारं निदधेऽनु सिन्ध्वोकः सिन्धुरोधसि ॥३९९॥
विदधेऽथाष्टमं राजा तत्तपःकम्पितासना ।
सिन्धुदेव्यप्युपेयाय प्राभृतं बिभ्रती करे ॥४००॥
चिरञ्जीव चिरं नन्देत्याशीःपूर्वं जगाद सा ।
किंकर्येव मया कार्यं किं कार्यं देव ! तद्वद ? ॥४०१॥
सहस्ररत्नकुम्भानां स्पष्टं च विष्टरे उभे ।
केयूरे कटके दिव्यं वासश्चादाद् नृपाय सा ॥४०२॥
तुराषाडिव तत्सर्वं सिन्धोरादाय भूपतिः ।
व्यसृजत् तां समानन्द्य चरितुं गामिवोषसि ॥४०३॥
कृतपारण ऊर्वीशो विधायाष्टाह्निकोत्सवम् ।
अनुचक्रं चचालाग्रेऽनुप्रवाहमिवोदकम् ॥४०४॥
ततो गच्छन् क्रमाद् मार्गे चक्री पूर्वोत्तराशया ।
ययौ श्रियाऽऽढ्ये वैताढ्ये विजयार्धद्वयावधौ ॥४०५॥
कटके दक्षिणे तस्य निजं सैन्यं निवेश्य च ।
कृताष्टमतपाश्चक्री वैताढ्याधीशमस्मरत् ॥४०६॥
तद्विष्टरमकम्पिष्टाश्वत्थपत्रमिवानिलात् ।
आगतो ज्ञात्वा चक्रीशागतिं स च जगाविति ॥४०७॥

इत्यावृत्त इवैषोऽस्मि प्रेष्यस्ते काश्यपीपते ! ।
तदादिश ममादेशं किंकरः किं करोम्यहम् ? ॥४०८॥
रत्नालङ्काररत्नानि भूरिभद्रासनानि च ।
स सद्यः प्रददौ न्यासीकृतानीवावनीपतेः ॥४०९॥
प्रतिजग्राह राजाऽपि तेनोपदीकृतं मुदा ।
स्वामिप्रसन्नदृक्चिह्नमुपदादानमादिमम् ॥४१०॥
संमान्य विससर्जैनं गृहायातमिवातिथिम् ।
तत्र चक्रे पारणान्ते चक्री चाष्टाह्निकं महम् ॥४११॥
चक्रानुगोऽचलच्चक्री तमिस्राद्रां गुहां प्रति ।
तत्सेना चाविशत् तत्र सार्थः सार्थपतेरिव ॥४१२॥
नृपालः स्मरणीकृतकृतमालोऽष्टमं व्यधात् ।
सोऽभ्यगादुपदापाणिश्चक्रिणं चलितासनः ॥४१३॥
तमिस्रायाः कन्दराया द्वारे द्वाःस्थ इवास्म्यहम् ।
सेवकं बालकमिव मां प्रशाधि धराधव ! ॥४१४॥
इत्युक्त्वा सोऽर्पयामास तस्मै वसुमतीभुजे ।
युवतीरत्नयोग्यानि तिलकानि चतुर्दश ॥४१५॥
स्त्रीरत्नोचितदिव्यस्रग्वस्त्रालङ्करणानि च ।
तत्कोशाध्यक्ष इव स व्यतरत् पृथिवीभुजे ॥४१६॥
तदादानेन संमान्य व्यसृजत् तमिलापतिः ।
कृतभुक्तिश्च विदधेऽष्टाह्निकं स महोत्सवम् ॥४१७॥
अथान्येद्युः समाहूय चक्रवर्त्ती चमूपतिम् ।
गुरुः शिष्यमिवैवं तमादिदेश प्रसन्नवाग् ॥४१८॥
सिन्धुराट्सिन्धुवैताढ्यपर्यन्तं सिन्धुनिष्कुटम् ।
दक्षिणं चर्मरत्नेनोत्तीर्यापगां वशीकुरु ॥४१९॥
चमूपतिगुणोपेतश्चमूपतिरसौ द्रुतम् ।
दामेव निदधे मूर्ध्नि शासनं क्षितिशासिनः ॥४२०॥
सामन्तसैन्यैः सहितः प्रतिबिम्बैरिवात्मनः ।
ग्रैवेयकं दधत् कण्ठे जयश्रीदोर्लतामिव ॥४२१॥
बिभ्राणो हृदये हारं शौर्यपुञ्जमिवामलम् ।
मौलौ मौलिं दधानश्च प्रसादमिव चक्रिणः ॥४२२॥
निषङ्गौ द्वौ दधत् पृष्ठे स्वदोर्दण्डाविवोद्भटौ ।
बिभ्रच्चापमधिज्यं च धनीकृतमिवाशनिम् ॥४२३॥
महादण्डधरो दण्डपतिर्दोर्दण्डचण्डिमा ।

कुम्भिरत्नमथारोहत् केसरीव गिरेः शिरः ॥४२४॥(पञ्चभिःकुलकम्)
अथ सैन्यं समादाय चक्रिणश्च चमूपतिः ।
अस्थात् सिन्धुतटे भर्तुमिवैतां सैन्यपांशुभिः ॥४२५॥
यत्रोषस्युप्तधान्यानां निष्पत्तिः स्याद् दिनात्यये ।
विस्फूर्तिं याति यत्स्फातिः क्षणाद् द्वादशयोजनम् ॥४२६॥
नदीनदनदीनाथमुख्याम्बूत्तारणक्षमम् ।
अस्प्राक्षीत् पाणिना चर्मरत्नं तत् पृतनापतिः ॥४२७॥ (युग्मम्)
प्रासरच्चर्मरत्नं तद् युगपत् पुलिनद्वये ।
मुक्तं तत्सलिले गुह्यमिव दुर्जनचेतसि ॥४२८॥
उत्तीर्य तेन मार्गेण कुल्यामिव नदीमिमाम् ।
आससादापरं कूलं यशोमूलमिवात्मनः ॥४२९॥
निर्जित्य यवनांस्तत्र तेभ्यश्चादाय प्राभृतम् ।
तत्कीर्त्तिमिव तत्सर्वमढौकिष्टैष चक्रिणे ॥४३०॥
सच्चक्रे चक्रिणा चक्रपतिर्देव इवात्मनः ।
स्वावासं सोऽप्यगात् तुष्टस्त्रैलोक्यैश्वर्यभागिव ॥४३१॥
अथान्येद्युः समाकार्य चक्रवर्त्ती चमूपतिम् ।
उद्घाटय तमिस्राया द्वारमेवं समादिशत् ॥४३२॥
सेनानीरपि तत्राशु गत्वा चक्रेऽष्टमं तपः ।
अष्टमान्ते दधद् धूपघटीं द्वारमुपेयिवान् ॥४३३॥
आलोकमात्रतस्तस्यास्तत्कपाटौ प्रणम्य च ।
अष्टाह्निकोत्सवं तत्र विदधे पृतनापति ॥४३४॥
कपाटोद्घाटनं ज्ञात्वा विजयी विजयेश्वरः ।
करिरत्नं समारूढस्तमिस्राद्वारमाययौ ॥४३५॥
भानुवन्द्रासुरं यक्षसहस्राधिष्ठितं नृपः ।
मणिरत्नमुपादत्त चतुरङ्गुलमुल्वणम् ॥४३६॥
दक्षिणे कुम्भिनः कुम्भे न्यस्य तद् मेदिनीधनः ।
अनुचक्रं तमिस्राया गुहाया द्वारमाविशत् ॥४३७॥
षट्दलं सेवितं यक्षसहस्रेणाष्टकर्णिकम् ।
सूर्येन्दुकान्तकाकिणीरत्नं राजा ततोऽग्रहीत् ॥४३८॥
गुहाभ्यर्णद्वये तेन गोमूत्रिकाक्रमाद् नृपः ।
अलिखद् मण्डलान्याशु योजने योजने व्रजन् ॥४३९॥
धनुःपञ्चाशदायामान्युद्योतप्रवणानि च ।
जातान्यखिलान्येकेन पञ्चाशत्तकान्यन्यथा ॥४४०॥

गच्छंस्तेन प्रकारेण गुहागर्भस्थिते उभे ।
उन्मग्नानिमग्ने नाम्ना निम्नगे प्राप भूपतिः ॥४४१॥
चक्री वार्द्धकिरत्नेन कृतेन रत्नसेतुना ।
उभे ते सरितौ तत्रोत्ततार वरलीलया ॥४४२॥
व्रजन् क्रमाद् नृपो गुहाप्राच्यद्वारमुपेयिवान् ।
तत्कपाटद्वयमपि भीत्येवोद्घाटितं क्षणात् ॥४४३॥
प्रथमं निरगाच्चक्री गुहातोऽर्क इवाम्रतः ।
चक्रवर्गर्भिरिवाकृष्टा चक्रिसेनापि निर्ययौ ॥४४४॥
आयामविस्तरोच्चत्वे पञ्चाशद्द्वादशाष्टभिः ।
योजनैः प्रमितां गुहामतिचक्राम तां नृप. ॥४४५॥
उदग्विजयवर्पार्धे विजेतुं चक्रिणां वरः ।
प्राविशद्विषयान् म्लेच्छभूपानां तन्निवासिनाम् ॥४४६॥
ज्ञात्वा तेऽथ किरातास्तं चक्रवर्तिनमागतम् ।
जन्याय जज्ञिरे सज्जाः स्वदलैर्निखिलैरपि ॥४४७॥
म्लेच्छैः सार्धं चक्रिचमूर्युयुधे विविधायुधैः ।
अथैषा तै. पराभूता मरालीव शकुन्तजैः ॥४४८॥
सेनानाथोऽथ ता सेनामनाथामिव विद्रुताम् ।
वीक्ष्याभूत् संयते सज्जो जितकाशी हि तत्र सः ॥४४९॥
सोऽष्टशताङ्गुलं दैर्घ्येऽशीत्यङ्गुलं समुच्छ्रितम् ।
परिणाहे च वपुष एकन्यूनं शताङ्गुलम् ॥४५०॥
विंशत्यङ्गुलवाहुं च शुद्धलक्षणलक्षितम् ।
प्रशस्तैर्द्वादशावर्तैर्भूषितं भूषणैरिव ॥४५१॥
मारुतमिव जङ्घालं कमलापीडमाह्वया ।
अश्वरत्न चमूनाथोऽभ्यारोहद् व्यूढकङ्कटः ॥४५२॥
( चतुर्भिः कलापकम् )
दैर्घ्यविस्तारयोर्माने पञ्चाशत्षोडशाङ्गुलम् ।
अर्धाङ्गुलं च बाहुल्ये सोऽसिरत्नमुपाददे ॥४५३॥
सुसज्जितचमूचक्रश्चमूनाथोऽथ सत्वरम् ।
गत्वा जिगाय तान् म्लेच्छान् कुञ्जरानिव केसरी ॥४५४॥
एतेभ्यः काञ्चनरत्नोपदामादाय सैन्यराट् ।
चक्रिणे ढौकयामास स्वौजोद्रोरिव मञ्जरी ॥४५५॥
प्रयाणै. कतिभिश्चक्री ततोऽगाद् निषधाचलम् ।
कृत्वाऽष्टमं रथारूढो ययौ च तदुपत्यकाम् ॥४५६॥

दधानामोष्ठबिम्बे च बिम्बीबिम्बे इवारुणे ॥४७३॥
यथार्हन्यस्तरत्नालङ्कारां रत्नखनीमिव ।
रम्यां सुरासुरस्त्रीणां सौभाग्यैरिव निर्मिताम् ॥४७४॥
अगण्यपुण्यलावण्यां कन्यां स्त्रीरत्नमद्भुताम् ।
तेऽथास्मै प्राभृतीचक्रुः सर्वस्वमिव सञ्चितम् ॥४७५॥
(षड्भि: कुलकम्)

अथान्यदपि रत्नादि ढौकितं खेचरेश्वरैः ।
तदादात् सर्वमुर्वीशश्चिह्नं चक्रिश्रियामिव ॥४७६॥
विसृज्यैतांस्ततश्चक्रयत्नु चक्रं प्राप जाह्नवीम् ।
सेनां न्यवीविशत् तस्याः कूले कोमलवालुके ॥४७७॥
सेनान्याऽसाधयत् सोऽथ तस्या उत्तरनिष्कुटम् ।
गङ्गादेव्यपि सच्चक्रे चक्रिणं सिन्धुवद् मुदा ॥४७८॥
व्यावृत्तोऽथ ततश्चक्रमनुगच्छन् क्षितीशिता ।
खण्डप्रपाताह्वां गुहां मृगेन्द्र इव लब्धवान् ॥४७९॥
तदीयाभ्यर्णसंन्यस्तसैन्यो वसुमतीपतिः ।
आराधयन् नाट्यमालदेवमष्टमभक्तभाग् ॥४८०॥
स चागादुपदापाणिश्चक्रयादात् तां स्वकामिव ।
सत्कृत्य विससर्जैनं स्वयं च कृतपारणः ॥४८१॥
निदेशादथ भूभर्तुः पूर्ववत् पृतनापतिः ।
स्वगृहस्येव गुहायाः कपाटावुदघाटयत् ॥४८२॥
उद्घाटितकपाटां तां पूर्ववद् भूपपुङ्गवः ।
गुहामुल्लङ्घयामास केसरीव वनस्थलीम् ॥४८३॥
निवेश्य सेनां जाह्नव्याः पुलिने पश्चिमे ततः ।
निधीन् नव समुद्दिश्य चक्री चक्रेऽष्टमं तप. ॥४८४॥
पौपधान्ते क्ष्माजानिमभ्यगुर्निधयो नव ।
गुह्यकानां सहस्रेणाधिष्ठितास्ते पृथक् पृथक् ॥४८५॥
नैसर्प. पाण्डुकश्चैव पिङ्गलः सर्वरत्नकः ।
महापद्म-काल-महाकाल-माणव-शङ्खका. ॥४८६॥
उच्चविस्तारदैर्घ्येऽष्टनवद्वादशयोजनाः ।
ते समाः काञ्चनाश्चाष्ट चक्रोपरि प्रतिष्ठिताः ॥४८७॥
चक्रचन्द्रार्कचिह्नाश्च सम्पूर्णा रत्नराशिभिः ।
वर्यवैडूर्यमणिजैः कपाटैः पिहिताननाः ॥४८८॥
तदधिष्ठायका देवाः स्वेषामेवाभिधाभिधाः ।

नवभिर्निधिभिर्युक्तो मञ्जूषाभिरिव श्रियाम् ।
स्वांशैरिव महारत्नैश्चतुर्दशभिरन्वित. ॥५०६॥
ऊढानां यौवनारूढप्रौढनृपाङ्गजन्मनाम् ।
द्वात्रिंशता सहस्रैश्च परिवोऽप्सरसामिव ॥५०७॥
प्रतिच्छन्दैरिवैतासां लावण्यागण्यसंपदाम् ।
तावतीभिर्देशलोककन्याभिः परिवारित. ॥५०८॥
द्वात्रिंशता सहस्रैश्च भूभुजां सद्गुजौजसाम् ।
शोभितः स्वकदोर्दण्डकल्पवल्लीफलैरिव ॥५०९॥
चतुरशीत्या लक्षैश्च सप्तिस्यन्दनदन्तिनाम् ।
योधानां षण्णवत्या च कोटिभिः परितो वृतः ॥५१०॥
अनुयाणमिव पुङ्खोऽनुचक्रं चक्रिचन्द्रमाः ।
सृजन् जगत् सैन्यमयं च वालप्रवलैर्वलैः ॥५११॥ (नवभिः कुलकम्)
वाजिवक्त्रगलत्स्फारफेनस्थासकमौक्तिकै. ।
वितन्वानो वनस्थलीं ताम्रपर्णीसुतामिव ॥५१२॥
हेषां सहर्षं कुर्वद्भिः किशोरैर्मृदुकेसरैः ।
अरण्यानीं विदधानो मन्दुरामिव सुन्दराम् ॥५१३॥
भिल्लीहल्लीसकोल्लासहल्लुखोल्लिखितेक्षणम् ।
कुर्वन् वनं निजै. सैन्यैः पुरन्दरपुरोपमम् ॥५१४॥
पूरयन् रोदसीरन्ध्रं नीरन्ध्रैः सैन्यपांशुभि. ।
सृजन्निव नभोऽधोऽन्यदन्तरालेऽन्तरिक्षकम् ॥ ५१५ ॥
पुरग्रामाकरद्रोणमुखमुख्यमहीभुजाम् ।
फलावलीमिव द्रूणामायच्छन्नुपदां पथि ॥ ५१६ ॥
अम्भोवाह इत्वाम्भोभि. सुखयन् जनतां धुनै ।
स्वां पुरीं स्व.पुरीरम्यां प्राप पृथ्वीपुरन्दर ॥५१७॥ (षड्भिःकुलकम्)
निवेश्य च तदभ्यर्णे स्वसेनां तत्सुतामिव ।
तदधिष्ठायकं देवं ध्यात्वा चक्रेऽष्टमं नृप. ॥ ५१८ ॥
आयातेऽथ वशं तस्मिन् देवलोकशिरोमणि. ।
दिव्यैर्भोज्यैर्व्यधाद् भुक्तिं कल्पवल्लीफलैरिव ॥५१९॥
प्रवरे स्वपुरे स्वर्द्धिस्पर्धितत्रिदशालये ।
प्राविशत् पृथिवीपाल पौराणां जनयन् मुदम् ॥५२०॥
राजद्वारं ययावेष कैलासमिव यक्षराट् ।
करिणश्चोत्ततारांशु गिरिशृङ्गादिवेभराट् ॥५२१॥
सेनानीप्रमुखं राजा लोकं लोकपुरन्दरः ।

सत्कृत्य विससर्जोपयामान्ते प्राघुर्णानिव ॥५२२॥
कामपत्नीसपत्नीभिः पत्नीभिस्ताभिरन्वितः ।
प्रासादे प्राविशद्भूपः कूपः सत्पुण्यपाथसाम् ॥५२३॥
विषयैर्विविधैर्दिव्यनाटकैश्च नवैर्नवैः ।
भोगानभुङ्क्त भूभर्ता स्वर्लोकादाहृतानिव ॥५२४॥
अथ ते ज्ञापयामासुर्नरामरनभश्चराः ।
स्वामिंस्त्वं विजयस्यास्य षट्खण्डानामभूर्विभुः ॥५२५॥
अतोऽभिषेकस्ते कर्तुं युज्यते द्वादशाब्दिकः ।
चक्रिस्थितिरतश्चक्री तद्वचः प्रतिपन्नवान् ॥५२६॥
ते ह्रदह्रदिनीनाथह्रदिनीभ्यश्चाहृतैर्जलैः ।
मन्त्रपूतैरभ्यषिञ्चंस्तं मेरुमिव वारिदाः ५२७॥
निवृत्तेऽथोत्सवे तस्मिन् षट्खण्डावनिमण्डनः ।
सस्नौ कृतबलिप्रायश्चित्तकौतुकमङ्गल ॥५२८॥
ततोऽधिसौधमारूढो भुञ्जन् वैषयिकं सुखम् ।
अनैषीद् वासरान् क्षोणीवासवो वासवोपमः ॥५२९॥
दण्डश्चक्रमसिश्छत्रं रत्नानीमानि भूभुज ।
एकेन्द्रियाणि चत्वारि बभूवुः शस्त्रवेश्मनि ॥५३०॥
मणिश्च काकिणी चर्म नवापि हि कुनाभयः ।
शुक्त्यां च मौक्तिकानीव राज्ञः श्रीधाम्नि जज्ञिरे ॥५३१॥
पुरोधाः पृतनानाथो वार्धकिग्रहनायकः ।
स्वपुरीमानिरत्नानि चत्वार्यपि हि जज्ञिरे ॥५३२॥
वैताढ्यभूभृतो मूलेऽभूतां रत्ने हयद्विपौ ।
खेचरेषूत्तरश्रेण्यां स्त्रीरत्नमुदपादि च ॥५३३॥
विपक्षकुलकाकारिदक्कोशे भानुमानिव ।
स सच्चकोरदक्प्रेम्णे पार्वणेन्दुरिव व्यभात् ॥५३४॥
क्षोणीं क्षोणीपतौ पाति भावृतां च नभ स्थलीम् ।
एतत्तेजःपराभूतः परः कोपि न दिद्युते ॥५३५॥
षट्खण्डाखण्डविजयविजयोद्धिसम्भवे ।
न चेह किमप्ययशो मृगाङ्के मृगतामगात् ॥५३६॥
अथान्येद्युर्धराधीशोऽधिरूढः सौधमूर्धनि ।
नाकिनोऽनेकशोऽपश्यत् कुर्वतो गमनागमम् ॥५३७॥
तदैव प्रतिहारेणानुगो दूतो मुदामिव ।
वनपाल. क्षमापालं समागाद्रचिताञ्जलि ॥५३८॥

प्रोचिवांश्च वचोऽमन्दानन्दकन्दाङ्कुराम्बुदम् ।
नन्द नन्द चिरं नन्द दिष्ट्या संवर्धसे विभो ! ॥५३९॥
देवाद्य भवदुद्याने पद्मषण्डमिवांशुमान् ।
अलंचक्रे जगन्नाथो जिनोऽमरनरार्चितः ॥५४०॥
श्रुत्वेति वचनं तस्योदञ्चद्रोमाञ्चकञ्चुकः ।
सार्धद्वादश कोटीनां तस्मै क्ष्मापो वितीर्णवान् ॥५४१॥
विसृज्यैनं व्यधाच्चिन्तामित्थं वसुमतीपतिः ।
धन्यास्ते कृतपुण्यास्ते येषां दृग्गोचरो जिनः ॥५४२॥
नार्थैर्नौकिमनुष्याणां वन्दनीया च सावनी ।
यत्र चूडामणीयन्ते तीर्थेशपदपांशवः ॥५४३॥
विचिन्त्येति मुमोचायमासनं लोकशासनः ।
भूमिलन्मौलिरिति चार्हन्तं तुष्टाव तुष्टिभाग् ॥५४४॥
मुक्तिसीमन्तिनीसंगरङ्गसंगतचेतसे ।
जगज्जीवातुसदृशे नमो भगवतेऽर्हते ॥५४५॥
स्तुत्वैवं भावसंदर्भभावितो भूमिवासवः ।
सज्जीकृतचमूचक्रोऽर्हन्तं वन्दितुमभ्यगात् ॥५४६॥
निष्यातेऽथार्हतश्चैहे मानादिव मुमुक्षुराट् ।
उत्ततार क्षितित्राता सिन्धुरस्कन्धतो द्रुतम् ॥५४७॥
छत्रासिमौलिचामरोपानद्मुख्यं च पञ्चधा ।
राजचिह्नं मुमोचासौ साक्षान्निर्वर्णितेऽर्हति ॥५४८॥
परीय परितोऽर्हन्तं नत्वाऽञ्जलिं च भक्तितः ।
न्यपदत् पर्षदि क्षोणीशक्रः शक्र इवापरः ॥५४९॥
भगवानपि संसारपारावारतरीनिभाम् ।
प्रारेभे जगदानन्ददायिनीं देशनामिति ॥५५०॥
सदा प्ररिग्रहग्रस्ताः संसारापारगह्वरे ।
मज्जन्ति प्राणिनोऽम्भोधौ कण्ठाश्लिष्टशिला इव ॥५५१॥
तन्मुमुक्षा मुमुक्षूणामिव येषां शरीरिणाम् ।
उद्ध्रीयन्ते भवाम्भोधेस्ते कृष्टा इव रज्जुभिः ॥५५२॥
इत्यर्हद्देशनानीरधौ तमूर्च्छाङ्लो नृपः ।
कलयामास नैर्मल्यं कैवल्यकमलोचितम् ॥५५३॥
तीर्थकृत्पादपाथोजे भ्रमतो भ्रमरानिव ।
दृष्ट्वाविरेप निध्याय तेजःपुञ्जमयान् सुरान् ॥५५४॥
अदृश्यन्त भवे पूर्वं क्वाप्यमी अमरा मया ।

इतीहापोहमापन्नोऽस्मार्षीज्जातिं स पूर्वजाम् ॥५५५॥
अहो तादृक्सुरत्वेऽपि नाभवत् तुष्टिरात्मनः ।
वाडवाग्नेरिवागाधे निमग्नस्याम्बुधेर्जले ॥५५६॥
समस्तसुखविस्तारोत्तमाऽपीदृक्च चक्रिता ।
न मेऽभूत् तुष्टिलेशायाम्भोधेरिव पयःप्रथा ॥५५७॥
प्रशमानन्दललितं साधुधर्मं विनाऽथ सा ।
न तुष्टिः शिवस्य पुष्टिर्मुक्तेव जलधिं विना ॥५५८॥
ध्यात्वेति धरणीनाथस्तीर्थनाथमुदाहरत् ।
तपस्यादानतः स्वामिन् ! प्रसीद मयि किंकरे ॥५५९॥
ज्ञानलक्ष्मीपयोराशिरभ्यधाद् भगवानपि ।
यथासुखं महाभाग ! भाग्यैरेष मनोरथः ॥५६०॥
एवं निशम्यानुज्ञाप्य चक्रिराड् धर्मचक्रिणम् ।
वैराग्यधार्निजं धाम जगाम जनतावृतः ॥५६१॥
धर्मकर्मस्थिते राज्यनीतेर्निर्णाशभीरुकः ।
निदधे तनयं राजा सरोजरजनीकर ॥५६२॥
संबोध्य सकलमन्त.पुरं पौरान् परानपि ।
अगादुपजिनं भूप उपकूपमिवाध्वग. ॥५६३॥
पटं श्लिष्टपांशुमिव त्यक्त्वा साम्राज्यसंपद. ।
अङ्गीचकार धर्मस्य साम्राज्यं राजकुञ्जरः ॥५६४॥
सुरासुरनराधीशै. सेविताङ्घ्रिसरोरुहः ।
ततोऽन्यत्र वायुरिव व्यहरद् भगवानपि ॥५६५॥
व्यधाद् यतित्वे राजर्षिर्हृषीकहययन्त्रणम् ।
पूर्वाचीर्णोच्छृङ्खलत्वप्रायश्चित्तं दिशन्निव ॥५६६॥
सोऽभूत् षट्कायजीवानां षट्खण्डानामिव प्रभुः ।
त्रिविधत्वं समभ्येयुर्गुप्तयो नव ब्रह्मणः ॥५६७॥
रत्नेष्विव चतुर्दशस्वपि प्राणिविभक्तिषु ।
यतिरत्नो व्यधाद् यत्नं निरन्तरमनातुरः ॥५६८॥
सद्रूपणैरिवोन्नतगुणौघैर्भूषितो भृशम् ।
जग्राह वपुषः सारं विजयस्येव संयमी ॥५६९॥
ज्ञानाभ्यासपरः सोऽगाद् गीतार्थत्वमनुत्तरम् ।
सर्वत्रापि हि मुख्यत्वं सुप्रापं पुण्यशालिनाम् ॥५७०॥
आत्मवश्यमिवावश्यं भोग्यमजर्यति स्म च ।
स कर्म तीर्थकृन्नाम विंशत्या स्थानकैरिति ॥५७१॥

तत्र चार्हत्प्रतिमानामर्हतां च यदर्हणम् ।
स्तुतिश्चाशातनारोधः स्थानकं प्रथमं हि तत् ॥ ५७२ ॥
सिद्धस्थानेषु सिद्धानामुत्सवैश्च नवैर्नवैः ।
यच्च सिद्धगुणोच्चारसंस्तवस्तद् द्वितीयकम् ॥ ५७३ ॥
विनेयबालकग्लानमुनीनां प्रतिपत्तितः ।
प्रवचनस्य चौन्नत्याद् वात्सल्याच्च तृतीयकम् ॥५७४॥
प्राञ्जलीभूय वसनाशनौषधादिढौकनम् ।
श्रीगुरूणां गुरूणां यत् तुर्यं तत्स्थानकं स्मृतम् ॥ ५७५ ॥
गणान्तर्वासिनां विंशत्पदपर्यायज्यायसाम् ।
स्थविराणां च या स्थिरोपास्तिस्तत् पञ्चमं मतम् ॥५७६॥
व्यपेक्षयाऽर्थश्रुतयोः स्वतः श्रुतवतां बहु ।
शुश्रूषया भवेत् षष्ठमन्नवस्त्रादिदानतः ॥५७७॥
अविश्रान्ततपःकर्मकर्मठानां तपस्विनाम् ।
वात्सल्यतः परिचर्याचरणं तच्च सप्तमम् ॥५७८॥
सदैव द्वादशाङ्गाख्ये श्रुते प्रश्नानुचिन्तनैः ।
ज्ञानोपयोगसूत्रार्थौ तपयोगस्तदष्टमम् ॥५७९॥
शङ्कादिदोषनिर्मुक्तं स्थैर्यादिगुणभूषणम् ।
नवमं दर्शनं सम्यक् शमादिलक्षणात्मकम् ॥५८०॥
चतुर्धा ज्ञानदर्शनचारित्रपरिचर्यया ।
दशमं विनयः कर्मक्लेशनाशनिबन्धनम् ॥५८१॥
इच्छादिदशधासामाचर्याचरणकर्मणि ।
परिहारोऽतिचाराणां स्थानमेकादशं स्मृतम् ॥५८२॥
मूलोत्तरगुणेष्वेष्वहिंसामात्रादिसीमसु ।
उद्यमो निरतिचारो द्वादशं स्थानकं हि तत् ॥५८३॥
दुर्ध्यानपरिहारेण यच्छुभध्यानधारणम् ।
क्षणे लवे मनःप्रीत्यै स्थानकं तत् त्रयोदशम् ॥५८४॥
शरीरमनसोर्बाधारहितं च निरन्तरम् ।
यत्तपः कर्म शक्त्या तत् स्थानकं स्याच्चतुर्दशम् ॥५८५॥
दानं निदानमानन्दश्रियामन्नादि यन्मुनौ ।
वाङ्मनोवपुषां शुद्ध्या तत् पञ्चदशसंज्ञकम् ॥५८६॥
वैयावृत्त्यविधौ प्रौढा प्रौढिर्भक्तादिभिर्भृशम् ।
आचार्यादिदशानां या षोडशं स्थानमीरितम् ॥५८७॥
संघापायापनयनोपायप्रह्वतयाऽनिशम् ।

समाधिमनसो बाढं स्यात् तत् सप्तदशं पुनः ॥५८८॥
अपूर्वयो सूत्रार्थयोरुभयोरपि यत्नतः ।
अहर्निशं यदादानं तदष्टादशमुच्यते ॥५८९॥
इद्धया श्रद्धया दीप्त्या निर्वेदैकनिराकृतम् ।
सन्मानो य· श्रुतज्ञाने स्थानमेकोनविंशकम् ॥५९०॥
धर्मोक्तिवैद्यकज्योतिर्विद्यावादश्रुतादिभिः ।
उद्भासना शासनस्य तद्विंशतितमं मतम् ॥५९१॥
स्यादेकमपि यत् तीर्थंकरकर्मनिबन्धनम् ।
स्थानं नैरुज्यकृद् महारसायनमिवाङ्गिनाम् ॥५९२॥
सर्वैः सर्वात्मनाऽमीभिः स्वामिना स्वर्णबाहुना ।
अर्जितं तीथकृन्नाम कर्म शर्मैककारणम् ॥५९३॥
आज्ञया गुरुपादानां धैर्यधूर्वान् धुरंधरः ।
केसरीव स एकाकी व्यहरद् मुनिकुञ्जर ॥५९४॥
विहरन्नन्यदा क्षोणौ क्षीरक्षोणीधरान्तिके ।
सोऽगात् क्षीरवणारण्यं राजधानीमिवान्तकी ॥५९५॥
तत्रारण्यमहाहिंस्रैः सिंहाद्यै· स्वापदैर्भृते ।
दम्भोलिनेव घटितः सोऽस्थात् प्रतिमया स्थिरः ॥५९६॥
इतः कुरङ्गजीवः स निर्गतः सप्तमक्षितेः ।
क्रूरात्माऽभूत् तत्र सिंहो याने प्रेतपतेरिव ॥५९७॥
बिभ्राणो वदने शुण्डां दोर्दण्डमिव शासनम् ।
त्रासयन् स्वापदान् भूरीन् कृतान्त इव मूर्त्तिमान् ॥५९८॥
बहिर्निःसारयन् जिह्वां क्षुरिकां यमराडिव ।
भूपामध्यस्थितोत्तप्ततपनीयविलोचनः ॥५९९॥
भुवमास्फाल्य लाङ्गुलं मूर्ध्नि शूलमिवावहन् ।
प्रसारयन् मुखं दंष्ट्राङ्कुरं कूपमिवापरम् ॥६००॥
क्ष्वेडाक्षोभपरिक्षीणक्षोभितानेककुञ्जरः ।
कुलिशाकारनखरश्रेणीभिन्नेभकुम्भभूः ॥६०१॥
केसरश्रेणिभिः क्षोणीपीठमाच्छोटयन् मुहुः ।
आययौ मृगराजः स मुनिराजोऽस्ति यत्र सः ॥६०२॥
( पञ्चभिः कुलकम् )

क्षुद्रक्ष्वेडारवः कण्ठीरवः क्षुत्क्षामकुक्षिक· ।
विषद्रुपल्लवोल्लासदृशाऽपश्यत् तपस्विनम् ॥६०३॥
मुनिं पञ्चानन· प्रेक्ष्य क्रुधोद्धुरो भवंस्तदा ।

अथाविष्ट पुराभ्यस्तमत्सरस्फारितेक्षण ॥६०४॥
पुच्छाच्छोटोच्छलच्छब्दच्छलाद् रुरोद रोदसी ।
सरन्ध्रा तन्मुनेरार्त्या नीरन्ध्राऽपि तदाऽभवत् ॥६०५॥
तस्य पादप्रहारार्त्या व्याकुला वसुमत्यपि ।
दिग्दन्तिनां तदुत्पातमाचिख्यासुरिवाचलत् ॥६०६॥
सटाच्छोटाद् दन्तिनीनामकाले भ्रूणभ्रंशकृत् ।
गिरीन् क्ष्वेडाप्रतिध्वानैः सृजन् दुःशब्दनिर्भरान् ॥६०७॥
प्रादुर्भवत्पूर्वकोपाटोपपाटलितेक्षणः ।
हर्यक्षो भिक्षुहर्यक्षं संनिकर्षमुपेयिवान् ॥६०८॥ (युग्मम्)
तं शत्रुमिव मन्वानः क्षुद्रात्मा क्रोधदुर्धरः ।
सिंहोऽसौ सिंहतालेन मुनिसिंहममारयत् ॥६०९॥ (युग्मम्)
तत्प्रहारोत्थितामथ व्यथां निर्ग्रन्थपुङ्गव- ।
कर्ममर्मव्रणच्छेदक्षारक्षेपमिवाविदत् ॥६१०॥
धर्मध्यानरतो ध्यानात् साधुधुर्यस्तयोग्रया ।
अर्त्या न चालितः स्थैर्यात् सुमेरुरिव वात्यया ॥६११॥
दध्यौ स भगवान् स्वर्णबाहुः साधुपुरन्दरः ।
सुहृदीव मृगेन्द्रेऽस्मिन् स्निह्य रे जीव ! निर्भरम् ॥६१२॥
जीवित्वाऽपि चिरञ्जीव ! कार्यः कर्मक्षयस्त्वया ।
तत्कारणमभूदेष तस्माद् बन्धोरपि प्रियः ॥६१३॥
रे जीव ! मृगराजेऽस्मिन् मा त्वं रोषो वृथा कृथाः ।
नृणां पुराकृतं कर्म निदानं सुखदुःखयोः ॥६१४॥
अमुं मन्यस्व रे जीव ! मृगेन्द्रमुपकारिणम् ।
धृतसौहृदमर्यादानिश्चयोऽभूदतस्तव ॥६१५॥
एवं सिंहे तथान्येषु प्राणिषु पूतमानसः ।
मैत्रीभावमसौ भेजे धर्मवल्लीफलोदयम् ॥६१६॥
अर्हतां चापि सिद्धानां मुमुक्षूणां च साक्षिकम् ।
सम्यगालोचयामास दुष्कृतान्येष संयमी ॥६१७॥
कृताहारपरिहारो मुनिः पण्डितमृत्युना ।
विपद्य दशमं कल्पमगादस्वल्पसंपदम् ॥६१८॥
महाप्रभो महात्मा स विमानेऽत्र महाप्रभे ।
विंशत्यब्ध्यायुरमरशिरोमणिरभूत् सुरः ॥६१९॥
भुञ्जन् भूयस्तरं कायचेतसो रुचिनां सुखम् ।
समयान् गमयामास स तत्र त्रिदशोत्तमः ॥६२०॥

सिंहोऽपि हिंस्रधौरेयः पर्यटन्नटवीतटे ।
संजह्रे बहुशः सत्त्वान् संहार इव निर्दयः ॥६२१॥
संहृत्यानेकशः सत्त्वान् पारीन्द्रः पापपूरितः ।
विपद्य श्वभ्रमदभ्रव्यथं तुर्यमुपेयिवान् ॥६२२॥
शीतोष्णयातनास्तत्रोपभुज्य बहुशश्चिरम् ।
उद्ववृते हरिर्जीवश्चतुर्थनरकादथ ॥६२३॥
तिर्यग्योनावनेकांश्च स भ्रान्त्वा तु खिन्नो भवान् ।
क्वापि शाखापुरे दुस्थद्विजातेरात्मभूरभूत् ॥६२४॥
स्वर्णबाहुयतेरात्मा प्राप्यास्त्नत्वमुत्तमम् ।
तैस्तैर्नवैर्भोगैरभूत् सुखस्यैकनिधानभूः ॥६२५॥
गान्धर्वीणकलाकेलिविज्ञगान्धर्वधोरणेः ।
ध्वानैरप्रीणात् नाकी कर्णौ कर्णरसायनैः ॥६२६॥
स्रग्भिर्विविधपुष्पौघैर्गुम्फिताभिः सुगन्धिभिः ।
कण्ठन्यस्ताभिरस्वप्नः पुष्पकाल इवाशुभत् ॥६२७॥
हारकेयूरकोटीरपादुकाकुण्डलादिभिः ।
मण्डितं तद्वपुरभाद् भूषणैर्लक्षणैरिव ॥६२८॥
विमानदीर्घिकोद्यानसरसीताण्डवादिषु ।
प्रापतुः फलमात्मीयं नियुक्ते तद्विलोचने ॥६२९॥
दिव्यैराहारसम्भारैरीहातस्तृप्तिकारिभि. ।
प्रीणाति स्माऽद्विजिह्वः स जिह्वां वल्लीमिवामृतैः ॥६३०॥
कदाचित् कल्पगा अर्हत्प्रतिमाः प्रत्यपूजयत् ।
सुमना. सुमनोमुख्यः सुमनःस्रग्भिरादरात् ॥६३१॥
कदाचित् स्वर्णशैलाद्रिशैलेष्वानर्च चारुभिः ।
चन्दनाद्यैश्चिरं जैनीः शाश्वती· प्रतिमा मुदा ॥६३२॥
नन्दीश्वरादिद्वीपेषु कदाऽप्यानन्दमेदुरः ।
चक्रेऽर्हत्प्रतिमापूजां द्वात्रिंशद्बद्धनाटकैः ॥६३३॥
इति धर्मरतः शर्मभोगान् भुञ्जन्ननेकशः ।
भूयांसमपि कालं सोऽनैषीद्विशमिवामरः ॥६३४॥
श्रीस्वर्णबाहुनरकुञ्जरराजराजी
श्रीप्राणतत्रिदिवे देवविलासशाली ।
वामेयचारुचरिते छिमवाभिरामः
सर्गः समाप्तिमगमत् सुगमस्तृतीयः ॥३३५॥

इतिश्रीतपागच्छाधिराजभट्टारकसार्व्वभौमश्रीहीरविजयसूरिश्रीविजयसेनसूरिराज्ये समस्तसुविहितावतंसपण्डितकोटीकोटीरहीरपं०श्रीकमलविजयगणिशिष्यमुशिष्यपंहेमविजयगणिविरचिते श्रीपार्श्वनाथचरिते तृतीयः सर्गः समाप्त.॥३॥

अर्हम् ।

# अथ चतुर्थः सर्गः

अथात्र जम्बूद्वीपेऽस्ति क्षेत्रं भरतसंज्ञकम् ।
जम्बूद्वीपस्य दक्षिणमेदिनीमुखमण्डनम् ॥१॥
तत्सेतुनेव वैताढ्यपर्वतेन द्विधाकृतम् ।
सव्यापसव्ययोर्जज्ञे तत्र खण्डत्रयं त्रयम् । २॥
धर्माधर्मविदामार्यजनानां यत्र संस्थितिः ।
आर्यदेशाः सार्धपञ्चविंशतिस्तत्र तद्यथा ॥३॥
मगधाह्वो राजगृहमङ्गाश्चम्पापुरी पुनः ।
वङ्गाह्वस्ताम्रलिप्ता कलिङ्गाः काञ्चनं पुरम् ॥४॥
साकेता कोशला काशीदेशा वाराणसी पुरी ।
कम्पिला पूश्च पञ्चाला अहिच्छत्रा च जाङ्गला. ॥५॥
द्वारावती च सौराष्ट्रा विदेहा मिथिला पुरी ।
वत्सदेशा च कौशाम्बी मलया भद्दिल पुरम् ॥६॥
कोटिवर्षपुरं लाटा विराटा वत्सपूः पुन ।
वीतभीः सिन्धुसौवीरा श्रावस्तीपूः कुणालकाः ॥७॥
मथुरापू. सूरसेनाः पापापूर्भङ्गीयाः पुन. ।
वृत्वा मासपुरी वेधा पुरी शुक्तिमती तथा ॥८॥
अच्छापुरी च वरुणापुरी श्वेतविका तथा ।
अर्धं कैतकदेशानामार्यमार्यैरुदीरितम् ॥९॥
अर्हन्तश्चक्रिणश्चार्धचक्रिणः सीरधारिण. ।
उत्पद्यन्ते येषु पद्माकरेष्विव सितच्छदाः ॥१०॥
समन्तादुर्वरोर्वीके देशे देशशिरोमणौ ।
दुष्काल इत्यमी वर्णा द्विधाऽपि श्रुतिगोचरा. ॥११॥
काशिदेशशिरोरत्नमासीद् वाराणसी पुरी ।
गङ्गातरङ्गै रङ्गद्भिर्या हारैरिव शोभते ॥१२॥

यदभ्यर्णमविश्रान्ता वहन्ती देववाहिनी ।
सङ्ख्यानमिव परितः शुशुभे नगरश्रियः ॥१३॥
यत्साले नीलरत्नोत्थरोचिषां चारुवीचिभिः ।
तीर्थे गङ्गाप्रवाहोऽभूत् कालिन्दीसङ्गमादिव ॥१४॥
यत्साले नीलरत्नोत्थरोचिषां चारुवीचिभिः ।
जरेव पलितीकर्त्तुं तत्केशानीर्ष्ययाऽस्पृशत् ॥१५॥
यत्स्त्री चन्दनकाश्मीरकरम्बितपयोधरा ।
स्वःसिन्धुरभ्रमी सन्ध्या नवोढेव मुदेऽधिकम् ॥१६॥
यत्र चैत्यस्थिताश्चित्रपुत्रिका भान्ति भूरिशः ।
स्वर्गेऽमान्त्य इवात्रेयुर्देव्योऽनिमिषचक्षुषः ॥१७॥
यत्र चैत्यस्थिताः शातकुम्भकुम्भा विभान्त्यलम् ।
उदिता भानवः सर्वे कैलासाद्रिवरेष्विव ॥१८॥
वीक्ष्येन्दोर्मण्डलं यत्र रत्नकुट्टिमसंस्थितम् ।
पाणीन् क्षिपन्ति पद्माक्ष्यो दन्तताडङ्कशङ्कया ॥१९॥
सौधकुट्टिमसंक्रान्तांस्तारकान् वीक्ष्य बालिकाः ।
मुह्यन्ति पतितस्फारहारमौक्तिकशङ्कया ॥२०॥
यत्र स्फटिकप्रासादे रात्रौ रात्रीश्वरोदये ।
दीप्रैः प्रदीपकैरेव लक्ष्यते सौधधोरणी ॥२१॥
तत्र प्रबलाश्वसेनोऽश्वसेनोऽजनि भूपतिः ।
यत्सेना वैरिवनितावैधव्योद्वाहधूर्वहा ॥२२॥
तत्प्रतापोऽभवद् भानुभासुरो भानुमानिव ।
विनिद्रीकृतसत्पद्मः कुमुदोत्सुक्यकृद् यतः ॥२३॥
यत्प्रतापप्रदीपेऽभूदेतदस्वल्पकौतुकम् ।
प्रकाशोऽभूत् सुहृद्गेहेऽसुहृद्गेहे च कालिमा ॥२४॥
यत्प्रतापोऽजनि प्रौढः प्रत्यग्रः कज्जलध्वजः ।
शत्रुस्थानेऽञ्जनाकारोऽभूत् तत्स्नेहं पिबन्नपि ॥२५॥
यत्प्रतापस्तपस्वी च प्रापेमां शक्तिमद्भुताम् ।
दाहादाहौ समं चक्रेऽसुहृदां सुहृदां हृदि ॥२६॥
राज्ञस्तस्याभवद् राज्ञी वामाऽवामा जनोत्तमा ।
या वामलोचना जज्ञे वामा दुष्कृतकर्मणि ॥२७॥
यां निर्वर्ण्य सुपर्वाणः स्व स्त्रैणमभजन्न हि ।
नाऽक्ष्णोरप्येकलीलाऽस्यानिमेषजनिताऽजनि ॥२८॥
जितविश्वत्रयौपम्यां द्रष्टुं यद्रूपसम्पदम् ।

अतृप्त इव शक्रोऽपि सहस्राक्षत्वमाश्रयत् ॥२९॥
गाम्भीर्यादिगुणोद्भीचि सीता सीतापतेरिव ।
रात्रिभर्तुरिव रात्रि पद्मा पद्मापतेरिव ॥३०॥
अश्वसेनमहीभर्तुः श्रीवामा वामलोचना ।
सा महत्यवरोधेऽपि प्रेमपात्राऽत्यजायत ॥३१॥ - (युग्मम्)
रूपश्रीजितपौलोम्या तया सार्धं धराधिप. ।
निषेवमाणो विषयाननैषीद् वासरान् बहून् ॥३२॥
वामादेव्यप्यवामाऽऽत्मा रञ्जयन्ती गुणैः पतिम् ।
राजहंसी बभूव स्वपतेर्मानसमानसे ॥३३॥
इत्येतौ दम्पती धर्मकर्ममर्मपरायणौ ।
गमयामासतुः कालं स्नेहलौ युग्मिनाविव ॥३४॥
इतो दशमकल्पस्थोऽनल्पवैभवभासुरः ।
स्वर्णबाहुयतेर्जीवः स्वायुः सर्वमपूरयत् ॥३५॥
च्यवनाऽऽसन्नकालोऽपि स सुर' पुण्यभासुरः ।
अन्यदेव इव श्रीह्रीनाशाद्यं नैव लब्धवान् ॥३६॥
विंशत्यब्धिप्रमाणे स्व आयुषि क्षयमीयुषि ।
वृक्षात् फलमिव पक्वं देवोऽच्योष्ट दिवस्ततः ॥३७॥
चैत्रमासस्य बहुले चतुर्थीतिथिवासरे ।
निशीथिनीनिशीथे च विशाखायां स्थिते विधौ ॥३८॥
प्राप्तसौख्येषु निःशेषजन्तुषु क्षणमुख्यकैः ।
समन्तादुद्यनादित्यसमोद्योते जगद्गृहे ॥३९॥
ज्ञानत्रयधरो वामादेवीकुक्षौ स देवराट् ।
उदपादि नभ कूलंकषाकूले मरालवत् ॥४०॥ (त्रिभिर्विशेषकम्)
तदा तस्यां त्रियामायां रम्ये हर्म्ये शयालुका ।
वामादेवी महास्वप्नान् प्रेक्षांचक्रे चतुर्दश ॥४१॥
आदौ दन्ती चतुर्दन्तः पाण्डुरच्छविरुन्नत ।
मूर्त्तिमानिव कैलास क्षरन्मदजलप्लव. ॥४२॥
वलक्ष. पीवरस्कन्धः स्निग्धरोमालिमालित. ।
महोक्षा तीक्ष्णशृङ्गो यो मङ्गलश्रीनिकेतनम् ॥४३॥
क्ष्वेडाक्षोभितदिग्दन्तावली व्यालोललोचनः ।
सुदीर्घरसनस्तीक्ष्णनखरो नखरायुधः ॥४४॥
अभिषिक्ता समुत्क्षिप्तै' कुम्भैर्दिक्कुम्भिभिर्भृशम् ।
एकटक् पद्मनिलया पद्मा सद्मेव सम्पदाम् ॥४५॥

पञ्चवर्णसमाकीर्णं भ्रमद्भ्रमरभासुरम् ।
लसत्परिमलोद्दाम दाम धन्वेव मान्मथम् ॥४६॥
सम्पूर्णमण्डलो व्योमकमलातिलकोपमः ।
जगदानन्दिपीयूषपूर्णः पीयूषदीधितिः ॥४७॥
स्वीयांशुभिस्तमःस्तोमं स्फोटयन्नुल्वणद्युतिः ।
घर्मद्युतिः सरोजालीमुकुलोन्मुकुलीकरः ॥४८।
सुवर्णकिङ्किणीश्रेणीक्वाणक्वणितदिग्मुखः ।
उद्दण्डदण्डतुण्डस्थो बर्हिबर्हो महाध्वजः ॥४९॥
पुष्पमालार्चितः पूर्णः सलिलैर्मङ्गलैरिव ।
कलशः कलधौतीयः श्रियां शेवधिभूरिव ॥५०॥
क्रीडद्द्वन्द्वं चरद्द्वन्द्वं कलहंससमाकुलम् ।
लोलकल्लोलमुत्फुल्लपद्मं पद्मसरः सरः ॥५१॥
मण्डितः पाण्डुडिण्डीरपिण्डैर्बिम्बैरिवैन्दवैः ।
क्षीरनीरनिधिः क्षीरनीरनीरन्ध्रमध्यभू · ॥५२॥
भगवद्वीक्षणायेवाऽऽगात् स्वामिविरहासहम् ।
विमानं रत्नराजिष्णु यस्माद् यातस्तदेव हि ॥५३॥
जगत्यमाङ्क्षिर्भगवत्प्रतापैरिव पिण्डितः ।
प्रोत्तुङ्गश्चक्रिमागाररत्नराशिरुदञ्चितः ॥५४॥
शिखाभिः सम्मिलन्तीभिरुल्लिखन् गगनस्थलम् ।
धूमध्वजश्च निर्धूमो मध्याह्नार्कसहोदरः ॥५५॥
दृष्ट्वा स्वप्नानिमान् स्पष्टान् तुष्टिपुष्टिप्रदिष्टकान् ।
पद्मिनीव प्रबुद्धा सा वामादेवी प्रकर्षभाक् ॥५६॥
अर्हत्प्रभावतः पाकशासनाः प्रथमं मुदा ।
समाहूता इवाभ्येयुर्धाम्नि वामाङ्किते तदा ॥५७॥
प्रणम्य भगवन्तं तं भगवज्जननीं पुनः ।
उक्त्वा स्वप्नार्थमस्वप्ननाथा जग्मुर्यथाऽऽगतम् ॥५८॥
सम्प्राप्तैस्तादृशैः स्वप्नैः संतुष्टा मङ्गलैरिव ।
साऽप्युदस्थादुपपादशयनादिव देवता ॥५९॥
उत्थाय शयनोत्सङ्गाद् मरालीव कजोदरात् ।
मन्दं मन्दं जगामैषाऽश्वसेनालङ्कृतं गृहम् ॥६०॥
असंमान्तीं मुदमिवोद्गिरन्ती स्मितादरात् ।
सा पतिं बोधयामास मन्थराक्षरवादिनी ॥६१॥
अश्वसेनोऽपि तद्वाचमाकर्ण्य कर्णोपचारिकाम् ।

तरसा जागराञ्चक्रे सन्तो हि स्वल्पसंलयाः ॥६२॥
साक्षात् पद्मामिवाऽऽनन्दकारिणीं गुणशालिनीम् ।
वीक्ष्याप्राक्षीत् क्षमाजानिः समागमनकारणम् ॥६३॥
साऽपि भद्रा स्थिता भद्रासनमानन्दमेदुरा ।
न्यगदद् दशनज्योति पूरविच्छुरिताधरा ॥६४॥
नाथाद्यास्यां निशीथिन्यामीषन्निद्रामुपेयुषी ।
अद्राक्षं क्षेमपिशुनान् महास्वप्नांश्चतुर्दश ॥६५॥
तदेषां देव ! का श्रेय.संपत्तिर्भविता मम ? ।
इत्यादिष्टो विशिष्टात्मा भूयोऽभाषिष्ट हृष्टवाक् ॥६६॥
स्वप्नैरेभिर्महाभागे ! भविता तव नन्दनः ।
यशःशुभ्रांशुशुभ्रांशुशुभ्रिताशेषदिग्मुखः ॥६७॥
इति बुद्ध्यनुसारेण स्वप्नार्थे कथितेऽमुना ।
भर्त्राऽऽदिष्टाऽविशद् वासभवनं श्रीरिवाम्बुजम् ॥६८॥
श्रीपूर्वाचलचूलायां तरणौ तिलकायिते ।
पृष्टा क्षमाभुजा स्वप्नफलानि स्वप्नपाठकाः ॥६९॥
प्रोचिरे तेऽपि भूपालं स्वप्नैरेभि. शिवावहैः ।
चक्री वा धर्मचक्री वा देव ! भावी तवात्मजः ॥७०॥
श्रुत्वैवं तद्वचश्चासौ राजा रोमाञ्चकञ्चुक. ।
न्यासृजत् तांश्च सत्कृत्य काञ्चनाभरणादिभिः ॥७१॥
दिवश्च्युत्वाऽवतीर्णोऽयं मत्समये परमेश्वरः ।
इतीव स्फुरितं स्फूर्तिमतेव मधुनाऽधुना ॥७२॥
विस्मेरसुमन श्रेणीमरन्दानन्दमेदुराः ।
गायना इव गायन्ति भ्रमन्तो भ्रमरा भृशम् ॥७३॥
कुलकान्ता इवोत्तालं कलकण्ठ्यः कलस्वनम् ।
कूजन्त्यनेकशश्चूतोद्भूताद्भुतरसाशना' ॥७४॥
आरामलीलालावण्य' कलाकौशल्यकारकः ।
अपासरद् वसन्तोऽसौ ग्रीष्मागमभयादिव ॥७५॥
सृजंस्तेजस्विता मित्रे प्रकुर्वन् निर्जडं जगत् ।
मुमुक्षुरिव ग्रीष्मर्तु प्रासरत् तदनन्तरम् ॥७६॥
मा भूयाद् भगवन्मातुर्मुखेक्षाविरहो मम ।
मन्दं मन्दं चचालासावतः कमलिनीपतिः ॥७७॥
प्रतेने भानुना कर्त्तुं हिमासाद्मस्क्रियाम् ।
तेन नित्यं तदा जज्ञे दिनाधिक्यं रथस्थिते' ॥७८॥

निवृत्ते ग्रीष्मसमये संशोषितजलाशये ।
मेघैः श्यामलितं व्योम कज्जलश्यामलैरलम् ॥७९॥
कृत्यमायातु नस्तोयमर्हज्जन्माभिषेचने ।
नीरैर्नीराशयाः सर्वे नीरदैरिति संभृताः ॥८०॥
मन्दगत्याऽम्बया पञ्चमासार्हद्भारभुग्नया ।
तर्जनाल्लुञ्जितैर्हंसैस्त्वरितं मानसं प्रति ॥८१॥
उपशान्तिमगात् तृष्णा चातकानां चिरंतनी ।
जातश्छेत्स्यति मामर्हन् दानैरिति भयादिव ॥८२॥
कृषीवलकुलानन्दकन्दकन्दलनाम्बुदः ।
समाप्ति कलयामास प्रावृट् कालः शनैः शनैः ॥८३॥
मत्क्षणे भगवन्मातुः पीतं स्यादघूर्नं पयः ।
इतीव प्रेमतस्तूर्णं शरत्कालः समीयिवान् ॥८४॥
वर्षाकलुषितपाथो मा भून्नाथाभिषेचने ।
इतीव स्वच्छयामास नीरं नीराशये शरत् ॥८५॥
चन्द्रोऽप्युत्तेजयामास कामं मण्डलमात्मनः ।
देवीकपोलपाण्डुर्यसादृश्यं स्पृहयन्निव ॥८६॥
अस्मदाकारभृन्नाथं स्वर्नाथः स्नपयिष्यति ।
इतीवाऽऽनन्दतो मत्ता. ककुद्मन्तश्चकासिरे ॥८७॥
अहस्तमास्विनीतौल्यतुलाकुशलतां स्पृशन् ।
शरत्कालो वणिगिव देशान्तरमुपेयिवान् ॥८८॥
भावि मत्समये स्वामिजन्म जन्मिकृतोत्सवम् ।
इतीव प्रेमपूर्णात्मा हेमन्तः शीघ्रमाययौ ॥८९॥
नो भावि भाविभद्रस्यास्मासु जन्म यदर्हतः ।
तदतीव महादुःखैर्दिवसैर्दुर्बलायितम् ॥९०॥
भुवने भद्रकृद् भावि जन्म मत्समयेऽर्हतः ।
इतीव प्रीतिपद्धत्या निशयाऽप्यकृशायितम् ॥९१॥
जातो मुखत्विषाऽशेषं तमोऽर्हन् दलयिष्यति ।
किं मत्कृत्यमतो मन्दतेजास्तेजःपतिस्तदा ॥९२॥
सकलेषु कलावत्सु मुख्यो भावी जगद्गुरुः ।
अतो नाजनि लोकानां कलावानपि शर्मणे ॥९३॥
अभूत् सकलकमलाऽऽगमोऽर्हत्पितृवेश्मनि ।
अतो बभूवुः कमलाकरा निष्कमलास्तदा ॥९४॥
एवमृतुभिरन्यूनैर्विहितस्वामिभक्तिभिः ।

संतुष्टा स्वामिनी गर्भं बभारोर्वीव सेवधिम् ॥९५॥
पाण्डुना पाण्डुरा गण्डस्थलेन स्वामिनी बभौ ।
शारदीनपयोवाहमालेव हिमरश्मिना ॥९६॥
औन्नत्यमजनि स्वामिमातुर्वक्षोजयोर्भृशम् ।
अन्तर्धृतजगन्नाथनिधिसंतुष्टयोरिव ॥९७॥
नितम्बबिम्बे स्वामिन्या वैपुल्यं भेजतुस्तमाम् ।
शरदीव नदीकूले विपुले सलिलोज्झिते ॥९८॥
त्रिलोकसारं सारङ्गदृक् सा गर्भं वहन्त्यपि ।
नाऽऽप खेदं प्रभावोऽसौ गर्भवासेयुषोऽर्हतः ॥९९॥
भेजतुः स्फारतारे तल्लोचने स्फारतां भृशम् ।
उत्कण्ठिते इव स्वामिमुखमीक्षितुमादरात् ॥१००॥
मुखेनालक्षि सा वामादेव्यथ पाण्डुना तदा ।
फलेनेव नवा वल्ली परिपाकमुपेयुषा ॥१०१॥
पाण्डुगण्डस्थलं वक्त्रं बिभ्रती स्वामिनी व्यभात् ।
राकेव मण्डलं शीतमरीचेर्दिवसाऽऽगमे ॥१०२॥
कृपिमेघादिव ग्रीष्मागमाद् वेलेव वारिधेः ।
गर्भानुभावतो देव्या लावण्यश्रीरवर्धत ॥१०३॥
गर्भानुभावतो देव्या बभूवुर्दोहदा शुभा ।
महीशक्रेण शक्रैश्च पूरितास्तेऽपि तत्क्षणात् ॥१०४॥
बध्नाति स्म मनो देवी सा यस्मिन् दिव्यवस्तुनि ।
आनीतमेव शीघ्रं तत् साऽपश्यदमरैरपि ॥१०५॥
स्वामिन्यापन्नसत्त्वाऽपि नाज्ञायि भूपवत्यपि ।
माता हि गूढगर्भा भवत्युद्रगेऽर्हति ॥१०६॥
न स्फातिमगमत् तस्याःकुक्षिर्गर्भवानपि ।
मौक्तिके सति किं शुक्तिसम्पुट वृद्धिभाग् भवेत् ? ॥१०७॥
गर्भोऽपि ववृधे देव्या उदरे स शनैः शनैः ।
अङ्कुर इव कल्पद्रोरन्तरं नन्दनक्षितेः ॥१०८॥
देवी पीवरयोः श्यामाननयोः कुचयोः श्रिया ।
वैडूर्यस्थगनौ शातकुम्भकुम्भौ व्यडम्बयत् ॥१०९॥
अर्हत्पेयपयःपुष्टस्तनयोरनयोश्च सा ।
रक्षपात इति तत्तुण्डे श्यामत्वं विदधे विधिः ॥११०
सव्यंसन्यस्तहस्ताऽभाद् गर्भभारालसा सती ।
विहिताम्भोजिनीस्तम्भावष्टम्भा वरटेव सा ॥१११॥

बिभ्राणा भ्रूणमुदरे साऽभाद् भित्त्यऽवलम्बिनी ।
शारदीवाभ्रपटली सेन्दुर्मेरुतटं गता ॥११२॥
सख्यस्तद्वदनं लोध्रपाण्डुरच्छवि वीक्ष्य च ।
आसन्नप्रसवोदन्तकथनैर्मोदयन्ति ताम् ॥११३॥
शनैर्गच्छ शनैस्तिष्ठोत्तिष्ठ त्वं च शनैः शुभे ! ।
गर्भालसाऽऽलिभिः सैवं जगदे च पदे पदे ॥११४॥
एवं शश्वत् सखीलोकैः क्रियमाणोपचर्यया ।
देशकालोचितैः पथ्यैरपालि गर्भोऽनया ॥११५॥
अन्येद्युः स्वामिनी सान्द्रतमस्विन्यां स्थिता सती ।
सर्पं सर्पन्तमद्राक्षील्लब्धज्ञानेव योगिनी ॥११६॥
उत्तिष्ठतोत्तिष्ठतैतत्स्थानादस्तीह वायुभुक् ।
ध्वान्तेऽप्येवं सखीर्देवी सहसा स्माह निर्भया ॥११७॥
निवृत्तेऽस्मिन् भयं भीमभोगभोगिसमुद्भवे ।
अथासौ चातुरीचक्षुर्व्यचिन्तयत् सखीजनः ॥११८॥
भृतेऽपि भुवने ध्वान्तैः श्यामलैः कज्जलैरिव ।
दिवेव देवीयं दर्वीकरं यन्निरवर्णयत् ॥११९॥
प्रभावो गर्भभूरेव तदसौ नात्र संशयः ।
गर्भं रत्नमिवामंस्त ततस्तस्याः सखीजनः ॥१२०॥
इमं व्यतिकरं श्रुत्वा ध्यातवानश्वसेनराट् ।
सदीपयेव पार्श्वेऽहिर्देव्याऽदर्शि तमस्यपि ॥१२१॥
जाते सूनौ विधास्ये तत् पार्श्व इत्यभिधां शुभाम् ।
नाम यद् गुणसंपन्नं श्रवसोरमृतायते ॥१२२॥
गतेषु मासेषु नवसु सार्धसप्तदिनेषु च ।
विशाखायां स्थिते चन्द्रे उच्चैःस्थेषु गृहेषु च ॥१२३॥
बहुलायां च दशम्यां मासे सहस्यनामनि ।
अर्धरात्रे भुजङ्गाङ्कं स्वामिनी सुषुवे सुतम् ॥१२४॥ (युग्मम्)
दिशः प्रसन्नतामापुः प्रमोदादिव सर्वतः ।
लोकैर्जनितविद्योतैः संकुलं मेदिनीतलम् ॥१२५॥
तमःस्तोमापसंहारी भगवज्जन्मसूचकः ।
अभूदालोकमालोको विद्युद्द्योतसोदरः ॥१२६॥
अवादीद् गगने दुन्दमानकानामनाहतम् ।
पाथोभिः पूरितं पाथोवाहानामिव मण्डलम् ॥१२७॥
नृतिर्यक्सुरनरकवपुर्भाजां वपुष्मताम् ।

सौख्यं जज्ञे क्षणेऽमुष्मिन् प्राप्तैश्वर्यश्रियामिव ॥१२८॥
मन्दं मन्दं प्रसर्पद्भिर्मरुद्भिरुपभूतलम् ।
दासैरिवैकयोजनमशोधि धरणितलम् ॥१२९॥
ववृषुस्तत्र वसनपुष्पगन्धाम्बुनाऽम्बुदाः ।
उच्छ्वासमुद्वहन्तीव निष्पन्नाऽभूद् वसुंधरा ॥१३०॥
अथाधोलोकतोऽभ्येयुरष्टौ प्रचलितासनाः ।
दिक्कुमार्यो द्रुतं सूतिवेश्मार्हत्समलंकृतम् ॥१३१॥
भोगंकरा भोगवती सुभोगा भोगमालिनी ।
तोयधारा विचित्रा च पुष्पमाला त्वनन्दिता ॥१३२॥
तत्रागत्य त्रयोविंशं तीर्थेशं समम्बया ।
प्रणम्य प्रोचिरे ताश्च कुड्मलीकृतपाणयः ॥१३३॥
नमस्तुभ्यं जगद्दीपदायिके ! रत्नधारिके ! ।
अधोलोकनिवासिन्योऽष्टौ वयं दिक्कुमारिकाः ॥१३४॥
ज्ञानतो भगवज्जन्मावगम्यार्हत्प्रभावतः ।
आयाता स्मो वयमिह तदुत्सवविधित्सया ॥१३५॥
भेतव्यं नेति सम्भाष्य पूर्वादिदिशि संस्थिताः ।
प्राङ्मुखे विदधुः स्तम्भसहस्रं सूतिवेश्मनः ॥१३६॥
ततः संवर्तवातेन परितः सूतिवेश्मन ।
आयोजनमपाचक्रुस्ताः कण्टकतृणादिकम् ॥१३७॥
ताश्च संहृतसंवर्तवाता नत्वा जगद्गुरुम् ।
गायन्त्यस्त तदासन्नभूभाग उपतस्थिरे ॥१३८॥
ज्ञात्वा तथैव चलितासना मेरुगिरिस्थिताः ।
ऊर्ध्वलोकादरिष्टौकोऽष्टाऽभ्येयुर्दिक्कुमारिकाः ॥१३९॥
मेघंकरा मेघवती सुमेघा मेघमालिनी ।
सुवत्सा वत्समित्रा च वारिषेणा वलाहिका ॥१४०॥
तथैव स्वामिनं स्वामिमातरञ्च प्रणम्य ताः ।
अदभ्रमभ्रपटलं वर्षा इव दिवि व्यधुः ॥१४१॥
ताभिः परिमलाढ्येन पाथसा योजनावधि ।
समन्तात् सूतिगेहस्योपाशामि रजसस्ततिः ॥१४२॥
जानुदघ्नीं पञ्चवर्णैः पुष्पैर्वृष्टिं विधाय ताः ।
गायन्त्योऽर्हद्गुणश्रेणीं तस्थुः स्थाने यथोचिते ॥१४३॥
अष्टौ च पूर्वरुचकाचलतो दिक्कुमारिकाः ।
साविमानाः समभ्येयुस्तत्र मुत्प्रेरिता इव ॥१४४॥

नाम्ना नन्दोत्तरानन्दे सुनन्दा नन्दिवर्धिनी ।
विजया वैजयन्ती च जयन्ती चापराजिता ॥१४५॥
आख्याय पूर्ववत् ताश्च नत्वाऽर्हन्तं समातृकम् ।
गायन्त्यस्तं स्वदिग्भागे तस्थुर्दर्पणपाणयः ॥१४६॥
स्थिता अपाच्यरुचकेऽभ्येयुरष्टौ कुमारिकाः ।
अर्हन्तं नन्तुमौत्सुक्यादासनैश्चालिता इव ॥१४७॥
समाहारा सुप्रदत्ता सुप्रबुद्धा यशोधरा ।
लक्ष्मीवती शेषवती चित्रगुप्ता वसुन्धरा ॥१४८॥
ताः प्राग्वत् सर्वमाख्याय नत्वा नाथं सहाम्बया ।
अस्थुरपाच्यां भृङ्गारपाणयो गीतमङ्गलाः ॥१४९॥
दिक्कुमार्योऽष्टौ पश्चिमरुचकस्था अथाययुः ।
परस्परं स्पर्धयन्त्यः प्रमोदेन प्रसर्पता ॥१५०॥
इलादेवी सुरादेवी पृथिवी पद्मवत्यथ ।
एकनासा नवमिका भद्रा शीलाऽभिधानतः ॥१५१॥
जिनाम्बां च जिनं नत्वा स्तुत्वा चाख्याय पूर्ववत् ।
गायन्त्यो व्यजनव्यग्रहस्तास्ताः स्वदिशि स्थिताः ॥१५२॥
उदीच्यरुचकाद्रिस्था अष्टेयुर्दिक्कुमारिकाः ।
मानसैरिव जद्ववालैर्विमानैः परिचारिताः ॥१५३॥
अपाच्यरुचकाद्रिस्था अष्टेयुर्दिक्कुमारिकाः ।
अलम्बुसा-ऽमितकेशी पुण्डरीकाऽथ वारुणी ॥
हासा सर्वप्रभा चैव श्रीर्ह्रीरित्याख्यया समाः ॥१५४॥
प्रणम्य भगवन्तं तन्मातरं चोक्तिपूर्वकम् ।
तस्थुरुत्तरतस्ताश्चोदीच्यां चामरपाणयः ॥१५५॥
विदिग्रुचकतोऽभ्येयुश्चतस्रो दिक्कुमारिकाः ।
चित्रा चित्रकनका तारा सौदामिनी तथा ॥१५६॥
पूर्ववत् प्रोक्तिपूर्वं ता नत्वा साम्बं जगत्पतिम् ।
ऐशान्यां दिशि संतस्थुर्गायन्त्यो दीपपाणयः ॥१५७॥
चतस्रो रुचकद्वीपादभ्येयुर्दिक्कुमारिकाः ।
रूपा रूपासिका चैव सुरूपा रूपकावती ॥१५८॥
जगद्भर्तुर्नाभिनालं चतुरङ्गुलतोऽथ ताः ।
छित्त्वा छिद्रे न्यधुस्तच्च वज्ररत्नैरपूरयन् ॥१५९॥
पूर्वोदग्दक्षिणास्वर्हज्जन्मगेहात् ककुप्सु च ।
विमानानीव ता रम्भागृहाणि त्रीणि चक्रिरे ॥१६०॥

विचक्रिरेऽथ तन्मध्ये रत्नसिंहासनान्वितम् ।
चतुःशालं विशालं ताः श्रीपद्मोदरसोदरम् ॥१६१॥
अथ च दक्षिणरम्भागृहे रम्भागृहोपमे ।
न्यस्य पाणिपुटे नाथं निन्युस्तन्मातरं च ताः ॥१६२॥
अङ्गमभ्यङ्क्यामासुस्तत्र ता अर्हदम्बयोः ।
संवाहिका इव लक्षपाकतैलेन हारिणा ॥१६३॥
देव्य उद्वर्तनैर्दिव्यैरमन्दानन्दमेदुराः ।
अर्हन्तमर्हदम्बां चोद्वर्त्तयामासुराशु ताः ॥१६४॥
ततो नीत्वा च प्राग्गेहे तावासने निवेश्य ताः ।
सलिलैः स्नपयामासुः करैरिन्दोरिवामलैः ॥१६५॥
शरीरं निर्जलीकृत्य वासोभिर्मृदुलैस्तयोः ।
चन्दनैरर्चयामासुर्दिव्य द्रव्यकरम्बितैः ॥१६६॥
दिव्याभरणनेपथ्यं परिधाप्य तयोश्च ताः ।
अथोत्तरचतुःशाले निन्यु साम्बं जगद्गुरुम् ॥१६७॥
तत्र श्रीखण्डखण्डानि प्रज्वाल्य ज्वलनेऽथ ताः ।
तयोर्महामहिम्नोश्च रक्षापोट्टलिकां व्यधुः ॥१६८॥
उक्त्वेति श्रवणाभ्यर्णे विभो ! भूयाश्चिरस्थितिः ।
ततस्ताः स्फालयामासुर्गोलकौ दृषदोर्मिथः ॥१६९॥
सूतिकासदने नीत्वा वामादेवीं सहार्हता ।
मङ्गलानि ततो देव्यः स्वस्वदिक्षु स्थिता जगुः ॥१७०॥
टणत्कारं व्यधुर्घण्टाः शाश्वत्यस्त्रिदिवेष्वथ ।
सद्योऽर्हज्जननोदन्तं ख्यापयन्त्य इवामरान् ॥१७१॥
आसनानि ततः पाकशासनानां चकम्पिरे ।
मरुत्प्रेरितपत्राणि कल्पवृक्षतरोरिव ॥१७२।
तदा क्रुद्धोऽथ सौधर्माधीश आसनकम्पनात् ।
कोपाटोपगरोद्गारमुज्जगार वचो मुखात् ॥१७३॥
मित्रवद् वल्लभः कस्य जज्ञिरे यमिनीजनः ? ।
अचीचलश्च मत्पीठं यः स्वर्णाचलनिश्चलम् ॥१७४॥
इति क्रुद्धश्च निध्याय शक्रसेनापतिर्जगौ ।
मयि सत्यपि हे स्वामिन् ! कोपाटोपस्तवेष कः ? ॥१७५॥
गतक्रोधोऽवधेर्योगादथासीदमरेश्वरः ।
त्रयोविंशजिनेशस्य जन्म निःसीममुद्गृहम् ॥१७६॥
मुक्तसिंहासनः शक्रः सप्ताष्टाथ पदान्यगात् ।

पञ्चाङ्गस्पृष्टभूपीठो नत्वाऽर्हन्तं समस्तवीत् ॥१७७॥
नमस्तुभ्यं जगन्नाथ ! सनाथाय यशःश्रिया ।
सनाथीकृतसकललोकाय लोकहेलये ॥१७८॥
शीतांशुनेव भुवनं भरतं निखिलं त्वदः ।
पवित्रितं त्वया स्वामिन्नवतारं प्रकुर्वता ॥१७९॥
चिरञ्जीव जगज्जीवजीवातो ! त्रिजगद्गुरो ! ।
अश्वसेनकुलाकाशविकाशननभोमणे ! ॥१८०॥
वासरोऽप्येष निःशेषवासराणां शिरोमणि. ।
जनता जनितानन्दा जनिर्यत्र तवाजनि ॥१८१॥
नरकोटीर ! कोटीरमिवार्घ्यं प्राप्य तावकीम् ।
द्रक्ष्यतेऽध्वाऽखिलैर्लोकैः सदीपैरिव निर्वृतैः ॥१८२॥
पारावारमिवापारसंसारमुत्तरिष्यति ।
यानपात्रमिव प्राप्य त्वां जनः सकलोऽपि हि ॥१८३॥
जगन्नाथमिति स्तुत्वा गीर्वाणग्रामणीर्मुदा ।
आदिदेशेति कटकाधिपतिं नैगमेषिणम् ॥१८४॥
साम्प्रतं भरतेऽत्राऽभूत् त्रयोविंशार्हतो जनिः ।
देवानाहूय तज्जन्मस्नात्रोत्सवकृते कृतिन् ! ॥१८५॥
ततो योजनविस्तारपरिमण्डलमण्डिताम् ।
सुघोषां स सुघोषाख्यां घण्टां च त्रिरवादयत् ॥१८६॥
सार्धं तयाऽनदन् सर्वा घण्टाः सर्वविमानगाः ।
प्रतिशब्दाश्च सर्वासां तासां प्रणधिरे दिवि ॥१८७॥
शब्दादिविषयासक्ताः सुरास्तैः सान्द्रनिस्वनैः ।
विहस्ता इव हस्ताभ्यां पिधाय श्रवसी जगुः ॥१८८॥
अस्मदूर्ध्वैर्मथ्यमानक्षीराब्धिध्वनिसोदरः ।
कोऽयमाकस्मिकः शब्दोत्पातोऽस्मत्सुखतस्करः ? ॥१८९॥
इति ध्यायत्सु सर्वेषु देवेषु चकितेषु च ।
उपशान्तिमगाद् घण्टानादो नाद इवाऽऽम्बुदः ॥१९०॥
प्रशान्ते अध्वने तस्मिन् सैनिकाधिपतिः सुरः ।
बाढमुद्घोषयामास सुरेभ्यः शासनं हरेः ॥१९१॥
भो भो देवाश्च देव्यश्च श्रूयतां श्रूयतामिदम् ।
भरतेऽस्मिंस्त्रयोविंशतीर्थकृत् समजायत ॥१९२॥
विधातुं भगवज्जन्माभिषेकोत्सवं सादरात् ।
तद् यास्यत्यधुनात्युग्रशासनः पाकशासनः ॥१९३॥

अतो विधातुं भगवज्जन्मनोत्सवमुत्सुकाः ।
भवन्तु सकला देवा द्रुतं तत्र यियासया ॥१९४॥
केऽप्यर्हद्भक्तितः केऽपि निदेशात् त्रिदशेशितुः ।
पत्नीभिः प्रेरिताः केऽपि केऽपि मित्रानुवर्त्तनात् ॥१९५॥
एवं विमानैरप्रतिमानैश्च वहुवाहनैः ।
गीर्वाणा अभ्ययुः सर्वे गीर्वाणेश्वरसंनिधौ ॥१९६॥ (युग्मम्)
योजनानां पञ्चशतं लक्षं चोच्चत्वविस्तरे ।
मौक्तिकश्रेणिभिर्युक्तं कुसुमैरिव काननम् ॥१९७॥
रत्नसिंहासनोपेतं विमानं वासवाज्ञया ।
पालकं पालकाख्येन त्रिदशेन विनिर्ममे ॥१९८॥ (युग्मम्)
यथोचितं तत्र सिंहासनानि विरचय्य ते ।
देवा व्यजिज्ञपद् देवाधीश्वरायाभियोगिकाः ॥१९९॥
अनुत्तरगुणः कृत्वा रूपमुत्तरमद्रिभिद् ।
महिषीभिः सहाष्टाभिः विमानमाधिरूढवान् । २००॥
गान्धर्वधुर्यगन्धर्वकलाकृतकुतूहलः ।
तत्र पूर्वमुखः पूर्वपति. सिंहासने स्थित. ॥२०१॥
निषण्णेषु दिविषत्सु रेजे सिंहासनं हि तत् ।
उदयाचलचूलेव संगते भानुमालिनि ॥२०२॥
यथौचित्येन न्यस्तेषु समस्तेष्वासनेष्वथ ।
न्यपदन् विबुधाधीशं परितः स्वर्गिणः परे ॥२०३॥
वृतः सुरैः सुराधीशो व्यभादिन्दुरिवोडुभिः ।
तेऽपि व्यभुश्च विभुना तेन तारा इवेन्दुना ॥२०४॥
सिंहासनस्य पुरत उपन्यस्ताष्टमङ्गलः ।
मन्द्रस्वरैश्च मङ्गलपाठकैर्गीतमङ्गलः ॥२०५॥
सौधर्मादथ सौधर्माधीश्वरो विबुधैर्वृतः ।
प्रचचाल विमानस्थः स्पर्धयेव हृदो द्रुतम् ॥२०६॥ (युग्मम्)
अभ्येयुर्जम्भभेत्तारमुत्तवः सपरिच्छदाः ।
नभोमणिमिव द्वीपान्तरं यान्तमभीशवः ॥२०७॥
विमानघण्टाटङ्काराराबैर्मुखरिता दिशः ।
त्वरध्वमिति तान् देवान् प्रेरयन्तीव वाग्भरैः ॥२०८॥
गजग. पूर्वग सिंहस्थितं चरममन्यत ।
यतस्तद्भयतः शीघ्रशीघ्रं व्रजति कुञ्जरः ॥२०९॥
सर्पस्थः सर्पजियानं मेन विघ्नकरं पुरः ।

यतस्तल्लङ्घयतो मन्दं मन्दं याति भुजङ्गमः ॥२१०॥
विमानैर्विविधैरेवं देवा यान्तो जगुर्मिथ ।
पर्वणः खलु संमर्दो भूरिणे शर्मणे भवेत् ॥२११। (त्रिभिर्विशेषकम्
द्रुतं द्रुतं नभस्यभिधावतां घुसदां तदा ।
जज्ञे कोलाहलो मथ्यमानाब्धाविव यादसाम् ॥२१२॥
वैमानिकविमानैस्तै रेजे नानाविधैर्नभः ।
सरोवरमिव स्मेरमुकुलैः कमलोत्करैः ॥२१३॥
उत्तरद्भिर्विमानैस्तैर्भूरिभिरित्यलक्षि च ।
सौधर्माद्यच्युतप्रान्ताः स्वर्गा अत्रोत्तरन्ति किम् ? ॥२१४॥
आयान्तीभिः सुरस्त्रीभिः प्रेक्ष्य मङ्गलमण्डलम् ।
क्षिप्ता मसृणघुसृणभृङ्गारस्पृहया कराः ॥२१५॥
आगच्छन्त्यः सुरीपङ्क्त्यो नभस्युद्वीक्ष्य तारकान् ।
पाणीन् प्रसारयामासुर्मालतीमुकुलेहया ॥२१६॥
आयान्तीनां सुरस्त्रीणां मुखलग्नैश्च तारकैः ।
तदोष्ठपानतो मेने तत्संमर्दोऽपि शर्मकृत् ॥२१७॥
तदा देवपुरन्ध्रीणामायान्तीनां नभःस्थले ।
मुखत्विषा तर्जित इव नोदीयाय हिमद्युतिः ॥२१८॥
नभस्यागच्छतां स्वर्गवासिनां तारकास्तदा ।
हारहीरकिरीटत्वं भेजुर्हृत्कण्ठमूर्धसु ॥२१९॥
एवं देवैः सदेवीकैर्वृतो वृत्रनिषूदनः ।
क्रमादुल्लङ्घयामासासंख्यातान् द्वीपसागरान् ॥२२०॥
द्वीपे नन्दीश्वरे रतिकरादिनिकटे हरिः ।
संचिक्षेप विमानं तं संसारमिव संयमी ॥२२१॥
विमानं संक्षिपन् मार्गे पौनःपुन्येन जम्भजित् ।
ततोऽप्युल्लङ्घयामासाऽवशेषान् द्वीपवारिधीन् ॥२२२॥
अथास्य जम्बूद्वीपस्य भरतावनिमण्डनम् ।
आखण्डलः क्रमात् काशिमण्डलं समुपेयिवान् ॥२२३॥
पुरीं वाराणसीं तत्र लब्ध्वा दम्भोलिभृत् ततः ।
अश्वसेनावनीभर्तुरासदत् श्रीगृहं गृहम् ॥२२४॥
शक्रस्तेन विमानेन भगवत्सूतिकागृहम् ।
त्रिः परीयाय परितः स्वोपाध्यायमिवान्तिपत् ॥२२५॥
ऐशान्यां दिशि संमुक्तविमानो नाकिनायकः ।
प्राभृतं कृतवान् नूनं प्रणामं प्रथमं प्रभोः ॥२२६॥

प्रणनाम ततः शक्रस्तीर्थेशं सममम्बया।
न भक्तौ पौनरुक्त्यं हि तादृशां भक्तिशालिनाम् ॥२२७॥
स विधायाञ्जलिं मूर्ध्नि मूर्धन्यस्त्रिदिवौकसाम्।
भगवन्मातरं वामादेवीमित्यस्तवीदथ ॥२२८॥
चिरञ्जय जगन्मातर्जगदाधारधारिके !।
त्वमेवासीह निःशेषपुत्रिणीनां शिरोमणि ॥२२९॥
धन्याऽसि कृतपुण्यासि त्वमेव धरणीतले।
यथाऽसौ सुषुवे सूनुस्त्रिलोकीवरदीपकः ॥२३०॥
इति स्तुत्वा जगन्नाथजननीं निर्जराग्रणी।
प्रोचिवानिति तां मातर्भेतव्यं न त्वयाऽनघे! ॥२३१॥
प्रथमस्वर्गदम्भोलिकरस्त्वत्सूनुकिङ्करः।
अर्हज्जन्मोत्सवं कर्तुमिहाऽगां देवि! साम्प्रतम् ॥२३२॥
उक्त्वेति वासवो देव्या अवस्वापनिकां ददौ।
कृत्वा च भगवद्रूपं बिम्बं तत्सन्निधौ न्यधात् ॥२३३॥
विधाय पञ्चधाऽऽत्मानं ततः स त्रिदशेश्वरः।
एकरूपेण पाणिभ्यां भगवन्तमुपाददे ॥२३४॥
रूपेणैकेन दध्रे च मूर्ध्नि छत्रं जगत्पतेः।
दधावुभाभ्यां रूपाभ्यां चामरे चामरेश्वरः ॥२३५॥
रूपेणैकेन बिभ्राणो वज्रं वज्रधरः पुनः।
गच्छति च सह भ्रा(?)स्थ इव स्वामिपुरः स्वयम् ॥२३६॥
भक्तैर्भगवतां भक्तिर्विधेया स्वयमेव हि।
एवं स पञ्चभी रूपैरात्तार्हन् मेरुमभ्यगात् ॥२३७॥
काञ्चनाचलचूलायाः परितः पाण्डुकं वनम्।
योजनानां सहस्रेण विस्तीर्णं सह चूलया ॥२३८॥
चूलिकादक्षिणेनास्ति सुमनोहारि तद्वनम्।
पृथुलं योजनैश्चतुर्नवत्या च चतुःशतैः ॥२३९॥
चतुर्भिर्योजनैः पञ्चशतैश्चोच्चत्वविस्तरे।
पृथुला सार्धद्विशतैरधिज्यधनुराकृतिः ॥२४०॥
तत्रातिपाण्डुकम्बला शिलामलमयूखभाग्।
अस्ति दक्षिणदिग्भागे रत्नसिंहासनान्विता ॥२४१॥ (युग्मम्)
अस्यैव जम्बूद्वीपस्य याम्यार्धभरतोद्भुवाम्।
अर्हतां क्रियते जन्माभिषेकस्तत्र वासवैः ॥२४२॥
तस्मिन् सिंहासनेऽर्हन्तं विधायोत्सङ्गसङ्गतम्।

प्राचीनबर्हिः स प्राचीमुखस्तत्र निषण्णवान् ॥२४३॥
अपरेऽप्यथ त्रिपष्टिर्देवेन्द्राः कम्पितासनाः ।
देवदेवोपरीवारवारैश्च परिवारिताः ॥२४४॥
विमानैर्विविधैर्व्योम्नि सृजन्तो धामिवापराम् ।
समाजग्मुर्जगन्नाथसनाथं काञ्चनाचलम् ॥२४५॥ ( युग्मम् )
आदिदेशादि सुरेन्द्रोऽथैवं स्वानाभियोगिकान् ।
आनयन्त्वर्हतो जन्माभिषेकार्थमुपस्करम् ॥२४६॥
रात्निकान् काञ्चनान् रौप्यान् स्वर्णरत्नमयानपि ।
रूप्यस्वर्णमयान् रत्नस्वर्णरूप्यमयांस्तथा ॥२४७॥
रूप्यरत्नमयान् भौमान् पूजितास्यान् शुभान् घटान् ।
अष्टाधिकं सहस्रं ते प्रत्येकं विदधु सुराः ॥२४८॥ ( युग्मम् )
भृङ्गारस्थालमाणिक्यकरण्डमुकुरादिकम् ।
स्वर्णादिवस्तुजं कुम्भमितं तदपि ते व्यधु. ॥२४९॥
कुम्भानादाय ते देवा जग्मुर्जलजिघृक्षया ।
स्वामिभिः प्रहिता वारिवाहका इव सत्वरम् ॥२५०॥
नदिनीनदनदिनीपतिप्रमुखत. पयः ।
सगृहुस्ते तैः कलशैः कलसैरिव योषितः ॥२५१॥
मागधादिषु तीर्थेषु विदेहविजयेष्वपि ।
मृदमम्भश्च जगृहुस्तृषा इव ते सुराः ॥२५२॥
ओषधीरपि सर्वाश्च पद्मादिकुसुमानि च ।
ते मुदाऽऽददिरे देवा मालिका इव काननात् ॥२५३॥
तदर्थं सञ्चितैरिव वस्तुभिश्चन्दनादिभिः ।
सुगन्धिभिर्भृतास्तेऽथाभ्येयुर्मेरुगिरिं रयात् ॥२५४॥
अच्युतारणयोः स्वामी स्वामरैरभितो वृतः ।
अभिषेक्तुं भगवन्तमुपतस्थे त्रिधा शुचिः ॥२५५॥
ततो चैकाक्षभृद्भक्त्या न च्युतोऽच्युतनायकः ।
कुसुमाञ्जलिमादाय मुमोच भगवत्पुरः ॥२५६॥
गन्धाम्भोभिर्भृतान् कुम्भानानिन्युरमरास्तदा ।
स्रग्भिरभ्यर्चितान् भूरीन् मुकुलीकुड्मलानिव ॥२५७॥
सलिलैरमलैः कुम्भा भृतास्तेऽथ बभासिरे ।
बान्धवा इव पीयूषकुम्भस्योद्गच्छतोऽम्बुधेः ॥२५८॥
अञ्जैर्वाचालरोलम्बैर्मुखस्थैः कलशा बभुः ।
स्पर्धयन्त इव स्नात्रविधिमुखरतो हरीन् ॥२५९॥

उन्मुखाः क्षितिगाः कुम्भा अम्भोभिः सम्भृता व्यभुः ।
नैकीभूता इवाभ्येयुः कुम्भाः सौधा रसातलात् ॥२६०॥
अम्भकुम्भान्तरालेऽम्भस्तद्भाति स्मामलद्युति ।
अर्हन्मुखजितैश्चन्द्रैः करौघ इव ढौकितः ॥२६१॥
आरणाच्युतकल्पेशः समं स्वैरमरैरथ ।
साष्टसहस्रकलशानादाद्रोमाञ्चकञ्चुकः ॥२६२॥
वक्षःस्थलस्थितैः कुम्भैस्तै रेजुस्ते सुधान्धसः ।
तितीर्षव इवापारं संसारमकराकरम् ॥२६३॥
भगवन्तं स्नपयितुमच्युतेन्द्रो मनागथ ।
कलशानानयामास मौलिं दास इव प्रभोः ॥२६४॥
तस्मिन्नवसरे केऽपि वादयामासुराशु च ।
हस्ताभ्यामविहस्ताभ्यां तालका इव नाकिनः ॥२६५॥
केचिदास्फालयन् कांस्यतालानुत्तालपाणयः ।
मराला कमलानीवाऽनिललोलतनूरुह ॥२६६॥
केचिद्वुत्ताडयामासुर्दुन्दुभीन् मधुरध्वनीन् ।
केचिद् मुखरयामासुर्भेरीं गम्भीरझाङ्कृतिम् ॥२६७॥
पाथःसम्पूर्णपाथोदनादलक्ष्मीमलिम्लुचान् ।
मृदङ्गान् वादयामासु. केऽपि मार्दङ्गिका इव ॥२६८॥
केऽपि गम्भीरनिर्घोषमुखरीकृतदिग्मुखान् ।
आनकांस्ताडयामासुः कपोलानिव दन्तिनाम् ॥२६९॥
मन्द्रमापूरयामासुः केऽपि शङ्खाननेकशः ।
त्रिगुणीकृतप्रावीण्या वीणाः के चिदवादयन् ॥२७०॥
एवं दिवौकसो नानाविधातोद्यान्यवादयन् ।
निनादै रोदसीरन्ध्रं समपूर्यन् मुदन्विताः ॥२७१॥
जय नाथ ! जगन्नाथ ! धर्ममर्मप्रकाशक ! ।
वैतालिका इवेत्यूचुश्चारणश्रमणा अपि ॥२७२॥
नव्यकाव्यादिभिः श्राव्यां स्तुतिं कृत्वाऽच्युतेश्वरः ।
सदेवो नामयामास कुम्भांस्तानुपरि प्रभोः ॥२७३॥
लुठन्तस्तेऽथ सलिलकलसाः शिरसि प्रभोः ।
रेजुरञ्जनशैलस्योपरि वर्षद्घना इव ॥२७४॥
निःसरन्त्यश्च कुम्भेभ्यो धारास्ता अम्भसां बभु ।
मन्दराद्रिगुहास्येभ्यः पतन्तो निर्झरा इव ॥२७५॥
निष्पतन्त्यो व्यभुर्नीरधारास्ता भगवत्पदोः ।

गतिलीलामिवाध्येतुं मरालकुलपङ्क्तयः ॥२७६॥
तस्य पाथः प्रवाहस्य च्युतेश्च भगवत्तनौ ।
सङ्गमोऽभादन्तराले गङ्गायमुनयोरिव ॥२७७॥
रेजिरे वारिधारास्ताः पतन्त्यो भगवन्मुखे ।
प्रफुल्लोत्पलमुकुले शीतरश्मेरिवांशवः ॥२७८॥
रेजिरे भगवद्देहे संलग्नास्तोयबिन्दवः ।
शरद्व्योमतले स्फारविस्तारास्तारका इव ॥२७९॥
रेजिरे त्रिजगद्भर्तुर्हृदयेऽम्भःकणाश्चिरम् ।
तत्रस्थध्यानं ध्यायन्तः पयोधेर्बुद्बुदा इव ॥२८०॥
पाणिपल्लवयोर्भर्तुर्लोलास्ते बिन्दवो बभुः ।
कलहंसा इव स्वैरं क्रीडन्तः पद्मकोशयोः ॥२८१॥
भूयोऽपि कृदमस्माकं पीयूषमिव भूस्पृशाम् ।
तत्स्नात्राम्भो न्यधुर्देवास्तदाज्ञामिव मूर्धनि ॥२८२॥
उत्तेरुस्तेऽथ तोयानां प्रवाहाः काञ्चनाद्रितः ।
पवित्रयितुं भूलोकमिवार्हत्स्नानजैर्जलैः ॥२८३॥
भ्रेजे मेरुगिरिः पाथःप्रवाहैरमलैश्च तैः ।
शारदीनाभ्रपटलैः पतितैरिव सर्वतः ॥२८४॥
उद्याने तत्र ते पाथःप्रवाहाः प्रासरंस्तमाम् ।
वनं सेक्तुमिवातुल्यकुल्याः सङ्कल्पिताः सुरैः ॥२८५॥
भूयो भूयोऽपि तत्स्नात्रपावित्रं तोयमस्पृशन् ।
निदाघदाहदग्धाङ्गाः कुञ्जरा इव निर्झरान् ॥२८६॥
एभिः कुम्भैः सदाऽऽरम्भैरम्भोभिः सम्भृतैर्भृशम् ।
भगवन्तमभ्यषिञ्चदच्युतारणयोः पतिः ॥२८७॥
अधोमुखा बभुः कुम्भास्तोयरिक्तोदरास्तदा ।
नीरधौ नीरमादातुं निम्ना इव पयोमुचः ॥२८८॥
अस्माभिर्वदनाम्भोजं ददृशेऽस्य जिनेशितुः ।
श्रद्धासंगो न नः स्थाने इत्यासन्निर्जला घटाः ॥२८९॥
अच्युतेशस्ततः स्वामिवपुरम्भोभिराविलम् ।
उदमार्जयत् सुगन्धिकाषाय्या निजपाणिना ॥२९०॥
विभुमभ्यर्च्य गोशीर्षचन्दनैश्च सुगन्धिभिः ।
यथौचित्यमलंकारान् स्थापयामास वासवः ॥२९१॥
पूजयित्वा च पुष्पौघैः स्मेरैः सौरभ्यभासुरैः ।
स्वामिपादान्तिकेऽच्युतपतिः पत्तिरिव स्थितः ॥२९२॥

नाथाग्रे नाकिनः केऽपि धूपभृङ्गारपाणयः ।
काकतुण्डान् दहन्ति स्म कर्मभिः सममात्मनाम् ॥२९३॥
केचिदुल्लालयामासुः कौन्दान् नभसि कन्दुकान् ।
तमस्विन्यां तमस्विन्यामिन्दूनिव चिकीर्षवः ॥२९४॥
दधुर्मूर्ध्नि जगद्भर्तुः के चिच्छत्राणि नाकिनः ।
के चिदुच्चालयामासुः पासरांश्चामराधिपाः ॥२९५॥
नृत्यं वितेनिरे केऽपि गीतं गान्ति स्म केचन ।
के चिदुत्कलयामासुर्व्योम्नि वंशे नटा इव ॥२९६॥
तस्थुर्द्वाःस्था इवोद्दण्डदण्डमण्डितपाणयः ।
के चिर्दहन्मुखे न्यस्तलोचना स्मितलोचना ॥२९७॥
हासयन्तः सुरान् सर्वान् केऽपि हास्यं व्यधुः सुराः ।
केचिद् मल्ला इवोद्बद्धकक्षा मुष्टिमृधं व्यधुः ॥२९८॥
विविधैरायुधैः केऽपि व्यधुर्युद्धं भटा इव ।
शिरास्यं स्फालयन् केऽपि मिथश्च महिषा इव ॥२९९॥
केऽपि स्वर्गसदो वाढं जगर्जुः कुञ्जरा इव ।
तुरङ्गा इव विदधुः केऽपि हेषारवं वरम् ॥३००॥
केऽप्यसिं भ्रमयामासुः सद्यो विद्युल्लतामिव ।
केचित्वोद्‌भ्रयामासुर्हस्तान् हस्तानिव द्विपाः ॥३०१॥
भगवन्नयनानन्ददायिनीमसृताशना ।
रूपं निरङ्ख्यामासुश्चेष्टां नानाविधामिति ॥३०२॥
अच्युतेन्द्रो जगन्नाथं नत्वा स्तुत्वा च भक्तिभाक् ।
अपसृत्य ततः किञ्चित् तस्थावर्हन्मुखेक्षणः ॥३०३॥
अथानुज्येष्ठं द्वाषष्टिमघवानोऽपि चक्रिरे ।
स्पर्धयन्त इवान्योन्यं विशेषादर्हदुत्सवम् ॥३०४॥
ईशानेशोऽथ प्रथमस्वर्गनाथ इव व्यधात् ।
आत्मनः पञ्च रूपाणि ज्ञानानीव सिसेविषुः ३०५॥
प्राग्वद्रूपैश्चतुर्भिस्तैः कृत्वा कृत्यं निजं निजम् ।
रूपेण पञ्चमेनैष तस्थौ शूलधरः पुरः ॥३०६॥
अथ सौधर्मनाथः स चक्रे रूपचतुष्टयम् ।
वृषाणां वृषमादित्सुरिव जैनं चतुर्विधम् ॥३०७॥
तदा रूपाणि तुङ्गानि वृषाणां तानि रेजिरे ।
कृतानीव चतुर्दिग्भ्यः सारमादाय वेधसा ॥३०८॥
ते रेजिरे महोक्षाणः कुन्देन्दुविशदांशवः ।

वाहनानीव धर्माणां चतुर्णाममलत्विषाम् ॥३०९॥
तच्छृङ्गाग्रक्षरत्क्षीरधाराभिरष्टभिस्ततः ।
स्नपयामास सौधर्माधीश्वरः परमेश्वरम् ॥३१०॥
क्षरन्त्यः क्षीरधारास्ताः प्रभूपरि चकासिरे ।
सलिलोपरि कालिन्द्या राकेन्दोरिव रोचिषः ॥३११॥
क्षीरैः क्षरद्भिस्तैर्लिप्तं बभासे भगवद्वपुः ।
मयूखैरिव पीयूषमयूखस्य शरन्नभः॥३१२॥
दिग्धः स्निग्धतमैर्दुग्धोपमैः पूरैश्च पाथसाम् ।
रेजेऽर्हन् जाह्नवीनीरैरिव स्नातो द्विपोत्तमः ॥३१३॥
वृषरूपधरोऽर्हन्तं स्नपयंस्त्रिदशेश्वरः ।
आत्मानं निर्मलीचक्रे चित्रमेतद्दुदञ्चितम् ॥३१४॥
स्नपयित्वेति देवेन्द्रो जिनेन्द्रं भक्तिनिर्भरः ।
संजह्रे वृषरूपाणि मायाकार इव द्रुतम् ॥३१५॥
कृत्वाऽङ्गरागनेपथ्यपूजामिन्द्रोऽर्हतः पुरः ।
अलिखत् तन्दुलै रौप्यै रत्नपट्टेऽष्टमङ्गलीम् ॥३१६॥
एवं कृतोत्सवो देवपुङ्गवो जिनपुङ्गवम् ।
स्तवैः सदर्थसंदर्भगर्भितैरेवमस्तवीत् ॥३१७॥
जय धर्मधुराधीर ! जन्तुजातपितामह ! ।
त्रिभिर्मत्यादिभिर्ज्ञानैः सहजैस्समलंकृत ! ॥३१८॥
दीप्रदीपेनेव वेश्म विधुनेव नभःस्थलम् ।
त्वया नाथावतीर्णेन शुशुभे भुवनत्रयम् ॥३१९॥
विश्वदृक्पावनीकारे दृष्टे त्वन्मुखभास्करे ।
दुरन्तैर्दुरितैर्दूरे नष्टं ध्वान्तभरैरिव ॥३२०॥
भरतक्षेत्रभूरेषाऽभिवन्द्या धुसदामपि ।
यां करिष्यसि नाथ ! त्वं पवित्रां पादपांशुभिः ॥३२१॥
धन्यास्ते कृतपुण्यास्ते मानवा मानवाधिप ! ।
यच्चक्षुर्गोचरो भावी त्वं नित्यं भानुमानिव ॥३२२॥
मुक्तिसीमन्तिनीकान्त ! कज्जलश्यामलच्छवे ! ।
त्वामेव शरणीकुर्वे नीरं मरुधुमानिव ॥३२३॥
विश्वविश्वोपकारैकमल्ल ! मल्लोचनातिथिम् ।
त्वामेष मम पौलोमीवर्गो नमति साम्प्रतम् ॥३२४॥
इति स्तुत्वा शचीजानिर्जिनं स्वैर्निर्जरैर्वृतः ।
पञ्चरूपं समादायार्हन्तं मातृन्तिकेऽभ्यगात् ॥३२५॥

अर्हत· प्रतिबिम्बं तत् संहृत्यामरपुङ्गवः ।
क्षुमोच्चोपास्वमर्हन्तं संजहे चावस्वापिनीम् ॥३२६॥
देवदूष्यद्वयं दिव्यं मुक्त्वोच्छीर्षे दिवस्पतिः ।
तत्रैव प्रसरत्कान्तिमण्डले कुण्डले न्यधात् ॥३२७॥
नानामाणिक्यहारार्धहारश्रीदामकन्दुकम् ।
अर्हद्दृष्टिविनोदार्थं विताने वासवो न्यधात् ॥३२८॥
अथ प्रथमस्वर्नाथः श्रीदमेवं समादिशत् ।
प्रत्येकं काञ्चनादीनां कोटीर्द्वात्रिंशदञ्जसा ॥३२९॥
वसनासननेपथ्यप्रमुखं यच्च शोभनम् ।
तत्सर्वं स्वामिनो धाम्नि निधेहि नरवाहन ! ॥३३०॥ (युग्मम्)
तथैव विहिते तेन शक्रः स्माह्यभियोगिकान् ।
उद्घोषा क्रियतामित्थं निखिलेष्वपि नाकिषु ॥३३१॥
अर्हन्मातुरर्हतश्च चिन्तयिष्यति योऽशिवम् ।
तन्मूर्धार्जमञ्जरीव सप्तधाऽऽशु स्फुटिष्यति ॥३३२॥
इदमिन्द्रवचश्चतुर्निकायेष्वपि नाकिषु ।
गाढमुद्घोषयामासुर्भूयो भूयोऽपि ते सुराः ॥३३३॥
शक्रः संचारयामास स्वाम्यङ्गुष्ठे सुधामथ ।
क्षुधोदये यतोऽर्हन्ता बाल्येऽङ्गुष्ठामृतं पिबेत् ॥३३
अथादिशद् बुद्धिधात्रीर्धात्रीकृत्येषु धीधनः ।
वासवोऽप्सरसः पञ्च धात्रीकर्मकृतेऽर्हतः ॥३३५॥
तदैवं भगवज्जन्माभिषेकानन्तरं ततः ।
बिडौजाश्च ते सर्वेऽपि नन्दीश्वरमुपेयिवान्॥३३६॥
शाश्वतीः प्रतिमा अर्हत्प्रतिमास्तत्र वासवाः ।
नत्वा कृत्वा चाष्टदिनोत्सवं जग्मुर्यथागतम् ॥३३७॥
अथ प्रबुद्धा वामाऽपि पद्मिनीवोदये रवेः ।
दिव्याङ्गरागनेपथ्यमपश्यद् निजमात्मजम् ॥३३८॥
सपरिच्छददेवेन्द्रागमनादिपुर.सरम् ।
पुत्रजन्मोत्सवोदन्तं सा पत्युस्तमचीकथत् ॥३३९॥
सुधाकृतसुधामेनां वार्ता श्रुत्वाऽश्वसेनराट् ।
धाराहतकदम्बद्रुपुष्पवत् समुदश्वसत् ॥३४०॥
खण्डिताया इवाब्जिन्या· प्रालेयाश्रूणि गोष्पतौ ।
अपाकुर्वति कृतार्थः उत्तस्थौ तल्पमध्यतः ॥३४१॥
राजाऽऽत्मजन्मनो जन्मशंसिने काञ्चनादिकम् ।

ददौ भूरितरं किं ह्यदेयं तादृशजन्मनि ? ॥३४२॥
समानत्वेन संमान्य प्रापिताः पदमुच्चकैः ।
वक्तारो जन्मनः सूनोः सर्वेऽप्येतेन भूभुजा ॥३४३॥
संसारात् सर्वजीवानां मोक्षमेष करिष्यति ।
युक्तं तज्जनने राज्ञा बन्दिमोक्षो व्यधायि यत् ॥३४४॥
सतां शिरसि नाथोऽसौ करमुक्तिं करिष्यति ।
इतीव भूभुजा चक्रे करमुक्तिः पुरेऽखिले ॥३४५॥
सुगन्ध्युदकसम्भारैरभितो निखिलं पुरम् ।
अभिषिक्तं प्रवर्षद्भिर्घनैरिव शनैः शनैः ॥३४६॥
प्रकरः पञ्चवर्णानां कुसुमानामशोभत ।
अवतीर्णः पुरेऽमुष्मिन् पुष्पकालः किमङ्गवान् ? ॥३४७॥
द्विपथे त्रिपथे राजपथे बहुपथे तथा ।
उदञ्चिता मञ्चकाश्च विमाना इव नाकिनाम् ॥३४८॥
उत्तम्भिता चत्वरेषु प्रोच्चैस्तोरणधोरणिः ।
प्रादुर्भूतेव हल्लेखलेखावल्लीषु मञ्जरी ॥३४९॥
भद्रकुम्भाश्च संमुक्ताः स्थाने स्थाने पुरेऽखिले ।
बहुरूपैर्जगन्नाथं द्रष्टुमिन्दुरिवाययौ ॥३५०॥
विहिताः कौङ्कुमा हस्ताश्चत्वरे चत्वरे पुरे ।
कृतकृत्य इवाभ्यागाद् भूरिरूपैर्नवांशुमान् ॥३५१॥
दुकूलैः कलिताः प्रौढा मण्डिता मण्डपाः पुरे ।
किञ्चिद् गगनतो नम्राः शारदीना इवाम्बुदाः ॥३५२॥
स्वस्तिकृत् स्वस्तिकश्रेणी मौक्तिकैः सूत्रिता पुरे ।
अर्हज्जन्मोत्सवं द्रष्टुमिवागादुडुमण्डली ॥३५३॥
ननृतुः केऽपि वंशाग्रे आह्वयन्त इवामरान् ।
केचिच्च मण्डलीभूय पुरुषा रासकान् जगुः ॥३५४॥
स्थाने स्थाने व्यधुर्नृत्यं भूरिशः पण्ययोषितः ।
उज्जगुर्धवलान्युच्चैः सधवाः कुलसुभ्रुवः ॥३५५॥
वेणुवीणामृदङ्गादिवादित्रध्वनिबन्धुरम् ।
अशोभिष्ट प्रमोदाय तत्पुरं रङ्गभूरिव ॥३५६॥
स्तम्भा उत्तम्भिता भूरिमौक्तिकश्रेणिहारिणः ।
ताराल्रीमालिता मेरुगिरिदन्ता इवोन्मुखाः ॥३५७॥
बभणुर्भूरयो भट्टाः पेठुर्मङ्गलपाठकाः ।
उच्चैरुपाध्याया वेदानाशिषो बन्दिनो जगुः ॥३५८॥

पूजा नानाविधास्तीर्थकृतां वेश्मनि सूत्रिताः ।
दीयन्ते मार्गणेभ्योऽपि काञ्चनादिधनान्यथ ॥३५९॥
प्रमोदै प्रोढिमप्राप्तैः प्रोच्चैः पल्लवितैरिव ।
सोत्साहैरुत्सवैरेभिरित्यशोभिष्ट सा पुरी ॥३६०॥
मौक्तिकस्वर्णरत्नादिप्राभृतैर्भृतपाणय. ।
सर्वेऽपि सप्रियाः पौरा अभ्ययू राजमन्दिरम् ॥३६१॥
तैर्जनैर्मुदितै. पूर्णं रत्नै राजगृहाजिरम् ।
सरो विस्मेरमुकुलै. पुण्डरीकाम्बुजैरिव ॥३६२॥
प्रमोदाऽद्वैत्यसंपन्नमित्यभूद् भूपधाम तत् ।
तादृग्जन्मनि तादृशामुत्सवानामतुच्छता ॥३६३॥
वसुधाधीश्वरोऽप्येवं निजर्द्धेरनुमानतः ।
व्यधाज् जन्मोत्सवं भर्तुं शक्तिर्गोप्या हि नोत्सवे ॥३६४॥
निवृत्ते तूत्सवेऽथास्मिन् दिवसे प्रथमे प्रभोः ।
कारयामासतुः स्थितिपतिकां पितरौ मुदा ॥३६५॥
तृतीयेऽह्न्यथो मातापितरौ पुष्पदन्तयोः ।
दर्शनं दर्शनीयस्यार्हतः कारयतः स्म तौ ॥३६६॥
षष्ठेऽह्नि कल्पितानल्पकल्पाभिः कलगीतिभिः ।
ताम्बूलपूर्णवक्त्राभिर्घुसृणागरुपाणिभिः ॥३६७॥
हारार्धहारराजिष्णुवक्षोजद्वयहारिभिः ।
नितम्बबिम्बविन्यस्तकाञ्चीकाञ्चनचारुभिः ॥३६८॥
सधवाभि· कुलस्त्रीभि षष्ठीजागरणोत्सवम् ।
दानमानैरसामान्यं राजा राज्ञी च चक्रतुः॥३६९॥(त्रिभिर्विशेषकम्)
एकादशे दिने प्राप्ते पितरौ प्रीतमानसौ ।
निवर्तयामासतुश्चाशुचिकर्ममहोत्सवम् ॥३७०॥
प्राप्तेऽथ द्वादशे घस्रे महीशक्र समाह्वयत् ।
ज्ञातिसम्बन्धबन्ध्वाद्यं समस्तं स्वपरिच्छदम् ॥३७१॥
भुक्तिपूर्वं वस्त्ररत्नसुवर्णमणिदानत· ।
यथार्हं दत्तसन्मानांस्तानुवाचाश्वसेनराट् ॥३७२॥
सूनौ गर्भगतेऽमुष्मिस्तमास्विन्यां तमस्यपि ।
व्रजन्तं भुजङ्गं पार्श्वे देवी यद् निरवर्णयत् ॥३७३॥
तदस्तु सूनोरस्याद्य पार्श्व इत्यभिधा शुभा ।
प्रत्यूचुस्तेऽपि संहृष्टमानसा एवमस्त्विति ॥३७४॥
अथ स शक्रादिष्टाभिर्धात्रीभिरन्वहं मुदा ।

लालयते स्म जगन्नाथः स्वयमुप्त इवाङ्घ्रिपः ॥३७५॥
धात्रीणामिव भूपानामङ्कादङ्कं च संचरन् ।
बालेन्दुरिव बालोऽपि स्वाम्यभूद् नयनोत्सवः ॥३७६॥
सुधां सुधाशनाधीशन्यस्तामङ्गुष्ठगां विभुः ।
क्षुधोदये पपौ कूपकुल्योदकमिव द्रुमः ॥३७७॥
स्तनंधयोऽपि हि स्वामी न स्तन्यं धयति स्म सः ।
लोकोत्तरत्वमात्मीयं सूचयन्निव शैशवात् ॥३७८॥
सर्वासामपि धात्रीणां तासां चाप्सरसामिव ।
भर्तुर्भक्तौ विवादोऽभूदहंपूर्विकया महान् ॥३७९॥
सोऽपश्यदुपरिन्यस्तं प्रभुः श्रीदामकन्दुकम् ।
ग्लानिर्माऽस्येति दृक्पातपीयूषैः प्लावयन्निव ॥३८०॥
माणिक्यस्वर्णे निर्वर्ण्य प्रसुप्तः पालने प्रभुः ।
अपश्यदूर्ध्वमपरदृशा सम्भावयन्निव ॥३८१॥
भ्रेजाते कुण्डले शक्रन्यस्ते ते पार्श्वयोः प्रभोः ।
बिम्बे किं युगपत् पूर्वापरयोः पुष्पदन्तयोः ? ॥३८२॥
स्वेदामयमलैर्मुक्तं सौरभ्याद्भुतभासुरम् ।
आद्यसंहननं लोके नेतुर्वपुरशोभत ॥३८३॥
भर्तुः श्वासः समुद्भिन्नाम्भोजसौरभ्यसोदरः ।
सञ्जात इव हृत्स्थायिशुक्लेश्याब्जिनीपुटात् ॥३८४॥
असृग्मांसे विभोर्हरहासहारानुसारिणी ।
आवपुःस्थसितध्यानपिण्डैर्धवलता इव ॥३८५॥
अगोचरो दृशां भर्तुर्नीहाराहारयोर्विधिः ।
आच्छादित इव भुवनोत्तममाहात्म्यवाससा ॥३८६॥
चतुर्भिरित्यतिशयैः सहोत्थैर्भगवान् व्यभात् ।
उद्यानैर्भद्रशालाद्यैरिवामरमहीधरः ॥३८७॥
शनैः शनैर्जगन्नाथः पादौ मण्डयति स्म सः ।
भूभारभङ्गुरग्रीवभोगिभारभयादिव ॥३८८॥
किञ्चिच्चंक्रमणं चक्रे भूषयन् प्राङ्गणं प्रभुः ।
अनुस्वःकुलिनीकूलं मरालस्येव बालकः ॥ ३८९ ॥
भ्रमतोऽभाज्जगद्भर्तुः क्रमयोर्घर्घरध्वनिः ।
गत्या जितो मरालौघः स्तुवन्निव पदान्तिपत् ॥३९०॥
पांशुक्रीडां च चिक्रीड डिम्भैः सार्धं धियांनिधिः ।
जिनाः पित्रोः प्रमोदाय पांशुक्रीडाकृताशया ॥३९१॥

रममाणो बभौ धूलीधूसराङ्गो जगद्गुरुः ।
नर्मदाकूलधूलीभिर्लिप्तो द्वैप इवार्भकः ॥३९२॥
वाक्प्रावीण्यं च धात्र्यस्ताः शिक्षयामासुरर्हतः ।
बभौ सिञ्चन्निवाम्बायाः प्रमोदद्रुममीशिता ॥३९३॥
भर्तुरिच्छानुसारेण कृतरूपैः सुरैः सह ।
सोऽक्रीडद् विविधां क्रीडां पित्रोराह्लादहेतवे ॥३९४॥
समचतुरस्रसंस्थानः श्रीवत्सोद्भासिहृत्स्थलः ।
स्वामी क्रमादवर्धिष्ट शशीव सितपक्षगः ॥३९५॥
चक्राङ्कुशध्वजच्छत्रकुम्भाम्भोजादिलाञ्छनैः ।
धिष्ण्यैरिव नभः स्वामिपत्तलं लाञ्छितं बभौ ॥३९६॥
उन्मयूखा नखश्रेणी ताम्राऽभाद्भगवत्पदोः ।
पदाधः कृतरागेणोन्मुक्ता श्रेणीव पत्रिणाम् ॥३९७॥
पीनावभ्युन्नतौ भर्त्तुर्भ्राजाते चरणावुभौ ।
गुप्तेन्द्रियत्वमध्येतुं कूर्माविव समागतौ ॥३९८॥
क्रमलन्ध्यं जगद्भर्तुर्नास्प्राक्षीद् मेदिनीतलम् ।
विश्वविश्वजनाधारभुवो भ्रंशभयादिव ॥३९९॥
सरले मांसले वृत्ते भर्तुर्जङ्घे विरेजतुः ।
मृणाले इव विपरावृ्मुखयोः पद्मकोशयोः ॥४००॥
करिकरानुकारिणावभातामतिमांसलौ ।
भर्तुरूरू मनोहरौ रम्भास्तम्भाविवाकृतौ ॥४०१॥
कटिः काठिन्यसुभगा बभौ दम्भोलिसन्निभा ।
भर्त्तासौ पुरुषसिंहो दत्तेवेति मृगाधिपे ॥४०२॥
अभादेवं श्रीवामेयनाभिर्गाम्भीर्यमद्भुतम् ।
शैवलिन्या इवावर्त्तः सलिलप्लावसम्भवः ॥४०३॥
अभ्युन्नतं सुविस्तीर्णं वक्षःस्थलमशोभत ।
प्राणेयं रमणीयं श्रीबालिकाया इवाङ्गणम् ॥४०४॥
प्रसरद्रुचिराजिष्णुः श्रीवत्सो वत्सगो व्यभात् ।
भाविभामण्डलश्रीणां प्रतिभूरिव भासुरः ॥४०५॥
त्रिरेखाखचितो ह्रस्वो गम्भीरध्वनिबन्धुर ।
अतीवोन्नतिभाग् भर्तुः कण्ठः कम्बुविडम्बकः ॥४०६॥
ककुद्मत्ककुदाकारौ स्कन्धौ पीनौ दृढौ प्रभोः ।
विश्वविश्वम्भराभारे भाविनो धूर्वहाविव ॥४०७॥
मृदुलौ सरलौ पीनौ भुजावाजानुलम्बितौ ।

श्रीहस्तिन्या इवालानस्तम्भावुच्चस्थितावुभौ ॥४०८॥
स्निग्धौ च सौष्ठवोत्कृष्टौ पुष्टास्थी शोणिमाङ्कितौ ।
शस्तरेखौ प्रभोः पाणी दर्पणाविव रेजतुः ॥४०९॥
अङ्गुष्ठौ सौन्दर्योत्कृष्टौ शोणितौ यवराजितौ ।
अभातां विश्वसाम्राज्यशाखिनः पल्लवाविव ॥४१०॥
सरलाः सूक्ष्मपर्वाणः शोणा अङ्गुलयो बभुः ।
मनाग् मनाग् विनिर्यान्तः कल्पद्रूणामिवाङ्कुराः ॥४११॥
नखाः स्निग्धनभा ऊर्ध्वाशिखाः शोणा व्यभुर्विभोः ।
आनुपूर्वीस्थयोर्भव्यदलानीव कराब्जयोः ॥४१२॥
अशोभिष्ट जिनाङ्गुष्ठप्रान्तमध्याद्यपर्वसु ।
यवराजी समुत्सेव विवाहाय जगच्छ्रियाम् ॥४१३॥
ग्रीवा गुणिगुरोर्लम्बी वर्तुला मांसमेदुरा ।
दधौ प्रोत्फुल्लकमलकोशपृष्ठविलासताम् ॥४१४॥
वर्तुलं वदनं पूर्णमण्डलेन्दुसहोदरम् ।
चक्रे विश्वत्रयस्वान्तवीचिमालिसमुन्नतिम् ॥४१५॥
कपोलफलकौ त्वल्पौ स्निग्धावुन्नतिशालिनौ ।
व्यभातां त्रिजगद्भर्तुरासने इव वाक्छ्रियोः ॥४१६॥
स्कन्धावलम्बिनौ लम्बौ मध्यावर्तौ जगत्पतेः ।
श्रवणौ विभ्रतुः शोभालीलाऽऽन्दोलाविलासताम् ॥४१७॥
अधरीकृतबिम्बे तदधरबिम्बे च विभ्रतुः ।
मुखद्युतिसरित्तीरे विद्रुमाङ्कुरविभ्रमम् ॥४१८॥
द्वात्रिंशत्कुन्दकलिकाकारा दन्ता जगद्गुरोः ।
नासावंशोऽपि सरलोन्नतो दीपशिखोपमः ॥४१९॥
प्रत्यग्रपल्लवप्राया मृदुला रसना विभोः ।
द्वादशाङ्गागमोत्पत्तिनिदानमनिरर्थकम् ॥४२०॥
दृशौ कर्णान्तविश्रान्ते प्रान्तरक्ते विरेजतुः ।
भ्रुवावपि भ्रुवो भर्तुः श्यामले कुटिले शुभे ॥४२१॥
भालस्थलमशोभिष्ट विशालं त्रिजगत्पतेः ।
स्वसौष्ठवेनाभिभवदष्टमीशशिनः श्रियम् ॥४२२॥
केशाश्चकासिरे विश्वमूर्धन्यस्यास्य मूर्धनि ।
श्यामलाः कुञ्चिताः श्लक्ष्णाः कलापा इव केकिनः ॥४२३॥
सावर्तं वृत्तमुत्तुङ्गमुष्णीषं नाथमूर्धनि ।
चैत्योपरि स्थितशातकुम्भकुम्भश्रियं दधौ ॥४२४॥

स्निग्धान्यञ्जनरोलम्बबहुलानि मृदूनि च ।
तनौ तनूनि रोमाणि रेजिरे त्रिजगद्गुरोः ॥४२५॥
इत्याद्यष्टाग्रसहस्रलक्षणैर्लक्षितः प्रभुः ।
तारकैरिव तारापः शुशुभे शुभगाग्रणीः ॥४२६॥
नवीनफलिनीनीलकायो विश्वगुरोरभात् ।
कान्तैर्मरकतज्योतिःपिण्डैरिव विनिर्मितः ॥४२७॥
आभरणानि यान्यङ्के न्यधत्तां पितरौ प्रभो ।
प्रत्युत प्रतिभूष्यन्ते तान्येवाऽस्याङ्गरोचिषा ॥४२८॥
सुहृद्भिः सममाक्रीडक्रीडां कुर्वन् जगद्गुरुः ।
वनश्रीवदनाम्भोजभ्रमरत्वमुपेयिवान् ॥४२९॥
जलकेलिपरः स्वामी प्राविशज् जान्हवीजले ।
सद्यः सद्यस्ककालिन्दीकल्लोलागमविभ्रमः ॥४३०॥
स्वर्णदीसलिलोल्लोला निष्पतन्तः प्रभूपरि ।
दधिरे दधिपिण्डाभदुकूलकमलां विभो ॥४३१॥
अञ्जनद्युतिरम्भोभिर्गाङ्गेयैः स्नपितः प्रभु ।
व्यरुचत् तुहिनज्योति कीर्णैर्दिग्ध इव द्विप. ॥४३२॥
विश्वभर्तुर्जलक्रीडापवित्रं तत् सरित्पयः ।
अद्यापि तीर्थमित्येतद् विश्वपावित्र्यहेतवे ॥४३३॥
एवं नानाविधां क्रीडां क्रीडन् सव्रीडमण्डनः ।
ववृधेऽनुक्रमाद् मातापित्रोरिव मुदङ्कुर ॥४३४॥
कलाकलापपाथोधिपाथःपानघटोद्भव· ।
सुरासुरनरश्रेणीलोचनाम्भोजभास्कर ॥४३५॥
नवहस्तप्रमाणाङ्गश्रद्धिमागार ईशिता ।
क्रमेण कलयामास यौवनं कामकाननम् ॥४३६॥ (युग्मम्)
अथावस्थितमास्थान्यामश्वसेनमहीभुजम् ।
अन्त समभगात् कोऽपि द्वाःस्थेनानुगतः पुमान् ॥४३७॥
भूपोऽप्राक्षीत् पुमांसं तं समागमनकारणम् ।
मूर्ध्नि बद्धाञ्जलिर्मूर्धाभिषिक्तमभ्यधादसौ ॥४३८॥
अस्ति भूभामिनीभालस्थलैकतिलकं पुरम् ।
नाम्ना कुशस्थलं स्थालमिव श्रीतन्दुलावलेः ॥४३९॥
यत्र जैनालयश्रेणी शोभते हाटकैर्घटैः ।
परंपरेव कोटीरैर्हीरैर्विश्वंभराभुजम् ॥४४०॥
शालिभञ्ज्यो भान्ति यत्र विहारस्तम्भभित्तिषु ।

जिनाननं द्रष्टुमिवाभ्येयुरमर्थः स्तब्धलोचना ॥४४१॥
तत्राभूद्भूमिभृक्कोटीकोटीरायितशासनः ।
नरवर्मनृपः शीलवर्मसंवर्मितः सदा ॥४४२॥
तीर्थकृत्पथपथिकः स पार्थिवपुरन्दरः ।
न्यायेनापालयल्लोकमाभीरा इव गोकुलम् ॥४४३॥
अथ भूपः स संसारमसारं भावयन् हृदि ।
राज्यभाराद्विरक्तोऽभूत् कुपथ्यादिव रोगवान् ॥४४४॥
राज्ये न्यस्य प्रसेनजिन्नामानं निजमङ्गजम् ।
दीक्षां जग्राह जैनानां मुनीनामन्तिके नृपः ॥४४५॥
अथ प्रसेनजिद्राजा पितेवावाति मदिनीम् ।
यशःकर्पूरपूरेण सुरभीकृतदिग्मुखः ॥४४६॥
अभूत् प्रभावती नाम्ना कनी तस्यावनीपतेः ।
लावण्यकमलाकेलिगृहं यस्या वपुर्व्यभात् ॥४४७॥
सा चञ्चलाक्षी चिकुरांश्चञ्चरीकरुचीन् मृदून् ।
कुञ्चितान् बिभरांचक्रे वीचीरिव यमस्वसा ॥४४८॥
तस्याश्चकासिरे चारुकुन्तलाः कज्जलत्विषः ।
घ्रातुं भृङ्गा इवाभ्येयुर्मुखाम्भोरुहसौरभम् ॥४४९॥
चित्रकृद्रुचिरं चित्रं रोचिष्णु रुचिचान्दनम् ।
सा दधौ चित्तभूभूपप्रदीपकलिकामिव ॥४५०॥
श्यामले कुटिले तस्या अभातां सुभ्रुवो भ्रुवौ ।
अङ्कुराविव लावण्यवल्या दृग्दीर्घिकातटे ॥४५१॥
स्फारे कर्णान्तविश्रान्ते लोचने वामलोचना ।
दधौ दले इव स्मेरे स्मरकेलिसरोरुह ॥४५२॥
कनीकनीनिके कृष्णतमे श्लक्ष्णे उभे शुभे ।
अभातां लोचनोत्फुल्लपद्मलीनाविवालिनौ ॥४५३॥
तस्याः पाणी इशो नासावंशश्च सरलो बभौ ।
आनुपूर्व्युन्नतः कामकल्पद्रोरिव कोरकः ॥४५४॥
मांसलौ स्नेहलौ वृत्तौ तत्कपोलौ विरेजतुः ।
सहजन्यो रतिप्रीत्योर्दर्पणाविव काञ्चनौ ॥४५५॥
तस्या अभातां ताण्टकौ कर्णयोः स्कन्धलम्बयोः ।
दोलाकेलिसमुत्कण्ठौ पुष्पदन्ताविवागतौ ॥४५६॥
तस्या ओष्ठपुटः स्पष्टमशोभिष्टारुणद्युतिः ।
सारैः प्रवालपिण्डानामान्तरैरिव निर्मितः ॥४५७॥

रेजे तद्वदनं राकातुहिनद्युतिसोदरम् ।
तयोरेव हि सामान्यमसामान्यं न चेत् कथम् ? ॥४५८॥
कोमलौ सरलौ तस्या बाहुदण्डौ विरेजतुः ।
युवचञ्चलचित्तानां बन्धने पाशकाविव ॥४५९॥
पीनावत्युन्नतौ भृतौ स्तनौ तस्या विरेजतुः ।
रतिस्मराभ्यां संमुक्तौ क्रीडान्ते कन्दुकाविव ॥४६०॥
कुचद्वन्द्वं विशालाक्ष्याः कल्याणकलशोपमम् ।
बभौ द्वन्द्वं चरद्द्वन्द्वमिव वक्षःसरोतटे ॥४६१॥
स्तनावौन्नत्यमापन्नौ तथा तस्या मृगीदृशः ।
तदन्तरे यथा लेभे नैव हारोऽप्यवस्थितिम् ॥४६२॥
तत्कुचौ कुर्वता धात्रा लुण्ठितौ वज्रकुञ्जरौ ।
तयोः काठिन्यमौन्नत्यं न चेद्तादृशं कथम् ? ॥४६३॥
गभीरं नाभिकुहरं बभासे हरिणीदृशः ।
स्वनिधाननिधानाय स्मरेणेव कृतं बिलम् ॥४६४॥
तस्याः सुभ्रुव उदरं कुलिशोदरसोदरम् ।
वीक्ष्य वक्षोजयोर्द्वन्द्वमीर्ष्ययेवाभवत् कृशम् ॥४६५॥
विभ्राजाते नितम्बिन्या नितम्बावतिपीवरौ ।
मानमन्मथयोश्चान्द्रक्रान्तौ क्रीडाचलाविव ॥४६६॥
कोमलौ मांसलौ वृत्तावूरुस्तम्भौ मृगीदृश. ।
व्यभातामद्भुतरम्भागर्भसंदर्भिताविव ॥४६७॥
इति स्वाभाविकैस्तस्या लक्षणैर्लक्षितं वपु· ।
शुशुभे सुभगाकारैर्गगनं तारकैरिव ॥४६८॥
सा कन्याऽगण्यलावण्यपुण्यपानीयकूपिका ।
तारुण्यं प्राप तरुणीजनाऽकृत्रिममण्डनम् ॥४६९॥
तां कन्यामथ निध्याय दध्यौ राजा प्रसेनजित् ।
कनीरूपानुरूपः को भविता दुहितुः पतिः ? ॥४७०॥
यथेयं युवतीलोकमण्डनं दुहिता मम ।
तथात्र भविता कोऽपि वरो नरपुरन्दरः ॥४७१॥
स्वर्णे मणिमिव स्थाने योजयिष्याम्यहं सुताम् ।
विद्यामिव सुतां विज्ञा योजयन्त्युचिते पदे ॥४७२॥
एवं पृथ्वीपति· पुत्रीवरचिन्तापरायणः ।
वरं गवेषयामास नाऽमिलत् कोऽपि तादृशः ॥४७३॥
वसन्तावसरेऽन्येद्युः स्मरोन्मादविधायिनि ।

कन्या सा सार्धमालीभिः क्रीडार्थं निरगात् पुरात् ॥४७४॥
यथार्हं कल्पितानल्पकल्पसङ्कल्पना कनी ।
साऽथाविशत् पुरोद्यानमुद्यानश्रीरिवाङ्गिनी ॥४७५॥
कोकिलाकुलसंलापे भृङ्गझङ्कारहारिणि ।
प्रोत्फुल्लपुष्पसद्गन्धसुगन्धितदिगानने ॥४७६॥
कानने तत्र रम्याभिर्नानाक्रीडाभिरुन्मदा ।
चिरं चिक्रीड सा कन्या वनदेवीव निर्भरम् ॥४७७॥ ( युग्मम् )
यथेच्छं रममाणा सा क्रीडोद्याने कुमारिका ।
अश्रौषीत् किन्नरद्वन्द्वोद्गीयमानमिदं पदम् ॥४७८॥
जय वाराणसीराजाश्वसेननृपनन्दन ! ।
जय देववधूवृन्दगीयमानगुणोत्कर ! ॥४७९॥
जय देव ! जगल्लोकावतंसीकृतशासन ! ।
जय प्रोत्फुल्लकलिनीतमालश्यामलच्छवे ! ॥४८०॥
जय सौभाग्यसंभाराभिभूतमकरध्वज ! ।
जय देवविभूपास्तपार्श्व ! पार्श्वप्रभो ! ॥४८१॥
सैवात्र गुणलावण्या मान्या सैवात्र मानिनी ।
यद्विषये पतिष्यन्ति दृग्विलासास्तव प्रभो ! ॥४८२॥
सश्रीका भाविनी योषा सा विशेषाद् महीतले ।
यस्याः पाणिग्रहं पार्श्वकुमारेन्द्रः करिष्यति ॥४८३॥
तत्किन्नरमिथुनं तत्र भूयो भूयो विभोर्गुणान् ।
जेगीयते कलध्वानबधिरीकृतकाननम् ॥४८४॥
तद् गीतं किन्नरद्वन्द्वोद्गीतं स्फीतप्रमोदकृत् ।
हरणीव कृतैकाग्रकर्णा शुश्राव कन्यका ॥४८५॥
श्रुत्वा पार्श्वगुणग्रामगुम्फितं गीतमद्भुतम् ।
क्रीडामिवापरां क्रीडामत्याक्षीत् सा कुमारिका ॥४८६॥
तदैकाग्रमनाश्चारु शृण्वाना गीतिनिस्वनम् ।
चचाल किन्नरद्वन्द्वाभिमुखं सुमुखी शनैः ॥४८७॥
सा गीतिः किन्नरोद्गीता कर्णाभ्यर्णमुपेयुषी ।
तरसा विदधे पार्श्वमयीमिव कुमारिकाम् ॥४८८॥
किन्नरोद्गीयमानं तद् गीतमाकर्ण्य सा कनी ।
तद्रागसुभगं पार्श्वे बध्नाति स्म मनो निजम् ॥४८९॥
इङ्गिताकारचेष्टाभिः स्पष्टाभिस्तां प्रभावतीम् ।
पार्श्वे रक्तां भावविज्ञा व्यज्ञासीत् तत्सखीजनः ॥४९०॥

किन्नराभिमुखं यान्ती गीतिं सा प्रभावती ।
एकाग्रहृदयाऽश्रौषीद् नागीव स्फारितेक्षणा ॥४९१॥
तदैव मन्मथोऽप्येनां जगद्विजयकारिणाम् ।
पत्रिणां गोचरं चक्रे लब्धच्छल इवासुहृत् ॥४९२॥
प्रभावत्यथ तद्गीतगीतं पार्श्वविभुं हृदि ।
ध्यायन्ती तत्र संतस्थौ स्तम्भबद्धेव हस्तिनी ॥४९३॥
इतस्तत्किनरद्वन्द्वं रन्त्वा तत्र वने चिरम् ।
उत्पपात नभो गत्वा युग्मं विहगयोरिव ॥४९४॥
उत्पतत्किनरद्वन्द्वं निर्वर्ण्य वरवर्णिनी ।
तद्गतिस्पर्धयेव स्वं स्वान्तं प्रैषीद् नभोऽध्वनि ॥४९५॥
कन्याया नयनद्वन्द्वं द्वन्द्वं किन्नरयोश्च तत् ।
चलति स्म नभस्युर्ध्वे स्पर्द्धयेव द्रुतं द्रुतम् ॥४९६॥
तन्मनोदृक् समादाय गतं तत्किनरद्वयम् ।
अतो जग्धविषेवैषा योषा शून्यमना अभूत् ॥४९७॥
सखीकृतोपचारेण लब्धसंज्ञा प्रभावती ।
पार्श्व पार्श्वेति जल्पन्ती क्षणं तत्रैव तस्थुषी ॥४९८॥
ज्ञात्वैभिश्चेष्टितै· स्पष्टैः पार्श्वे सम्बद्धचेतसम् ।
कन्यां तामूचिवांश्चित्तचतुरस्तत्सखीजनः ॥४९९॥
सुभगे ! सुभगे तस्मिन्नश्वसेननृपात्मजे ।
उचिताऽजनि ते प्रीतिः पद्मिन्या इव भास्करे ॥५००॥
आश्वस्यैवं च विविधैर्वचोभिः प्रेमगर्भितैः ।
इतश्चलेति सख्यस्ताः प्रोचुरेवं प्रभावतीम् ॥५०१॥
वाष्पैः सृजन्त्यध्वभूमिं मुक्ताङ्कुराङ्कितामिव ।
उत्तारयन्त्यलङ्कारादिकं भारमिव द्रुतम् ॥५०२॥
पश्यन्ती वलितग्रीवं समाहूतेव पृष्ठतः ।
खिन्नेव भूरिभिर्भारैस्तिष्ठन्ती च पदे पदे ॥५०३॥
भूयो भूयः पतन्तीवोन्मत्तेव मदपानतः ।
सिंहत्रस्तकुरङ्गीव ददती दिक्षु दृक्पुटम् ॥५०४॥
सखीभिः स्वाभिर्हस्तेनानीता सायं कृशोदरी ।
मन्दं मन्दमलंचक्रे मन्दिरं पृथिवीपते· ॥५०५॥(चतुर्भिर्विशेषकम्)
कन्याभावं च तद्गीतिवृत्तान्तं सर्वमादितः ।
सख्यस्ताः कथयामासुराशु तस्मै महीभुजे ॥५०६॥
भूपोऽपि तत्सखीवाचं तामाकर्ण्यैवमूचिवान् ।

स्वयं पुरःस्थितो वव्रे वरो लक्ष्म्येव केशवः ॥५०७॥
राज्ञो वाचं तां वयस्याः प्रभावत्यै न्यवेदयन् ।
अवदत् साऽपि दुर्जेयस्मरराजवशंवदा ॥५०८॥
त्रिलोकीकमलाकेलिधाम क स कुमारराट् ।
काऽहं तु दुर्भगाऽशेषयोषामुख्या दुराकृतिः ॥५०९॥
अतस्तद्विषया वाञ्छा वृथैव मम दुर्धियः ।
पीयूषस्य पिपासा हि किमभाग्यस्य पूर्यते ? ॥५१०॥
अलम्वि कल्पनाजालैरजाकण्ठकुचोपमैः ।
भवेदस्मिन्नाश्वसेनिः स शरणं मरणं तथा ॥५११॥
सा कन्याऽनङ्गसंसर्गाद् नानावस्थामुपेयुषी ।
रतिं कुत्रापि न प्राप मत्सीव स्वल्पपाथसि ॥५१२॥
क्षणं बहिः क्षणं मध्ये क्षणं चोर्ध्वं क्षणं त्वधः ।
कुविन्ददयितेवैषा नैकां स्थितिमुपागमत् ॥५१३॥
कुमारज्वरसंतप्ता वरप्राप्तिसमुत्सुका ।
कलयामासानुकूलमभिलापं प्रभावती ॥५१४॥
कथं स भुवनस्वामी मया प्राप्यो ह्यभाग्यया ? ।
कोऽपि नास्तीह तत्सङ्गाऽभङ्गव्यापारकर्मठः ॥५१५॥
तत्सङ्गसिद्धये कुर्यां किमुपायं वराक्यहम् ।
इति चिन्तातुरी चेत्थं न स्वास्थ्यं प्राप सा कनी ॥५१६॥
चन्द्रचन्दनकर्पूराम्भोजादौ द्वेपधारिणी ।
कनी साऽजनि निश्वासोच्छ्वासान् भस्त्रेव बिभ्रती ॥५१७॥
तल्लीनमानसा नित्यं ध्यानारूढेव योगिनी ।
अस्मार्षीत् पार्श्वकुमारं साऽवज्ञातसुखस्मृति. ।.५१८॥
चातुर्यस्थैर्यगाम्भीर्यौदार्यादिगुणधोरणौ ।
ज्योत्स्नेवेन्दावस्ति तस्मिन् पार्श्वे युवशिरोमणौ ॥५१९॥
स्थिता जागरिता सुप्ता गच्छन्ती प्रलपन्त्यपि ।
सैवं पार्श्वगुणग्रामोत्कीर्तनं कृतवत्यभूत् ॥५२०॥
जातपीडाऽखिला क्रीडा भूषणं श्रितदूषणम् ।
कथा तथ्याप्यतथ्याऽभूत् तस्याः स्मरज्वरार्दितः ॥५२१॥
यान्तु यान्त्विति जल्पन्ती प्राणानपि रिपूनिव ।
उद्वेगमत्यगाद् बाला मरुप्राप्तेव हस्तिनी ॥५२२॥
क्षणं वाराणसीपूर्यां क्षणं तत्किन्नरध्वनौ ।
नास्ति तन्मनासि स्थैर्यं करिणः कर्णयोरिव ॥५२३॥

किंकरीकृतत्रैलोक्यः कमठः कमलेक्षणः ।
परिणेष्यति मां किं स सा प्रलापमगादिति ॥५२४॥
गल्लविन्यस्तहस्ताभ्यां निश्वासोष्णैर्दृगम्बुभिः ।
अङ्किकामार्द्रयामास साऽङ्गनाऽनङ्गविह्वला ।५२५॥
अङ्गुल्यग्रेण लिखन्त्या क्षोणीं स्रस्तैः शिरोरुहैः ।
छन्नं तस्या मुखं राहुग्रस्तचन्द्र इव व्यभात् ॥५२६॥
तस्या वपुषि सञ्जातस्तापः शोषितचन्दनः ।
अन्तर्ज्वलितविरहानलादिव समुत्थितः ॥५२७॥
वपुः प्रतिपदुद्यातचन्द्रलेखासखं कनी ।
दधाना मेने शिरीषशय्यामग्निमयीमिव ॥५२८॥
कृतं भुक्तं स्थितं यातमजानाना च्युतस्मृतिः ।
स्तब्धदृक् शालभञ्जीव याऽस्थात् कम्बावलम्बिनी ॥५२९॥
कामं कृशाङ्गी निश्वासोच्छ्वासधूसरिताधरा ।
हुंकारैरुत्तरं चक्रे सखीभ्यः सा जडत्वभृत् ॥५३०॥
स्मरन्ती पार्श्वं पार्श्वेति सर्वत्राऽरतिभाक् कनी ।
अपतत् कृत्तशाखेव मूर्च्छिता सती भूतले ॥५३१॥
मूर्च्छयोच्छ्वासनिश्वासौ अकुर्वती कुमारिका ।
अभिषिक्ताऽम्भसा रम्भाव्यजनैश्च सखीजनैः ॥५३२॥
वर्योभिरुपचर्याभिश्छिन्नमूर्च्छा रुरोद सा ।
मंक्षु क्षामाक्षरं क्षामोदरी मन्मथकिंकरी ॥५३३॥
कामेनैवान्तिमावस्थां गतप्रायामुदीक्ष्य ताम् ।
तत्स्वरूपं जगौ राज्ञः पुरस्तात् तत्सखीजनः ॥५३४॥
नृपोऽप्याकर्ण्य तां वार्त्तां दध्यौ विधुरितो हृदि ।
संयोगः कथमनयोर्भाव्युमाहरयोरिव ? ॥५३५॥
कृतं कृताभिश्चिन्ताभिरेताभिर्मेऽहर्निशम् ।
स्वयंवरां वरायैनां प्रेषयिष्याम्यहं सुताम् ॥५३६॥
इत्यमुं निश्चयं राज्ञः समाकर्ण्य सखीजनः ।
तदुक्तिभिर्मुदं चक्रे प्रभावतेर्वचोऽतिगाम् ॥५३७॥
तद्वचोभिः सुधाधामधामधन्यैः प्रभावती ।
सिक्ता मेघजलौघैर्भूरिव क्षणमुदश्वसत् ॥५३८॥
इतश्चास्तीह कलिङ्गाधीशो यवनभूपतिः ।
लोकोक्त्या सोऽथ शुश्राव स्वरूपमिदमादितः ॥५३९॥
सभायां भ्रकुटीं बिभ्रद् बभाषे सोऽरुणेक्षणः ।

कियन्मात्रं स पार्श्वो यः परिणेता प्रभावतीम् ॥५४०॥
मयि सत्युग्रदोर्दण्डाखण्डविक्रमदुर्धरे ।
कथं दास्यति चान्यस्मै कन्यां सोऽपि प्रसेनजित् ॥५४१॥
कन्यामात्मकृते तस्मात् तावत् तां मार्गयाम्यहम् ।
पश्चात् तदनुसारेण करिष्येऽहमुपक्रमम् ॥५४२॥
अर्थिनामर्थिता वीरहीराणां दोर्बलं बलम् ।
नाहमर्थ्यस्मि किन्त्वास्मि सुभटः सुभटाग्रणीः ॥५४३॥
अतः का मार्गणा तस्य पुरस्तात् मार्गणोचिता ? ।
जित्वा प्रसेनजिद्भूपं स्वयं लास्याम्यहं कनीम् ॥५४४॥
चिन्तयित्वेति यवनाधिपतिर्मानिनां पतिः ।
उत्कटैः कटकैः साकमागात् पुरं कुशस्थलम् ॥५४५॥
ततो दुरात्मना तेन स्वकीयैः प्रबलैर्बलैः ।
वेष्टितं तत् पुरं भूमिरिव पाथोभिरम्बुधिना ॥५४६॥
द्वारादियन्त्रणापूर्वं दुर्गरोधोऽभवद् भृशम् ।
दुःसाध्ये तेन जज्ञाते गमनागमने पुरे ॥५४७॥
तेन प्रसेनजिद्राज्ञा प्रेषितो निरगात् पुरात् ।
अहं पुरुषोत्तमाख्यो मन्त्रिसागरदत्तभूः ॥५४८॥
आगामहमिहाख्यातुं वृत्तान्तं भवतः पुरः ।
अतः परं यथाशक्ति देवकार्यस्त्वयोद्यमः ॥५४९॥
एवं निशम्य तद्वार्तावातूलैरतुलैस्तदा ।
क्षमाक्षमारुहः क्षमाभुजोऽस्याऽभज्यत द्रुतम् ॥५५०॥
रुषा परुषवाग् रोषारुणाक्षः क्ष्मापतिर्जगौ ।
निग्रहानुग्रहौ गत्वा करिष्येऽहमसौ तयोः ॥५५१॥
इत्थमुक्त्वाऽरिहृच्छाणोत्तेजितासिः क्रुधोद्धुरः ।
प्रयाणभेरीभाङ्कारमकारयदिलापतिः ॥ ५५२ ॥
ज्ञातोदन्तः समायातः पार्श्वः पार्श्वे पितुर्द्रुतम् ।
प्रोचे चाकस्मिकः कोऽयं तातपाद ! रणोद्यमः ? ॥५५३॥
पाणिना दर्शयंस्तं च पुरुषं पुरुषोत्तमम् ।
सर्वां तत्कथितां वार्तां जगदे जगतीपतिः ॥५५४॥
तन्निशम्य पुनः पार्श्वोऽभिदधे धरणीधवम् ।
नृकीटे यवने तस्मिन् कोऽसौ तात ! तवोद्यमः ? ॥५५५॥
किं वा मृणालिनीनालोन्मूलने सुरसिन्धुरः ।
कुर्वन्नुपक्रमं श्लाघामुपयाति कदाचन ? ॥५५६॥

निवर्त्तयत्वतस्तातपादा अस्माद्रणोद्यमात् ।
विधास्ये निग्रहं तस्य तातपादप्रसादतः ॥५५७॥
अश्वसेनो निशम्यैतद्वचनं नन्दनोदितम् ।
मेने कुशस्थले गतुं पार्श्वे पार्श्वबलं विदन् ॥५५८॥
भ्राम्यद्भ्रमरझङ्कारहारिगण्डस्थलं गजम् ।
आरुरोह जगन्नाथो विन्ध्याद्रिमिव केसरी ॥५५९॥
प्रबलै पृथिवीपालैर्युक्तः स्वांशैरिवोद्धटैः ।
देवैरिव शुभाशंसिशकुनैरनुकूलितः ॥ ५६० ॥
ध्रीयमाणोपरिच्छत्रः परिवारितचामर ।
पुरुषोत्तमसंयुक्त. प्रतस्थे पुरुषोत्तमः ॥५६१॥ ( युग्मम् )
सेनोद्भूतो रजोराशिर्दधावोर्ध्वं नभःस्थलम् ।
पार्श्वप्रतापे सत्यर्को वृथेत्येवाद्धिधित्सया ॥५६२॥
कटकोत्कटभारेण भग्ना सती वसुंधरा ।
चकार रथचीत्कारदम्भादारारटिकां भृशम् ॥५६३॥
नानातूर्यौघनिर्घोषो व्यानशे गगनं क्षणात् ।
आचिख्यासुरिवेन्द्रेभ्यः प्रयाणं प्रथमं प्रभो. ॥५६४॥
पतत्पत्तिपदप्रौढप्रहारविधुरा धरा ।
सिच्यते च मदाम्भोभिः सानुकम्पैरिव द्विपैः ॥५६५॥
एवं चलच्चमूचक्रभारभुग्नितभोगिराट् ।
विदधे गीतमाङ्गल्यप्रयाणं प्रथमं प्रभोः ॥५६६॥
प्रयाणे प्रथमे नाथं प्रस्थितं पथि सत्वरम् ।
सरथ' सारथिर्वज्रपाणेर्मातलिरभ्यगात् ॥५६७॥
स प्रणम्य जगादैवं देवाहं हरिसारथिः ।
जानन् भवद्बलं शक्र. प्रैषीद् मामिह भक्तितः ॥५६८॥
भक्तिर्भक्तिभृतां भर्त्राऽभ्युपगम्येति तं रथम् ।
अध्यारोहद् विभुः पूर्वशैलशृङ्गमिवांशुमान् ॥५६९॥
स्तूयमानो जयारावैः सुरखेचरभूचरै. ।
दिनैः कतिपयैः पार्श्वप्रभुः प्राप कुशस्थलम् ॥५७०॥
अथागत्य तदुद्याने स्कन्धावारं न्यवीविशत् ।
स्वयं चेशोऽवसत् प्रौढप्रासादे सुरसूत्रिते ॥५७१॥
नाथः सनाथः सप्रीत्या कृपया चेत्यथ द्रुतम् ।
प्राहिणोत् कोविदं दूतं कलिङ्गाधीशसंनिधौ ॥५७२॥
सोऽपि गत्वा सदस्यस्य न्यगदद् वाग्मिनां वरः ।

मत्स्वामी मन्मुखेनेदं त्वामाज्ञापयतीत्यसौ ॥५७३॥
एनं प्रसेनजिद्भूपं मुञ्च दुर्गनिरोधतः ।
अयं हि पूज्यमत्तातचरणौ शरणं श्रितः ॥५७४॥
इयता हि गतं नास्ति किञ्चनापि तवाधुना ।
विमुच्य विग्रहं याहि निजं नगरमञ्जसा ॥५७५॥
कर्णाभ्यर्ण्णं प्रसर्पद्भिर्दूतोक्तैरिति वाग्भरैः ।
ववृधेऽस्याधिकं क्रोधो वनवह्निरिवेन्धनैः ॥५७६॥
दष्टोष्ठसंपुटो भङ्गीकृतघ्राणोऽरुणेक्षणः ।
सोऽब्रवीद् वचनं क्रोधात् क्रोधोद्गारमिवापरम् ॥५७७॥
यमाहूतोऽसि रे दूत ! यदेवं प्रलपस्यदः ।
न मां जानासि शत्रुस्त्रीवैधव्यविधये गुरुम् ॥५७८॥
कः पार्श्वकुमारक्षीरकण्ठः शठशिरोमणे ! ।
को वाश्वसेनो यः कामं प्रकोपयति मामिति ? ॥५७९॥
अथवा नानयोर्दोषो वाल्यवार्द्धकधारिणोः ।
विजृम्भते मतिः पुंसां न वाल्ये न च वार्द्धके ॥५८०॥
रे रे दूत ! दुराकूत ! वैरभागसि भर्त्तरि ।
यदेवं तद्‌गुणान् ब्रूये मत्कोपज्वलनेन्धनम् ॥५८१॥
नूनं कश्चित् त्वयाऽकारि निजभर्त्तुरुपद्रवः ।
तद्रुषा प्रेषितोऽस्यत्र यमस्येव निकेतने ॥५८२॥
त्वमवध्योऽसि दूतत्वादतो गच्छ गतत्रप ! ।
इत्युक्त्वा विरते तस्मिन् स दूतः पुनरूचिवान् ॥५८३॥
अरे यवन ! किं तेऽस्ति यियासा यमवेश्मनि ? ।
भूतार्त्त इव पिङ्गाक्षो यदेवं वक्ष्यऽसाम्प्रतम् ॥५८४॥
कस्त्वं श्रीपार्श्वकुमारपुरः पुरुषकीटकः ।
वेतनात्तमिवाशेषं त्रैलोक्यं यस्य किङ्करः ॥५८५॥
कृपया मन्मुखेनेदं सोऽवदद् भवतो हितम् ।
पयःपानमिवाहेस्तद्विपरीतं तवाऽभवत् ॥५८६॥
रे वराक ! दुराधमावाञ्छासीज्जीवितं निजम् ।
शरणौ पार्श्वनाथस्य चरणौ शरणीकुरु ॥५८७॥
एवं ब्रुवाणं संदेशहारकं तं निरङ्कुशम् ।
उदायुधा भटास्तस्य मारणायोपतस्थिरे ॥५८८॥
यावत् तं मुष्टियष्ट्याद्यैः प्रहरन्त्येतद्भटाधमाः ।
तावद् देव इवावादीद् धीसखः कोऽपि धीनिधिः ॥५८९॥

अरे आकस्मिकः कोऽसौ प्रारब्धः सम्पदां क्षयः ? ।
भुवनस्वामिनो दूतं यदेतं हन्तुमुत्सुकाः ॥५९०॥
भो भो भटा भवन्तश्च वैरिण स्वविभोः खलु ।
एवं त्रिजगतां भर्तुर्दूतोपरि रुषातुराः ॥५९१॥
गतक्रोधेषु योधेषु दूतं मन्त्रिवरोऽवदत् ।
न कोपो भवता कार्यो मनागपि मनोन्तरे ॥५९२॥
मत्ता इव भटा एते नैव जानाति किञ्चन ।
त्वं तु मेधाविनां मुख्यः कृपालोरसि सेवकः ॥५९३॥
दूतं मन्त्री पुनः प्राह शृणु भोः पुरुषोत्तम ! ।
आयास्यामो वयं पार्श्वं नन्तुं सद्यस्तवानुगाः ॥५९४॥
इत्युक्त्वा विससर्जैनं दूतं सत्कृत्य मन्त्रिराट् ।
आगत्य यवनाधीशसन्निधौ चैवमूचिवान् ॥५९५॥
स्वामिन्नसौ न सामान्यः पार्श्वः पार्श्वोऽरिसंपदाम् ।
यस्योपास्तिं प्रकुर्वन्ति निर्जराः किङ्करा इव ॥५९६॥
अस्मै प्रहितवान् शक्रः सरथं सारथिर्निजम् ।
अतो नाथामुना सार्धं विरोधो नायतौ शुभः ॥५९७॥
वचनै सचिवस्यैतत्कोपः शान्तिमुपेयिवान् ।
धाराधरस्य धारौघैर्दावानल इवोल्वणः ॥५९८॥
धीसखो यवनाधीशं शान्तरोपं पुनर्जगौ ।
चेद्राज्येच्छा सुखेच्छा चेत् तत्पार्श्वपार्श्वमश्रय ॥५९९॥
एवमाकर्ण्य सचिववचः प्रोचे कलिङ्गराट् ।
प्रतिबोध्य त्वयाद्याहं नियुक्ताऽन्ध इवाध्वनि ॥६००॥
इति ध्यात्वा कलिङ्गेशो निजैः परिजनैः सह ।
कुठारं कण्ठे निक्षिप्य पार्श्वं नन्तुमुपागमत् ॥६०१॥
द्वा स्थप्रवेशितः सोऽथ प्रविवेश सभां विभोः ।
पश्यंस्तेजस्विनां मुख्यं तेज.पुञ्जमिव प्रभुम् ॥६०२॥
प्रभुरपि प्रसन्नास्य पीयूषसदृशा दृशा ।
आयान्तं यवनाधीशमपश्यत् तादृगाकृतिम् ॥६०३॥
कुठारं हस्ततः कण्ठादथास्य यवनेशितुः ।
प्रभुरुन्मोचयामास मन्युर्नत्यऽवधिः सताम् ॥६०४॥
प्रणम्य प्राञ्जलिः प्राह प्रभुं स यवनप्रभुः ।
मदीयमपराधं यं क्षमस्व त्रिजगत्पते ! ॥६०५॥
दूतेन भवता स्वामिन्नपराधपरोऽप्यहम् ।

कृपया बोधितो यस्मात् सन्तः सर्वत्र वत्सलाः ॥६०६॥
शृगाला इव सिंहस्य के वयं पुरतस्तव ? ।
विश्वं विश्वमिदं वश्यमवश्यं विद्यते तव ॥६०७॥
किंकरत्वेन मां नाथ ! गृहाणानुगृहाण च ।
भुजिष्य इव करिष्ये शिक्षां तेऽहमतः परम् ॥६०८॥
पार्श्वनाथोऽथ जगदे जगदेकहितावहः ।
कलिङ्गेश ! त्वयाऽकार्यं न कार्यं पुनरीदृशम् ॥६०९॥
दुर्गरोधेऽथ संमुक्ते श्रुतोदन्तः प्रसेनजित् ।
प्रभावत्यान्वितः पार्श्वमभ्यगात् तुष्टिपुष्टिभाग् ॥६१०॥
प्रणम्य प्रोचिवान् पार्श्वं कुशस्थलपुरेश्वरः ।
नाथ ! नाथेन भवता सनाथत्वमगामहम् ॥६११॥
नाथैतन्नगरं रोधाद् मुमुचेऽद्य त्वदागमात् ।
तमोभिर्मुद्रितं पद्ममिवाभ्युद्यतो रवेः ॥६१२॥
अबन्धुरप्यभूद् बन्धुः कालिङ्गाधीश्वरोऽप्यसौ ।
भवदागमने जज्ञे याऽसाधारणकारणम् ॥६१३॥
अथ नाथ ! प्रसिद्य द्रागुद्वहेमां ममात्मजाम् ।
क्लिश्यति पद्मिनीवैषा त्वां जगच्चक्षुषं विना ॥६१४॥
दध्यौ प्रभावती वीक्ष्य निर्दोषं विभुमीदृशम् ।
स्वं दोषं रत्नदोषीत्यत्याक्षीद् वेधाः सृजन्नमुम् ॥६१५॥
ईदृक्पुंरत्ननिर्माणप्रावीण्यं बिभ्रतो विधेः ।
सृष्टिकरणप्रयासोऽसौ साफल्यं समुपेयिवान् ॥६१६॥
यादृक् तैः किन्नरैर्गीतस्ततोऽप्येषोऽतिसुन्दरः ।
यस्मादेतादृशां पुंसां रूपं वाचामगोचरम् ॥६१७॥
यदि मामेष भुवनभर्ताङ्गीकरिष्यति ।
तदा पल्लवितं नूनं प्राक्कृतैः सुकृतैर्मम ॥६१८॥
तातवाचमसौ स्वामी मंस्यते वा न मंस्यते ।
दध्यौ तन्मुखविन्यस्तलोचनेत्यञ्जलोचना ॥६१९॥
अथ च स्माह वामेयोऽप्यमेयमहिमा नृपम् ।
कन्योद्वाहेऽत्र प्रमाणं तातपादाश्च न ह्यहम् ॥६२०॥
इति श्रुत्वा कनी वज्राहतेवाजनि दुःखिता ।
अपतद् मूर्च्छिता भूमौ लब्धसंज्ञा जगाद च ॥६२१॥
ईदृक्षं नास्ति मे भाग्यं यदसौ भुवनेश्वरः ।
दृग्स्थामपीक्षेत मां तत् का कथा पाणिपीडने ? ॥६२२॥

अथ श्रुत्वा विभोर्वाचं दध्यौ राजा प्रसेनजित् ।
करिष्यतु पितुर्वाक्यादेष कन्याकरग्रहम् ॥६२३॥
अतः सुतां समादाय गच्छाम्यहं सहामुना ।
इति ध्यात्वाऽभ्यधाद् विश्वराजं राजा प्रसेनजित् ॥६२४॥
त्वया सहाहमेष्यामि देव ! वाराणसीं पुरीम् ।
अश्वसेननृपं द्रष्टुमुत्के स्तश्चक्षुषी मम ॥६२५॥
ओमिति प्रतिपद्यैतद् नाथस्त्रिजगतामथ ।
संमान्य विससर्जैनं यवनं स्वपुरं प्रति ॥६२६॥
अथ प्रसेनजिद्राज्ञा सकन्येनान्वित. प्रभुः ।
उत्सुकस्तातसेवायै वलति स्म कुशस्थलात् ॥६२७॥
सुरासुरवधूवृन्दोद्गीयमानगुणावलि ।
चिरं नन्द चिरं नन्देत्यूचानै. खेचरैः स्तुतः ॥६२८॥
प्रणमत्पृथिवीपालमौलिमालार्चितक्रमः ।
क्रमेण कलयामास पुरीं वाराणसीं प्रभुः ॥६२९॥ ( युग्मम् )
क्वचित् कर्पूरकस्तूरीपाथ.शान्तरजोभरम् ।
क्वचिच्चन्दनकाश्मीरद्रव्यैर्विन्यस्तहस्तकम् ॥६३०॥
क्वचिद् धूपघटीधूपधूमालीधूसरीकृतम् ।
क्वचिदुत्तम्भितानेकध्वजधोरणिबन्धुरम् ॥६३१॥
क्वचित् प्रोत्तुङ्गितप्रौढतोरणावलिमालितम् ।
क्वचिच्चांदञ्चितप्रोच्चमञ्चकैश्चारुचत्वरम् ॥६३२॥
क्वचिद् नृत्यत्पणस्त्रीणां श्रेणीभिर्विस्मयावहम् ।
क्वचिद् नानाविधस्फूर्जत्तूर्यैरुद्दामसङ्गुलम् ॥६३३॥
क्वचिद् दुन्दुभिनिर्घोषप्राग्भारबधिरीकृतम् ।
क्वचिद् नानाविधस्फूर्जत्तूर्यवर्यरवाकुलम् ॥६३४॥
क्वचिदाशीर्भणद्वन्दिवृन्दकोलाहलाकुलम् ।
स्वं पुरं प्राविशत् स्वामी भूस्वामिविहितोत्सवः ॥६३५॥
( षड्भि. कुलकम् )
अश्वसेनः सुतं प्रीत्या सम्भाष्य वचनैः शुभै' ।
विससर्ज निजावासे गन्तुं, नत्वा प्रभुर्ययौ ॥६३६॥
गजवाजिमणिस्वर्णमुक्ताद्यं प्राभृतं सृजन् ।
अथ प्रसेनजित् काशिदेशाधीशं ननाम सः ॥६३७॥
उपदाटानपूर्वं च निवेद्य वराविष्टरे ।
वाग्भिः सौहार्दहृद्याभिरवादीदश्वसेनराट् ॥६३८॥

कुशस्थलेश ! कुशलं सराज्यस्य तवास्ति भोः ? ।
सोऽप्याहास्ति भवत्पादप्रसादात् कुशलं मम ॥६३९॥
किन्तु प्रभावती नाम कन्येयं दुहिता मम ।
आनीताऽस्ति भवत्पुत्रपार्श्वनाथकृते कृतिन् ! ॥६४०॥
सफलीक्रियतां स्वामिन्नसौ मम मनोरथः ।
इत्याकर्ण्य वचस्तस्य जगौ वाराणसीपतिः ॥६४१॥
कुशस्थलपुराधीश ! जागर्ति मम चेतसि ।
मनोरथोऽसौ श्रीपार्श्वपाणिग्रहणगोचरः ॥६४२॥
किन्त्वेष पार्श्वकुमारो भोगेभ्यो विपराङ्मुखः ।
आ जन्मतो विरक्तात्मा न जाने किं करिष्यति ? ॥६४३॥
परं त्वदुपरोधेन बलात्कारेण चात्मनः ।
विवाहं कारयिष्यामि पार्श्वस्यानिच्छितोऽपि हि ॥६४४॥
इति व्याहृत्य काशीशोऽन्वितस्तेन महीभुजा ।
आजगाम जगन्नाथसनाथं केलिमन्दिरम् ॥६४५॥
पार्श्वोऽपि तातमायान्तं वीक्ष्योत्तस्थौ मुदञ्चितः ।
वृद्धानां विनयं सन्तो न मुञ्चन्ति कदाचन ॥६४६॥
यथास्थानं निषण्णेऽस्मिन् पार्श्वे प्राहाश्वसेनराट् ।
एतां प्रसेनजित्पुत्रीमुद्वहोद्वहधूर्वह ! ॥६४७॥
इत्याकर्ण्याभणद् भर्ता वचोभिर्विनयोन्नतैः ।
वैषयिकसुखोद्विग्न. संमग्न. शर्मपाथसि ॥६४८॥
लोलः स्वभावविवशः परिग्रहपरः सदा ।
नृणां तत्सङ्गमग्नानां नरकाध्वनिदीपकः ॥६४९॥
आपातरम्यो रमणीजनानां खलु संस्तवः ।
आस्वाद इव किंपाकफलानां पाकमीयुषाम् ॥६५०॥ ( युग्मम् )
तावद्विवेको हृद्गेहे प्रदीप इव दीप्यते ।
न यावत् सुभ्रूभ्रूभङ्गाः पतन्ति पवना इव ॥६५१॥
कान्तारक्ता विरक्ताऽपि जायतेऽनर्थकारणम् ।
दशत्येव भुजङ्गी स्वगेहगा चागताऽपि हि ॥६५२॥
विषयासक्तचित्तानां नृणामुन्मार्गगामिनाम् ।
मुष्णाति शमशीलादि धनं कामलिम्लुचः ॥६५३॥
तावद् मित्रं धनं तावत् तावद् धर्मे मतिः खलु ।
यावत् कामतमस्तोमो न प्रसर्पति हृद्गृहम् ॥६५४॥
अतुलैर्भोगसलिलैः सिक्तः काममहीरुहः ।

श्वभ्रादभ्रव्यथादुःखफलप्राप्तिं प्रयच्छति ॥६५५॥
अतो दमदयाशीलशमसाम्यादिनिग्रहः ।
हे तात ! संसृतिभ्रान्तिहेतुः कोऽयं कदाग्रहः ? ॥६५६॥
वैराग्यसंगसन्दर्भमित्याकर्ण्य सुतोदितम् ।
पुनर्वाराणसीराजो व्याजहारात्मजं निजम् ॥६५७॥
पुत्र ! यद्भवताऽवाचि जानेऽहमपि तत् तथा ।
किन्तु त्वं मोहतः पाणिग्रहणाय मयेरितः ॥६५८॥
विषयेभ्यो विरक्तोऽपि पूरयास्मन्मनोरथान् ।
परिणीय कनीमेनां गार्हस्थ्यावश्यकं ह्यदः ॥६५९॥
जिना जनितवीवाहाः सर्वेऽप्यादीश्वरादयः ।
न मोक्षं लेभिरे किं तेऽग्रमर्हन्तो भवन्तोऽपि हि ? ॥६६०॥
इति मत्वा पितुर्वाक्यमात्मनो भोगकर्म च ।
मेने पाणिग्रहं स्वामी महान्तो ह्यकदाग्रहाः ॥६६१॥
तन्निशम्य स काशीन्द्रः स च राजा प्रसेनजित् ।
आरेभाते प्रमोदात् सद्यः पाणिग्रहणोत्सवम् ॥६६२॥
मण्डिता मण्डपाः प्रौढाः शरदभ्रभ्रमावहाः ।
आहूतो ज्ञातिसम्बन्धिसुहृत्परिजनो निजः ॥६६३॥
कृता मुक्तामणिश्रेणीः स्वस्तिकानां च पङ्क्तयः ।
रसालपर्णैः प्रत्यग्रैः कृताश्चन्दनमालिका. ॥६६४॥
अधोवृन्तै पुष्पपुञ्जैः परितः प्रकरो भृतः ।
सिक्ता भूरम्बुभिः पौष्पगन्धैर्घौसृणचान्दनैः ॥६६५॥
दिव्याङ्गरागा सुन्दर्यः सधवा धवलान्यगुः ।
पण्याङ्गनाश्च मण्डलीभूय हल्लीसकं व्यधु ॥६६६॥
एवमतो वरवधूपितरौ स्पर्धया मिथः ।
निजर्द्धेरनुसारेण प्रारेभाते महोत्सवम् ॥६६७॥
अथ त्रिजगतां नाथो महोत्सवपुरःसरम् ।
पुत्रीं प्रसेनजिद्राजः पर्यणैषीत् प्रभावतीम् ॥६६८॥
विद्युतेव नवाम्भोदः सीतयेव रघूद्वहः ।
पद्मयेव मुरारातिस्तया रेजे जगद्गुरुः ॥६६९॥
मौक्तिकस्वर्णमाणिक्यगजवाजिरथादिकम् ।
जामात्रे पार्श्वनाथाय ददौ प्रीतः प्रसेनजित् ॥६७०॥
आत्मीयामात्मजामेनां भूयो भूयोऽनुशिक्ष्य च ।
काशीन्द्रेण विसृष्टोऽगात् स्वपुरं स प्रसेनजित् ॥६७१॥

सिषेवे पार्श्वनाथोऽयं प्रभावत्या समं सुखम् ।
भोगकर्मक्षयार्थं हि जिना गार्हस्थ्यवासिनः ॥६७२॥
कदाचित् कोकिलालापमुखरीकृतकानने ।
सहाऽक्रीडत् तया स्वामी करिण्येव महाकरी ॥६७३॥
कदाचिद्रेमे सरसि सरसीरुहभासुरे ।
चक्राङ्ग इव चक्राङ्ग्या प्रभावत्या समं प्रभुः ॥६७४॥
श्रीपार्श्वं प्राप्य प्राणेशं प्रामोदत प्रभावती ।
ईप्सितार्थे हि संपन्ने प्रमोदः किङ्करायते ॥६७५॥
कदाचिद्रचयामास चारुभिश्चान्दनैर्द्रवैः ।
अङ्गिकां भर्तुरङ्गेऽसौ मान्मथीमिव चेतनाम् ॥६७६॥
कदाचित् सा सुमनोभिर्मस्तके जीवितेशितुः ।
मुकुटं मण्डयामास चूडामिव मनोभुवः ॥६७७॥
कदाचित् कण्ठनिकटे स्वयं संदर्भितां स्रजम् ।
भर्तुर्निवेशयामास निजबाहुलतामिव ॥६७८॥
कदाचित् साऽथ कस्तूरीद्रवैर्मूर्ध्नि जिनेशितुः ।
चित्रमुच्चित्रयामास भल्लीमिव रतीशितुः ॥६७९॥
कदाचिद् मूर्ध्नि सा भर्तुर्बन्धुरैः पुष्पदामभि ।
धम्मिल्लं बन्धयामास कन्दर्पमिव विभ्रमैः ॥६८०॥
एवं यद्यज्जगन्नेतुर्मनःप्रीतिनिबन्धनम् ।
स्वयं निष्पादयामास समस्तं किंकरीव सा ॥६८१॥
इति स्वप्रियया सार्धं भुञ्जन् भोगाननेकशः ।
गमयामास समयान् समयज्ञशिरोमणिः ॥६८२॥
स्वर्गच्युत्यभिरामजन्मजननस्नात्रोत्सवाडम्बरो-
द्वाहोत्साहमहाविलासविलसत्संदर्भसंदर्भितः ।
श्रीमत्पार्श्वजिनाधिराजचरिते चेतश्चमत्कारकृ-
च्चातुर्याचरिते समाप्तिमगमत् सर्गश्चतुर्थः शुभः ॥६८३॥

इति श्रीतपागच्छाधिराजभट्टारकसार्वभौमश्रीहीरविजयसूरिश्रीविज-
यसेनसूरिराज्ये समस्तसुविहितावतंसपण्डितकोटीकोटीर-
हीर पं० श्रीकमलविजयगणिशिष्यभुजिष्यग०
हेमविजयविरचिते श्रीपार्श्वनाथचरित्रे
चतुर्थः सर्गः सम्पूर्णः ॥४॥

अर्हम्

# पञ्चमः सर्गः।

अथान्यदा जगद्भर्त्ताऽधिरूढः सौधमूर्धनि ।
करैरिवेन्दुर्दृक्पातैर्वाराणसीमपावयत् ॥१॥
इतश्च सप्रियान् पौरान् पूजोपस्करप्राभृतान् ।
प्रभुर्निभालयामास गच्छतः पुरतः पुरः ॥२॥
वीक्ष्यैतान् विस्मयस्मेरलोचनस्त्रिजगद्गुरुः ।
अप्राक्षीत् सेवकं कञ्चित् पौराणां गतिकारणम् ॥३॥
सोऽप्यवगततद्वार्त्तो वार्त्तयन् स्वामिनं निजम् ।
नाथैकस्मिन् संनिवेशे द्विजोऽभूद् दुर्गतावधिः ॥४॥
अभवद् नन्दनस्तस्य निर्भाग्याणां शिरोमणि ।
जातमात्रेऽथ तस्मिंस्त्वत्पितरौ मृतिमापतुः ॥५॥
कृपया सोऽर्भको लोकैर्जीवितः कष्टतोऽलभत् ।
कठ इत्यभिधां प्राप तारुण्यं च क्रमेण सः ॥६॥
भ्रमन् भिक्षाकृते ग्रामाद् ग्रामं चैव गृहाद् गृहम् ।
उदरं पूरयामास सोऽन्नैरत्यन्तनीरसैः ॥७॥
सोऽन्यदा नगरे क्वापि हारादिभिरलङ्कृताः ।
स्वैरं क्रीडन्ति भूप्राप्ता वासवा इव केचन ॥८॥
अर्थनाव्यग्रहस्ताग्रानर्थिसार्थान् घनैर्धनैः ।
प्रीणयन्ति पुनः कल्पपादपा इव केचन ॥९॥
केचिद्विहितशृङ्गारा भृङ्गारोद्भासिपाणयः ।
पूजयन्त्यर्हतां मूर्त्तीः सुरा इव सुरौकसि ॥१०॥
दिव्यरूपधराः केऽपि दिव्यनेपथ्यधारिणः ।
रमन्ते स्वेच्छया साक्षाद् मीनध्वजानुजा इव ॥११॥
गजवाजिरथारूढाः केऽपि भ्राम्यन्ति भूपिताः ।
व्योममार्गे विमानस्था इव विद्याधरेश्वराः ॥१२॥
कान्ताभुजलताश्लिष्टशरीराः स्मरसोदराः ।
तिष्ठन्ति सुखिनः केऽपि लताश्लिष्टा इवाङ्घ्रिपाः ॥१३॥
वीक्ष्यैतान् नागरान् स्वर्द्धिस्पर्द्धितत्रिदशेश्वरान् ।
कठः सद्यः समुत्पन्नसंवेगो ध्यातवानिति ॥१४॥

(सप्तभिः कुलकम्)

एभिः पूर्वभवे नूनमाचीर्णं दुस्तपं तपः ।
सहस्रंभरयो यस्मादीदृशा नागरा अमी ॥१५॥
प्राग्भवे न विमूढेन मया तेपेऽद्भुतं तपः ।

यस्मादहं स्वजठरपिठरापूरणाऽक्षमः ॥१६॥
भोगोपभोगसंयोगयोगाः खलु शरीरिणाम् ।
तपसः स्यु. पयोवाहादिव काननकाम्यता ॥१७॥
इत्थं ध्यात्वा कठ. शीघ्रं तापसव्रतमाददे ।
सोऽथ तेपे तपस्तीव्रं कन्दमूलफलाशनः ॥१८॥
चतुर्दिक्षु चित्रभानुश्चित्रभानुस्तथोपरि ।
एवं प्रकुर्वन् पञ्चाग्नितपः सोऽत्र समाययौ ॥१९॥
केचित् तमर्चितुं केचिद्वीक्षितुं कौतुकात् कठम् ।
अतः सप्राभृताः पौरा यान्त्यमी नगराद् वहिः ॥२०॥
एवमाकर्ण्य तद्वाक्यं कौतकोत्कण्ठितः प्रभुः ।
रथारूढो ययौ तत्र निजै. परिजनैः समम् ॥२१॥
ज्ञानत्रयधरो ज्ञानवतां मुख्योऽश्वसेनसूः ।
काष्ठान्तस्तत्र ज्वलने ज्वलन्तमहिमैक्षत ॥२२॥
लोकैरभ्यर्चितं भावमुग्धैः पुष्पाक्षतादिभिः ।
कथं प्रोवाच दृष्ट्वैतत् सर्वं दुर्ललितं प्रभुः ॥२३॥
अहो ? अज्ञानमज्ञानमहो ? ते कष्टमुत्कटम् ।
किं वृथा कुरुषे पापं भवभ्रमणकारणम् ? ॥२४॥
कठ ! दुष्ट ! कठोरात्मन् ! मिथ्याज्ञानविमोहितः ।
मा विधेहि मुधा कष्टं वीजोप्तिमिव पावके ॥२५॥
क्षीरस्येव नवनीतं प्रस्तरस्येव काञ्चनम् ।
धर्मस्य सारं कारुण्यं न जानासि शठः कठ ! ॥२६॥
विना जीवदयां सर्वं कष्टं कठ ! वृथा तथा ।
विना कृतस्य जीवेन शरीरस्येव मण्डनम् ॥२७॥
इत्याकर्ण्य विभोर्वाचं कठो दुष्कर्मकर्मठः ।
अभूत् पूर्वभवाभ्यस्तकोपाटोपपरः क्षणात् ॥२८॥
अहो ? मुखरता राजसूनोर्धार्ष्ट्यमहो ? पुनः ।
उन्मत्त इव यद् ब्रूते वचो मत्पुरतोऽपि यः ॥२९॥
कोऽसौ दिदृक्षुर्नरकं नरो मत्तपसां विधौ ।
आगाद् विघ्नकरो मातृसुखमुख्यः पुरो मम ? ॥३०॥
इति ध्यात्वा वचः प्रोचे संदष्टोष्ठः स दुष्टधीः ।
पञ्चाग्निप्रवेशे तीव्रतापोद्गारमिवाद्भुतम् ॥३१॥
गजवाजिरथादीनां वाहनं सुखसाधनम् ।
भामिनीभोगसम्भोगा जानन्ते राजनन्दनाः ॥३२॥

कलहंसा इव क्षीरनीरद्वयविवेचनम् ।
जानीमो वयमेवात्र योगान् योगीश्वराः खलु ॥३३॥
मया कश्चात्र जीवानां वधः खलु विधीयते ? ।
कलङ्कयसि लोकेषु यन्मामेवं नृपात्मज ! ॥३४॥
इति श्रुत्वा वचांस्यस्य तत्प्रत्ययकृते प्रभुः ।
आदिशत् सेवकांस्तस्य काष्ठस्याकर्षणे वह्निः ॥३५॥
सद्यो दारुणे तस्मिंस्तै. कुठारेण द्विधाकृते ।
निर्जगाम भुजङ्गोऽग्नितापप्राग्भारपीडितः ॥३६॥
अथाऽस्मिन् पन्नगे तापविह्वले क्षणिकायुषि ।
अजागरीज्जगद्भर्तुर्हृदये करुणा तदा ॥३७॥
सेवकेभ्यो नमस्कारान् तस्मै प्रादापयत् प्रभुः ॥
सहगेवानणौ वाऽणौ सतामुपकृतिर्यतः ॥३८॥
प्रभावतीपतेर्दृष्टिं दृष्ट्वा पीयूषवर्षिणीम् ।
व्यस्मार्षीद् वह्निजं दु.खं सुधासिक्त इवोरगः ॥३९॥
पावकोत्तप्तवपुषं पन्नगं पन्नगध्वजः ।
पीयूषैरिव दृक्पातै' प्रीणाति स्म पुनः पुनः ॥४०॥
वह्निव्यथामजानानः सावधानमनाः फणी ।
अश्रौषीत् तं नमस्कारं गीतनादमिवाद्भुतम् ॥४१॥
नमस्कारप्रभावेण दर्शनाच्च जिनेशितु. ।
समाधिना विपद्यामूत् स नागो नागपुङ्गवः ॥४२॥
एतद्व्यतिकरं वीक्ष्य लोका. सर्वेऽपि विस्मिताः ।
अहो ? ज्ञानमहो ? ज्ञानं स्वामिनोऽस्यैवमूचिरे ॥४३॥
सर्वैस्तत्रागतैर्लोकैः स्तुतः स्वामी मुहुर्मुहुः ।
निजालयमलंचक्रे कलहंस इवाम्बुजम् ॥४४॥
अहो ? पापमहो ! कष्टं कठस्य कठिनात्मनः ।
जुहोति यदसौ जीवान् वह्नावेवं निरङ्कुशः ॥४५॥
कठ. स कुण्ठधीर्लोकैर्निन्द्यमानः पदे पदे ।
वभ्राम ग्रामनगराकरादौ दुष्टकष्टभाग् ॥४६॥
तत प्रभृति वामेयोपरि मत्सरमावहन् ।
विशेषतो विधत्ते स्म कठः कष्टं शठाग्रणीः ॥४७॥
कठो बालतपाः सोऽथ मृत्वा बाल्येन मृत्युना ।
अजायत सुरो मेघमाली भवनवासिषु ॥४८॥
अथो नाथस्त्रिजगतां भुञ्जन् वैषयिकं सुखम् ।
अनैषीद् वासरान् भूरीन् मातापित्रोर्मुदं सृजन् ॥४९॥

इतश्च कुसुमबाणबाणानुत्तेजयन् भृशम् ।
पुष्पकालः समभ्यागादारामश्रीविभूषणम् ॥५०॥
अकूजन् कोकिलास्तारं स्वरं गान्त्य इवोच्चकैः ।
धवलानि वनलक्ष्मी-वसन्तोद्वाहमङ्गले ॥५१॥
स्थिताः पुष्पेषु पुष्पेषु पुष्पेषून्मादकारिणः ।
झङ्कारान् प्रथयामासुर्मन्दं मन्दं मधुव्रताः ॥५२॥
लसत्परिमलस्तोममूर्च्छिताशेषदिग्मुखा ।
धत्ते चम्पकपुष्पाली स्मरराजप्रदीपताम् ॥५३॥
विश्वं विश्वमिदं तस्मिन् पुष्पकाले प्रसर्पति ।
ज्ञापयन् मधुसाम्राज्यमिव रेजेऽभितस्तदा ॥५४॥
तस्मिन्नवसरे सौवपरीवारोपरोधतः ।
अगादुद्याननिध्यानकृते कृतिपतिः प्रभुः ॥५५॥
स्वामी पश्यंस्तरूंस्तत्र वेल्लत्प्रत्यग्रपल्लवान् ।
चिरमक्रीडदाक्रीडे बिडौजा इव नन्दने ॥५६
विचरंस्तत्र वृक्षाग्रपतत्पुष्पालिमालितम् ।
मध्यस्थं च महारम्यं प्रासादं प्राविशत् प्रभुः ॥५७॥
चित्रकृच्चित्रितं नेमिचरित्रं तस्य भित्तिषु ।
तल्लीनलोचनद्वन्द्वः प्रैक्षिष्ट भगवानिति ॥५८॥
यदुवंशशिरोरत्नं शैवेयः कज्जलच्छविः ।
तत्याज तृणवद्राज्यं कन्यां राजीमतीं तथा ॥५९॥
भोगार्थमर्थ्यमानोऽपि यदुभिः केशवादिभि ।
तपस्यामाददे मुक्तिमानिनीसङ्गदूतिकाम् ॥६०॥
इत्यैक्षिष्ट प्रभुर्नेमिचरित्रं चित्रकृच्चिरम् ।
चित्ते व्यचिन्तयच्चैवं स्मरकुञ्जरकेसरी ॥६१॥
कोऽप्यहो ! अद्भुतः प्रज्ञाप्राग्भारस्तस्य नेमिन. ।
वयसि प्रथमे दीक्षां यः संवेगादुपाददे ॥६२॥
इति ध्यायंश्च पश्यंश्च चरित्रं तद् मुहुर्मुहुः ।
अभूद् विभुर्मुक्तभोग्यभोगकर्मा व्रताशयः ॥६३॥
तदैवैत्य ब्रह्मलोकाद् लोकान्तिकाः सुरोत्तमाः ।
सारस्वतादयः सद्यः प्रोचुः प्राञ्जलयः प्रभुम् ॥६४॥
चिरं नन्द चिरं नन्द चिरञ्जय चिरं जय ।
भूयाद् भद्रं विभो ! तुभ्यं तुभ्यं भूयाद् नमः प्रभो ! ॥६५॥
त्वमेवासि विभो ! मोहमल्लमर्दनकर्मठ ।

भानुरिवान्धतमसघोरणीध्वंसधूर्वहः ॥६६॥
प्रतिबुध्यस्व भगवंल्लोकालोकप्रकाशकम् ।
तीर्थं प्रवर्त्तय प्रौढप्रभावं प्राणिपालकम् ॥६७॥
ज्ञानत्रयधरः स्वामिन् ! सर्वं वेत्सि स्वयं सदा ।
तथापि हि वयं स्थित्यधिकारात् तेऽभिदध्महे ॥६८॥
एवमुक्त्वा च नत्वा च स्वस्थानं ते ययुः सुराः ।
भगवानप्यगात् सायं वेश्म संवेगरङ्गितः ॥६९॥
अथ तस्यां त्रियामायां भावयन्निति भावनाम् ।
समयान् गमयामास पल्यङ्कस्थोऽश्वसेनभूः ॥७०॥
कषायैः क्रोधप्रमुखैः कलुषीकृतचेतसः ।
पतन्ति भवकूपेऽस्मिन्नुत्पथ्या इव देहिनः ॥७१॥
जात्यादिकमदोन्मादैर्भ्रमद्भिर्भवचत्वरे ।
जीवैर्नटैरिव स्पष्टं नानारूपैर्विचेष्टयते ॥७२॥
सेव्यमानोऽपि विषयग्रामः संसारिणामिह ।
जायतेऽत्यन्तं तृष्णायै पीतं क्षारमिवोदकम् ॥७३॥
कामोऽपि वामधीधाम धर्माख्यं धनमङ्गिनाम् ।
राजेवान्यायसंनिष्ठ आददाति पदे पदे ॥७४॥
क्षान्त्यादिभि. कषायाणां जयः स्यादिह देहिनाम् ।
उपशान्तिर्घनैरेव महारण्यहविर्भुजाम् ॥७५॥
योज्या मदेषु सर्वेषु कृतिभिर्निरहंकृतिः ।
मदानां हि जये सैवालंकर्मिणी शरीरिणाम् ॥७६॥
एवं भावयतस्तस्य भावनां जगदीशितुः ।
भोगबुध्या समं राज्या व्युपरेमे क्षणादपि ॥७७॥
सदामोदोल्लसल्लीलालीनमानसवृत्तिषु ।
बन्दिवृन्देष्विवामन्दं प्रकूजत्सु षडङ्घ्रिषु ॥७८॥
भर्तुरिन्दोर्द्दारात्रिदत्तसम्भोगनिर्वृतेः ।
वियोगात् पतितेष्विव लक्ष्म्यास्ताराश्रुबिन्दुषु ॥७९॥
उद्यन्तं भुवनोद्योतकृते विश्वगुरुं तदा ।
विधन्दिपुरिवार्हन्तमुदीयाय दिवाकरः ॥८०॥
बोधितस्तूर्यनिर्घोषैर्भणद्भिर्बन्दिभिः पुनः ।
कन्दरोदरतः सिंह इवोदस्थात् स तल्पतः ॥८१॥
ततः पार्श्वप्रभुर्गाढं निर्बन्धैकनिबन्धनम् ।
प्रतिबोध्य परीवारं प्रारेभे स्नानमाब्दिकम् ॥८२॥

रूप्यरत्नसुवर्णादि यथेच्छं याच्यतामिति ।
त्रिकचत्वरशृङ्गाटे स्वाम्युद्‌घोषामकारयत् ॥८३॥
शक्रादिष्टधनाधीशप्रेरिता जृम्भकाः सुराः ।
निधानैः पूरयामासुर्यच्छतो गेहमीशितुः ॥८४॥
यथेह मधुमार्गणगणेभ्य. परमेश्वरः ।
व्यश्राणयन् मणिस्वर्णमुक्तार्यं सुरशाखिवत् ॥८५॥
शशाम दौःस्थ्यं लोकानां यथेच्छं यच्छतः प्रभोः ।
अरण्य इव दावाग्निः प्रवर्षतः पयोमुचः ॥८६॥
आभोजनक्षणं सूर्योदयात् त्रिजगतां पतिः ।
अष्टलक्षाधिकामेकां कोटिं हैमीमदात् स्वयम् ॥८७॥
त्रीणि कोटिशतान्यष्टाशीतिस्तथैव कोटयः ।
लक्षा अशीतिः स्वर्णानामब्दे दानमभूद् विभोः ॥८८॥
दानान्ते ज्ञाततीर्थेशतपस्याग्रहणक्षणाः ।
ईयुर्वाराणसीमिन्द्राः सदेवाः कम्पितासनाः ॥८९॥
स्वर्णादिवस्तुनिर्मितैः कुम्भैस्तीर्थाम्बुसम्भृतैः ।
मज्जयामासुरष्टाग्रसहस्रैर्वासवा विभुम् ॥९०॥
स्यूते इव करै रात्रिकरीयैर्दिव्यवाससी ।
मुदिता मघवानोऽथ स्वामिने पर्यधापयन् ॥९१॥
अङ्गोपाङ्गेष्वलंकारान् कोटीरादीन् यथोचितम् ।
चन्दनैरर्चितस्येन्द्रा रचयामासुरर्हतः ॥९२॥
अश्वसेनोऽपि भूभर्त्ता सौवर्ण्यैरनुसारतः ।
भूयांसं त्रिजगद्‌भर्त्तुश्चक्रे निष्क्रमणोत्सवम् ॥९३॥
विचकार विशालाक्षो विशालां शिबिकामथ ।
प्रतिबिम्बमिवात्मीयविमानस्यामरद्विपः ॥९४॥
उत्क्षिप्तां मनुजैरादौ तदनु त्रिदशेश्वरैः ।
तामारुरोह स स्वामी विशालां शिबिकामथ ॥९५॥
तदन्तस्त्रिजगद्भर्त्ता स्वर्णरत्नविनिर्मितम् ।
सिंहासनमलञ्चक्रे मैत्रीभावमिव व्रती ॥९६॥
रेजे प्रभूपरि छत्रं पार्वणेन्दुनिभं शुभम् ।
स्वाम्यसौ भुवनच्छत्रं सूचयन् जगतामिति ॥९७॥
ध्वस्तकाशे चकासाते चामरे पार्श्वपार्श्वयोः ।
पिण्डीभूयामितो धर्मशुक्लध्याने इवागते ॥९८॥
सुरासुरनराधीशगणैर्गच्छाद्भिरग्रतः ।

वन्दिवृन्दैरिव प्रोच्चैः कृते जयजयारवे ॥९९॥
सवारिवारिवाहालीगर्जितैरिव सर्वतः ।
वर्यतूर्यैश्च वाधिरीकृतभुवनकोटरैः ॥१००॥
वाराणसीपुरीमध्यं मध्येन त्रिजगद्गुरुः ।
चचाल शिबिकारूढः कुलस्त्रीगीतमङ्गलः ॥१०१॥
सिन्धुरस्कन्धमारूढश्चामरच्छत्रशोभितः ।
अश्वसेनोऽन्वगाद् नाथं ग्रामं यान्तमिवातिथिम् ॥१०२॥ (युग्मम्)
तदा च भगवन्तं तं गच्छन्तं पुरवर्त्मनि ।
महाश्चर्यमिवायातं द्रष्टुं पौरै. प्रचक्रमे ॥१०३॥
केचिदारुरुहुः सौधमूर्धानं तद्दिदृक्षया ।
शीतार्त्ता द्रष्टुमादित्यं वृक्षाग्रं वानरा इव ॥१०४॥
केचिच्च मण्डलीभूय भूयांसः पुरतः प्रभो· ।
चकोरा इव शशिनं पश्यन्ति स्म जिनाननम् ॥१०५॥
कौतुकोत्कण्ठिताः केऽपि स्वामिनः पार्श्वयोर्द्वयो· ।
जग्मुः स्यन्दनस्तुरगारूढा अनुचरा इव ॥१०६॥
केचिद् दधाविरे भर्त्तुः पृष्ठे चरणचारिणः ।
पश्यामो वयमग्रे भूत्वेनमितिबुद्धय ॥१०७॥
नगरान्नागरा सर्वेऽप्यनुस्वामिनमन्वगुः ।
द्वीपाद् द्वीपान्तरं यान्तं भास्वन्तमिव रश्मयः ॥१०८॥
तदैव विस्मयस्मेरलोचनाश्चललोचनाः ।
तादृशं जगतामीशं निध्यातुमुपतस्थिरे ॥१०९॥
काश्चिद् दधाविरेऽर्हन्तं द्रष्टुं कटिकृतार्भकाः ।
वानर्य इव मालिकलोकहक्कारभीरवः ॥११०॥
पश्यन्त्यः काश्चिदप्यर्हन्मुखं चपलचक्षुष ।
अन्वभूवन् समस्ताक्षगोचरानक्षिगोचरान् ॥१११॥
स्वामिनो दर्शनोत्कण्ठोत्कण्ठाः काश्चन मृगीदृश. ।
खेचर्य इव विमानेऽध्यारोहन् सौधमूर्धनि ॥११२॥
काश्चित् प्रलम्बितग्रीवा गवाक्षाग्रेण सुभ्रुवः ।
मौक्तिकैर्हारपातितैर्नाथं लाजैरिवार्चयन् ॥११३॥
काश्चिन्द्राक्षुरसौरभ्यपुष्पाणां प्रसृतीः प्रभुम् ।
प्रत्यमुञ्चन् कटाक्षाणामिव सन्धितधोरणी ॥११४॥
काश्चित् तद्दर्शनव्यग्रा हित्वा कृत्यानि वेश्मनः ।
चत्वरे चत्वरे तस्थुस्तत्रैव लिखिता इव ॥११५॥

अत्यौत्सुक्यचिह्नमिव दर्शनाथ जिनेशितुः ।
काश्चिदर्धाजिनं चक्षुर्दधाना निरगुर्गृहात् ॥११६॥
काश्चित् कस्तूरीकाम्भोभिरर्धतो मण्डितानना ।
निजग्मुः परितो राहुग्रस्तार्धेन्दुकला इव ॥११७॥
एवं पौरप्रियाः स्वामिनिर्वर्णनपरायणाः ।
विदधुर्विविधां चेष्टां सर्वेषां विस्मयावहाम् ॥११८॥
गीयमानो वन्दिवृन्दैस्तूयमान. सुरासुरैः ।
ईक्ष्यमाणोऽक्षिमालाभिर्दर्श्यमानोऽङ्गुलीव्रजैः ॥११९॥
चिरं जय चिरं जीवेत्याशीर्भिः परिणन्दितः ।
किंकरीकृतमनुजसुरासुरपरंपरः ॥१२०॥
अभ्यगादाश्रमपदोद्यानं तत्कृतनन्दनम् ।
क्रमात् त्रिजगतां नेता जिघृक्षुः संयमश्रियम् ॥१२१॥
(त्रिभिर्विशेषकम्)
तत्राशोकतरोर्मूले शिबिका सा सुरासुरैः ।
मुमुचे प्रभुरप्यस्या उत्ततार स्मयादिव ॥१२२॥
तानि मन्दारमाल्यानि रत्नाद्याभरणानि च ।
मुञ्चति स्म स्वयं स्वामी कषायविषयानिव ॥१२३॥
धवलद्युतिधवलद्युत्येव सूत्रितं प्रभोः ।
स्कन्धे न्यधाद् देवदूष्यं स्वयं देवविभुस्तदा ॥१२४॥
पौषमासस्यासितायामेकादश्यां शुभे क्षणे ।
पूर्वाह्णे विचिशाखायां स्थिते कुमुदिनीपतौ ॥१२५॥
कृते जयजयारावे कृताष्टमतपाः प्रभुः ।
पञ्चभिर्मुष्टिभिः केशालुञ्चखान मदानिव ॥१२६॥
देवेन्द्रोऽप्यथ तान् स्वामिकेशानादाय सत्वरम् ।
क्षीरोदधौ निचिक्षेप स्वकीयैः पातकैः समम् ॥१२७॥
पुनरागत्य सौधर्माधिपतिः पार्श्वसन्निधौ ।
ऊर्ध्वीकृतकरः कोलाहलं तं निरवारयत् ॥१२८॥
कृतसिद्धनमस्कारो नाथस्त्रिजगतामथ ।
सफलसावद्ययोगप्रत्याख्यानान्युदाहरन् ॥१२९॥
चारित्रमुररीचक्रे समक्षं नरनाकिनाम् ।
तदैवाजनि शर्मासिर्नारकाणामपि क्षणम् ॥१३०॥ (युग्मम्)
तदैव दीक्षयाऽकस्मात् संकेतितमिव द्रुतम् ।
तुर्यं ज्ञानं विभोर्जज्ञे मनःपर्यायसंज्ञकम् ॥१३१॥

तदा च नृपपुत्राणां स्वामिसौहार्दशालिनाम् ।
शतत्रयमुपादत्त दीक्षां संवेगवेगतः ॥१३२॥
उत्किरीटाः किरीटाग्रसंलग्नकरकुड्मलाः ।
नत्वाऽर्हन्तमिति स्वर्गस्वामिनः स्तुतिमुज्जगुः ॥१३३॥
नाथ ! त्वत्स्तुतिमर्थोऽमूं के वयं स्वल्पमेधसः ? ।
तथापि कुर्महे भक्तिसंभ्रमेरितचेतस. ॥१३४॥
नम संसारनिस्सारपथतमःप्रदीपक ! ।
त्रसानां स्थावराणाञ्च जन्तूनां जनकाय ते ॥१३५॥
श्वभ्राद्यदभ्रदुःखानां बीजमप्रत्ययास्पदम् ।
मृषावादं त्यक्तवते तुभ्यं भगवते नमः ॥१३६॥
अदत्तं दुःखप्रबलं शम्बलं नरकाध्वनः ।
अनादत्तवते तुभ्यं नमोऽस्तु त्रिजगत्पते ! ॥१३७॥
अतथ्यपथपथिकमन्मथोन्माथकारिणे ।
अखण्डितब्रह्मचर्यचर्याचर्याय ते नमः ॥१३८॥
धनधान्यादिं नवधा परिग्रहं भवग्रहम् ।
नित्यं मुक्तवते भूयाद्भूयो भगवते नमः ॥१३९॥
महाव्रतानां पञ्चानां भारनिर्वाहधूर्वह ! ।
लोकालोकप्रकाशैकभास्वते भवते नमः ॥१४०॥
संमतीः पञ्च पञ्चानां व्रतानां सुस्थितीरिव ।
गुणरत्ननिधानाय बिभ्रते भवते नमः ॥१४१॥
शुद्धध्यानैकमनसे वचःसंवरधारिणे ।
कायचेष्टां त्यक्तवते नमस्तुभ्यं जगद्गुरो ! ॥१४२॥
पञ्चस्वपि विषयेषु सुभगाऽसुभगेष्वपि ।
निर्विकल्पमनस्काय तुभ्यं भद्रात्मने नम. ॥१४३॥
ज्ञानदर्शनचारित्ररत्नत्रयश्रियं द्रुतम् ।
लोकोत्तरगुणाधारां तुभ्यं श्रितवते नमः ॥१४४॥
औदार्यस्थैर्यगाम्भीर्यचातुर्यादिगुणावलीम् ।
अलङ्कारमिवानर्घ्यं तुभ्यं धृतवते नम. ॥१४५॥
दिनाद्यर्पाणि यद्गेहवासेऽस्थास्तानि ते प्रभो ! ।
धर्म्यकर्ममयान्यासन्नस्काऽक्षेप्त्वेतसः ॥१४६॥
इत्थं स्तुत्वा जगन्नाथं सौधर्माद्या दिवौकस ।
कृतनन्दीश्वरद्वीपयात्रा जग्मुर्यथागतम् ॥१४७॥
दृशोः क्षरद्भिः कवोष्णैर्बाष्पैः प्लावितभूतलः ।

भगवद्विप्रयोगोत्थव्यथाव्यथितमानसः ॥१४८॥
अश्वसेनोऽपि तैः पौरैः सार्धं स्वपरिवारवान् ।
आजगाम निजं धाम नतपार्श्वपदद्वयः ॥१४९॥ (युग्मम्)
भगवानपि तत्रैव प्रलम्बितभुजद्वयः ।
ध्यायन् सिद्धान् विशुद्धात्मा कायोत्सर्गेण तस्थिवान् ॥१५०॥
ततः स्थानाद् द्वितीयेऽह्नि विजहार जगद्गुरुः ।
पावयन् काश्यपीपीठं पादपाथोजपांशुभिः ॥१५१॥
क्रमात् स कोपकटाख्ये संनिवेशे जिनेश्वरः ।
प्रविवेश पारणाय धन्यस्य गृहिणो गृहे ॥१५२॥
धन्यंमन्यः स धन्यात्मा धन्यः स्वामिनमङ्गणे ।
सुरद्रुममिवायान्तं वीक्ष्य रोमाञ्चितोऽजनि ॥१५३॥
युगमात्रान्तरन्यस्तलोचनो भगवानपि ।
आकृष्ट इव तद्भाग्यैर्भिक्षार्थमुपतस्थिवान् ॥१५४॥
वीक्ष्य नाथं च भिक्षार्थं प्राङ्गणे समुपस्थितम् ।
धन्यो विवेकधन्यः स प्रणम्यैवमभाषत ॥१५५॥
इदं त्रिकोटि शुद्धं च पायसं परमेश्वर ! ।
गृहाणानुगृहाणेमं मां भुजिष्यधुरि स्थितम् ॥१५६॥
स्वामी सोऽपि परमान्नमेषणीयं समीक्ष्य तत् ।
पाणी प्रसारयामास भवाम्भोधितरीनिभौ ॥१५७॥
सद्यः समुल्लसद्भक्तिभङ्गुरः पुलकाङ्कितः ।
मनोवाक्तनुजां शुद्धिं दधानश्चातिशुद्धधीः ॥१५८॥
शुद्धेन परमान्नेन तेन धन्यः सप्राञ्जलिः ।
स्वामिनः कारयामास पारणं भववारणम् ॥१५९॥
अहो ? दानमिति स्पष्टोद्घोषणा खे समुद्ययौ ।
दिवि दुन्दुभयो नेदुर्घुसद्भिस्ताडितास्तदा ॥१६०॥
अर्धाधिका द्वादशाशु काञ्चनानां च कोटयः ।
अर्हद्दानैकसन्तुष्टैः सुरैस्तत्र वितेनिरे ॥१६१॥
गन्धोदकानि भूरीणि भूरीणि कुसुमानि च ।
वासांसि देवदूष्याणि ववृषुस्तत्र नाकिनः ॥१६२॥
समक्षं सर्वलोकानामूर्ध्वलोकसदां गणैः ।
नत्वा स्तुत्वा च सच्चक्रे स धन्यो धन्यधीनिधिः ॥१६३॥
महिमानमिमं वीक्ष्य चमत्कारैककारणम् ।
धन्यं प्रशंसयामासुः पुराधीशादयो जनाः ॥१६४॥

धन्य ! धन्योऽसि लोकेऽस्मिल्लोकेषु सकलेष्वपि ।
भावतो विदधे येन कृत्यमत्यद्भुतं त्वया ॥१६५॥
ईदृक्पुंरत्नचरणरेणवोऽप्यतिदुर्लभाः ।
तवाङ्गणमलंचक्रे सोऽसौ हंस इवाम्बुजम् ॥१६६॥
धन्यः सोऽगण्यपुण्यानां निधिरेवं प्रशंसितः ।
मानितो भूभुजा जज्ञे संमतः पुरवासिनाम् ॥१६७॥
धन्योऽपि पारणास्थाने प्रभुपादपवित्रिते ।
रत्नैरबन्धयत् पीठं विन्यस्तप्रभुपादुकम् ॥१६८॥
विजह्रेऽथ जगन्नाथस्ततो विहितपारण ।
वायूनामिव साधूनां नैकत्रावस्थितिर्भवेत् ॥१६९॥
सहन् परीषहान् सर्वांस्तिर्यग्नरसुरैः कृतान् ।
कादम्बरीमरण्यानीमभ्यगादन्यदा प्रभुः १७०॥
कायोत्सर्गेण तत्राथ तस्थौ कलिगिरेरधः ।
कलिकुण्डसरस्तीरे तत्र रूढ इवेशिता ॥१७१॥
इतः प्रोत्फुल्लपाथोजरम्ये तत्र सरोवरे ।
महीधरः सिन्धुरेन्द्रः पयःपानार्थमाययौ ॥१७२॥
तत्र नासाग्रविन्यस्तनयनं नयनोत्सवम् ।
प्रभुं प्रेक्ष्य द्विप. प्राप जातिस्मरणमात्मनः ॥१७३॥
तथाहमभवं क्वापि पत्तने कुलपुत्रक ।
उपहास्यास्पदं पुंसां कुब्जाङ्गो हेमलाभिधः ॥१७४॥
कुटुम्बेन पराभूतो निर्गतो गेहतोऽन्यदा ।
अनाथ इव संभ्रमन् प्राप न क्वापि निर्वृतिम् ॥१७५॥
पर्यटन् सुप्रतिष्ठाख्यसुहृदन्तिकमभ्यगाम् ।
तोषितोऽहं च तेनापि वचनैरमृतोपमैः ॥१७६॥
समये सममुना समागां गुरुसन्निधौ ।
धर्मोऽभ्यधाय्यधर्माद्विरमणं गुरुणाऽपि मे ॥१७७॥
तदन्तिके साधुधर्ममादित्सुरभवं तदा ।
प्रत्यगादि पुनस्तेन भूरिणा पुण्यहारिणा ॥१७८॥
भद्र ! कुब्जस्य ते नास्ति यतिधर्मस्य योग्यता ।
अतस्त्वं प्रतिपद्यस्व धर्मं श्राद्धजनोचितम् ॥१७९॥
तत् श्रुत्वा कुब्जतां निन्दन् साधुधर्मविरोधिनीम् ।
हर्षप्रकर्षतोऽकार्षमात्मसाद् धर्ममार्हतम् ॥१८०॥
आराधयं श्राद्धधर्मं यथाक्रमहमन्वहम् ।

तथापि मुखरैः पौरैर्विदधे हास्यभूरहम् ॥१८१॥
तत्तनुं स्वां तनुं निन्दन्नभिनन्दन् महातनुम् ।
आर्तध्यानपर. प्रान्तेऽहं प्रापमान्तिमां दशाम् ॥१८२॥
ततोऽहमभवं मृत्वा सिन्धुरो भूधरोपमः ।
निर्विवेकं हि तिर्यक्त्वमार्तध्यानतरोः फलम् ॥१८३॥
निर्विवेकः पशुरहं किं करिष्यामि सम्प्रति ? ।
यदन्धाविव तिर्यक्त्वे न्यपतं स्वल्पधीः खलु ॥१८४॥
किमेभिः कल्पनाजालैरल्पैर्मम च दुर्मतेः ? ।
आश्रयाम्यमुमेवात्र प्रभुं द्वीपमिवाम्बुधौ ॥१८५॥
इति ध्यात्वा स संजातजातिस्मृतिरिभप्रभुः ।
क्षीराब्धौ सुरहस्तीव प्रविवेश सरोवरे ॥१८६॥
भृत्वा दृतिमिवाम्भोभि शुण्डामुद्दण्डभक्तिभाग् ।
आगात् स्नपयितुं नाथं कृतस्नान· स सिन्धुर. ॥१८७॥
तै पयोभिर्जगन्नाथं स्नपयित्वा शनै. शनैः ।
पश्चान्यानेतुमविशत् तडागे करटी पुनः ॥१८८॥
ततोऽम्भोजानि भूरीणि सुगन्धीनि मृदूनि च ।
आदाय द्विरदः सोऽथ स्वामिनं तमपूजयत् ॥१८९॥
पूजयित्वा च नत्वा च भूयो भूयो जगद्गुरुम् ।
यथास्थान ययौ भावबन्धुरः सिन्धुराग्रणीः ॥१९०॥
अथ क्रीडार्थमायाता व्यन्तरास्त्रिजगत्पतिम् ।
दृष्ट्वा भूयिष्ठसन्तुष्टिं प्राप्नुवन्ति स्म विस्मिताः ॥१९१॥
पुष्पैः परिमलोल्लासैरानीतैर्वनगह्वरात् ।
भावतोऽभ्यर्चयामासुर्व्यन्तराः स्वामिनो वपुः ॥१९२॥
वेणुवीणामृदङ्गादिवादित्रध्वनिबन्धुरम् ।
नृत्यं वितेनिरे तत्र व्यन्तराः पुरत· प्रभोः ॥१९३॥
वीक्ष्य तत्प्रेक्षणं दिव्यं तदासन्नवनेचराः ।
अभ्यगुः पुरि चम्पायां तदाश्चर्यचमत्कृताः ॥१९४॥
भिल्लास्ते विस्मितस्वान्ता वृत्तान्तं तमशेषतः ।
द्रुतं विज्ञापयामासुः करकण्डुमहीभुजे ॥१९५॥
निशम्य तन्मुखादेतां वार्तामभृतसोदराम् ।
ससैन्यो वन्दितुं नाथं यावदायाति भूपतिः ॥१९६॥
तावदनियतस्थितिर्वायुवत् परमेश्वरः ।
व्यहरत् स्थानतस्तस्मात् पुरग्रामाकरादिषु ॥१९७॥

अपश्यन् भुवनाधीशं धराधीशोऽतिखिन्नवान् ।
प्रभुक्रमन्यासोपरिविन्यस्तमस्तकः ॥१९८॥
तस्य खेदापनोदाय नागेन्द्रोऽथ जिनेशितुः ।
नवहस्तमितां हस्ते प्रतिमां बिभ्रदभ्यगात् ॥१९९॥
साक्षात् प्रभुमिव प्रेक्ष्याप्रतिमां प्रतिमामिमाम् ।
भूपः प्राप परां प्रीतिं भुवनैश्वर्यभागिव ॥२००॥
चारुभिश्चान्दनाम्भोभिः कुसुमैश्च सुगन्धिभिः ।
पूजयित्वा परप्रीत्या ववन्दे प्रतिमां नृपः ॥२०१॥
तथाऽत्र भूभुजा तेन चैत्यं प्रोत्तुङ्गमर्हतः ।
कारितं यशसां पुञ्जमिव पिण्डितमात्मनः ॥२०२॥
अथ सा प्रतिमा तत्र प्रासादे प्रोच्चतोरणे ।
न्यधायि क्ष्माभुजा तेन साक्षादिव हृदि प्रभुः ॥२०३॥
महाप्रभावा जैनेन्द्री प्रतिमापि ददौ नृणाम् ।
समाराधयतां स्वान्ताऽभीष्टं कल्पलतेव सा ॥२०४॥
प्रासादे तत्र हस्तीन्द्रः स समागत्य नित्यशः ।
विन्यस्तमस्तकः पार्श्वप्रतिमां प्राणमत् सदा ॥२०५॥
तीर्थेऽस्मिन् भक्तिभाक् कुम्भी स मृत्वा व्यन्तरोऽजनि
महातीर्थस्य तस्यैवाधिष्ठायकः प्रभाववान् ॥२०६॥
आसन्नत्वात् कलिगिरिकुण्डयोरनयोस्तदा ।
तत्तीर्थमलभल्लोके कलिकुण्डमिति श्रुतम् ॥२०७॥
निरालम्बो नभ इव विहरन् परमेश्वरः ।
समभ्यगाच्छिवापुर्याः कौशाम्बाख्ये वने क्रमात् ॥२०८॥
तत्र सर्वसहः सर्वसहेव त्रिजगद्गुरुः ।
तस्थौ प्रतिमया ध्यानधुराधाराधुरन्धरः ॥२०९॥
अथो तथा स्थितं नाथं प्रणन्तुं पन्नगप्रभुः ।
स्मृत्वा पूर्वोपकारं तं समागात् परिवारवान् ॥२१०॥
स त्रिः प्रदक्षिणीकृत्य नत्वा च स्वामिनः क्रमौ ।
पुरस्तात् प्रीतितो नृत्यं विदधे धरणोरगः ॥२११॥
सेवके मयि सत्यस्मिन् स्वामिनोऽस्य तनूपरि ।
मा भूदुष्णद्युतेरुष्णतरः पातोऽत्र रोचिषाम् ॥२१२॥
इति ध्यात्वा स्वयं छायाकरवत् प्रभुपृष्ठगः ।
धृतवानहिराट् छत्रं विश्वमूर्धन्यमूर्धनि ॥२१३॥
एवं दिनत्रयं तत्र स्थित्वा स्वाम्यातपत्रभृत् ।

मृगारातिरिवोत्रस्वी विजहार ततो वनात् ॥२१४॥
धरणोऽपि प्रभोर्भक्तिमेवं कृत्वा दिनत्रयम् ।
आसनाद् निजं स्थानं कार्याऽऽयात इवातिथिः ॥२१५॥
तत्र श्रीपार्श्वनाथस्य श्रेष्ठप्रासादशोभिता ।
अहिच्छत्रेति विख्याता पुरी साऽभूद्भुवस्तले ॥२१६॥
भगवान् विहरन् प्राप पुरं राजपुरं क्रमात् ।
सुमेरुरिव निष्कम्पस्तत्र प्रतिमया स्थितः ॥२१७॥
इतस्तन्नगराधीश ईश्वरो मनुजेश्वरः ।
ससैन्यस्तुरगारूढः क्रीडार्थं निर्ययौ पुरात् ॥२१८॥
गतः क्रमात् स भूस्वामी स्वामिनाऽलङ्कृतां भुवम् ।
इतस्तद्वन्दिनाऽभाणि केन चित् पश्यता प्रभुम् ॥२१९॥
पश्यैनं देव ! देवेन्द्रवृन्दवन्दितपङ्कजम् ।
अश्वसेनसुतं पार्श्वजिनं प्रतिमया स्थितम् ॥२२०॥
तेनेत्युक्तः क्षमाजानिः पार्श्वे पार्श्वप्रभोर्ययौ ।
स्फारिताक्षः पपौ पार्श्वदर्शनं तु सुधामिव ॥२२१॥
असौ त्रिजगतामीशः श्रुतोऽन्यत्र च जन्मनि ।
इति ध्यायन् धराधीशो मूर्च्छितो न्यपतत् क्षितौ ॥२२२॥
कृतोपचारो रुचिरैः सजलैः कदलीदलैः ।
जातिस्मृत्या समं लेभे संज्ञां धनुमतीपतिः ॥२२३॥
अथावमवदज्ञातजातिस्मृतिरिलापतिः ।
अस्मरद् दर्शनादस्य प्राचीनं चरितं मम ॥२२४॥
ततः परिजनः प्रोचे कीदृक् त्वच्चरितं विभो ' ।
मानीवेत्युदितः प्राह भूपः प्राक् चरितं निजम् ॥२२५॥
दत्तनामाऽभवद् विप्रः श्रीवसन्तपुरे पुरा ।
ज्योतिर्वाङ्मयविज्ञानां सदःसदनमण्डनः ॥२२६॥
अथ तस्याऽभवत् कुष्ठरोगो दुष्कर्मयोगतः ।
विनष्टं तत्पुत्रेन मधुनेव पयोघटः ॥२२७॥
देवतोऽप्येष कुष्ठेन विनष्टोऽनिष्टतां गतः ।
सत्कृतिः क्वेव न प्राप प्रवेशमपि कुत्र चित् ॥२२८॥
परित्यागेऽपि तं तादृग्वर्णं निर्वर्ण्य बाडवम् ।
तस्मिन् नैवादरं चक्रे शुष्के वृक्षे इवाण्डजः ॥२२९॥
दत्तो दत्तापमानं स्वं कुटुम्बं वीक्ष्य दुःखितः ।
न लेभे चेतसं स्वास्थ्यं घर्मार्त्त इवाध्वगः ॥२३०॥

गृहान् निष्काशितो दुष्टकुष्ठक्लिष्टवपुस्ततः ।
स ग्रासमात्रमप्यन्नं जरन् गौरिव नाप्तवान् ॥२३१॥
एवं तद्रोगसंयोगोद्विग्नोऽसौ वाडवाग्रणीः ।
वल्लभानप्यवाञ्छासीत् प्राणानात्मरिपूनिव ॥२३२॥
अन्यदाऽसौ निजप्राणपरिहारपरायणः ।
धर्मबुद्ध्याऽभ्यगाद् गङ्गातीरं निष्पापमृत्यवे ॥२३३॥
स यावज्जाह्नवीं प्राप चारुवारितरङ्गिताम् ।
अनुज्ञाप्य प्रवेशार्थमुत्सुकोऽजनि तज्जले ॥२३४॥
तावत् केनापि स व्योमचारिणा भिक्षुणा क्षणात् ।
ददृशे सुकृतारामसारणीसदृशा दृशा ॥२३५॥
प्रोचे च यतिना भद्र ! कथं पतसि पाथसि ? ।
बालेन मृत्युनाऽनेन दुःखावाप्तिः शरीरिणाम् ॥२३६॥
स्वस्मिन् कुष्ठेन रोगेण गतं विद्यादिकं मम ।
तद्विना किं तृणप्रायैः प्राणैः संरक्षितैः खलु ॥२३७॥
एष स्ववाहिनीवाहस्तीर्थं त्रैलोक्यपावनम् ।
स्पर्शोऽप्येतस्य तोयस्य हन्ति दुःखान्यनेकश. ॥२३८॥
अतस्तीर्थेऽत्र दुष्कर्ममर्मवारिणि वारिणि ।
निपत्याहं करिष्यामि सफलं जनुरात्मन' ॥२३९॥
तेनेत्युक्तः पुनः प्राह ब्राह्मणं श्रमणोत्तमः ।
कृतेनापि हि गङ्गायां किं मुधा मृत्युनाऽमुना ? ॥२४०॥
जरामरणदौर्गत्यदुःखादेर्दिव्यमौषधम् ।
विधेहि धर्मं सार्वज्ञं सर्वज्ञभिषजोदितम् ॥२४१॥
किं तद्रोगापहं दिव्यं भेषजं भिक्षुपुङ्गव ! ? ।
इत्युक्ते तेन यत्यूचे तत्पुरो.धर्ममार्हतम् ॥२४२॥
तत्पार्श्वे श्रद्धया श्राद्धधर्ममङ्गीचकार सः ।
साधु' सोऽपि ययौ व्योममार्गेणान्यत्र पत्रिवत् ॥२४३॥
तं धर्मं विधिवद् नित्यं स विप्रः परिपालयन् ।
अन्येद्युरगमद् देववन्दनार्थं जिनौकसि ॥२४४॥
अर्हतां प्रतिमास्तत्र प्रणम्यातिप्रमोदतः ।
वन्दित्वा च मुनींस्तस्थौ स यावद् मुनिसन्निधौ ॥२४५ ॥
तावच्चोपाश्रये तत्र श्रावकः पुष्कलोऽपि च ।
आयातः स मुनिं नत्वा यथास्थानं निषण्णवान् ॥२४६॥
अथैनं कुष्ठिनं दृष्ट्वोपविष्टं तत्प्रतिश्रये ।

अप्राक्षीत् पुष्कलः श्राद्धः साधुं मधुरया गिरा ॥२४७॥
स्वामिन्नसौ द्विजः कुष्टविनष्टो जिनवेश्मनि ।
यज्जिनान् वन्दतेऽस्यैतत्साम्प्रतं वाप्यसाम्प्रतम् ? ॥२४८॥
पुनः प्राह मुनिः श्राद्धं रोगवानप्यसौ द्विजः ।
यद् देवान् वन्दते देवगृहाशातनां त्यजन् ॥२४९॥
नैव भावप्रधानस्य दोषोऽमुष्य तदा भवेत् ।
नमन्ति यज्जिनान् मलक्लिन्नाङ्गा अपि भिक्षुकाः ॥२५०॥
तन्मिथ्या दुष्कृतं भूयाद् यदस्याशातनां व्यधाम् ।
इति ब्रुवाणः श्रमणं प्रोचिवान् पुष्कलः पुनः ॥२५१॥
का गतिर्भाविनी स्वामिन् ! मृतस्यास्य द्विजन्मनः ? ।
एवं तेनोदितेनापीत्युदीर्णं च मुमुक्षुणा ॥२५२॥
निबद्धमायुरमुना तिर्यग्योनौ द्विजन्मना ।
तेनायं कुर्कुटो भावी विषघातो भवान्तरे ॥२५३॥
वाचं वाचंयमस्यैवं समीचीनां निशम्य सः ।
शल्येनेव यथौ खेदं भाविदुःखेन दुःखितः ॥२५४॥
अतिखेदं प्रकुर्वाणं ब्राह्मणं श्रमणोऽब्रवीत् ।
भो भद्र ! खेदं मा कार्षीर्नान्यथा कर्मणां स्थितिः ॥२५५॥
इत्थं निर्ग्रन्थकथितवचोभिश्च्युतशोचनः ।
स प्रोचे प्रतिभूर्मुक्तेः कदा मे बोधिसङ्गम ? ॥२५६॥
अभ्यधाज्ज्ञानवानेवं ब्राह्मणं स क्षमाधनः ।
इतो मृत्वा राजपुरे ताम्रचूडो भविष्यसि ॥२५७॥
तत्रापि भविता जातिस्मृतिस्ते मुनिदर्शनात् ।
विधायानशनं चान्ते ततो मरणमाप्स्यसि ॥२५८॥
मृत्वा तत्रैव भावी त्वमीश्वराख्यः क्षितीश्वरः ।
ऋद्ध्या धृत्या च द्युतिमत्या पुरुहूत इवापरः ॥२५९॥
अन्येद्युः क्रीडनाक्रीडक्रीडया निर्गतः पुरात् ।
त्रयोविंशं जिनं पार्श्वं तस्थिवांसं च द्रक्ष्यसि ॥२६०॥
दर्शनं दर्शनीयस्य तस्य दृष्ट्वा मनोरमम् ।
लप्स्ये संमूर्छितो जातिस्मरणं कारणं मतेः ॥२६१॥
तदैव ते महाभाग ! भावी सम्यक्त्वसङ्गमः ।
एवं तद्वचनैस्तुष्टिकरैस्तुष्टिं द्विजोऽभजत् ॥२६२॥
सोऽहं निर्वर्ण्य निर्वर्ण्यमुखं काशीशनन्दनम् ।
अस्मार्षं पूर्ववृत्तान्तं ज्ञानिनोक्तमिव श्रुतम् ॥२६३॥

इति व्याहृत्य वसुधानाथो नाथमपूजयत् ।
व्यहरद् विभुरन्यत्र मित्रे शत्रौ च तुल्यदृग् ॥२६४॥
ईश्वरोऽपि हि तत्स्थाने तुङ्गं चैत्यमकारयत् ।
बिम्बं च पार्श्वनाथस्य न्यधात् तत्र महोत्सवैः ॥२६५॥
कुक्कुटेश्वरमित्याख्यं तत्तीर्थं प्रथितं भुवि ।
पुरं तदपि विख्यातं कुक्कुटेश्वरमित्यभूत् ॥२६६॥
गजेन्द्र इव शौण्डीरः स्वशरीरेऽपि निर्ममः ।
मौनवान् मुनिनाथः स व्यचरत् पृथिवीतले ॥२६७॥
सुखे दुःखे च सदृशः क्रमतो विहरन् विभुः ।
पुरासन्ने ययौ क्वापि तापसानां तपोवने ॥२६८॥
उदयोऽस्तं भवत्येव नित्यतेजस्विनामपि ।
ज्ञापयन्निति लोकानां तदैवास्तं ययौ रविः ॥२६९॥
तदा च हृदि निध्याय विहारासमयं विभुः ।
कुम्भीवाभ्यगमत् तस्यासन्नं न्यग्रोधपादपम् ॥२७०॥
कूपोपकण्ठे न्यग्रोधाधस्ताद् विध्वस्तमन्मथः ।
तत्पाद इव निष्कम्पस्तस्थौ प्रतिमया प्रभुः ॥२७१॥
कज्जलश्यामलैरन्धकारैरन्धत्वकारिभिः ।
अभाद्भिरिव निभृतं भृतं भुवनकोटरे ॥२७२॥
निशा निशाचरी श्यामाम्बराऽपुण्यजनप्रिया ।
भयङ्करी समभ्यागात् तदैवोद्धतपद्धतिः ॥२७३॥
तारतारा लसच्चित्रा क्षोभयत्यखिलं जनम् ।
तदा दिव्याम्बरा रेजे युवतीव विभावरी ॥२७४॥
गोमायवो रटन्ति स्म पर्यटन्तः पदे पदे ।
रात्रौ रात्रिचराः सद्यः प्रसूता पृथुका इव ॥२७५॥
मिथःस्फालितहस्ताग्रव्यग्रीकृतजगज्जनाः ।
अनृत्यद् मण्डलीभूय भूयस्यो भूतपङ्क्तयः ॥२७६॥
इत्यस्यां निशि नासाग्रलीनलोचनकुड्मलः ।
सिद्धध्यानपरः स्वामी कायोत्सर्गेण तस्थिवान् ॥२७७॥
इतश्च कठजीवः स मेघमाल्यऽसुरस्त्रुवः ।
स्मृतप्रागमत्सरोऽपश्यत् पार्श्वनाथं तथा स्थितम् ॥२७८॥
स प्राग्वैरं स्मरन् कोपाटोपपाटललोचनः ।
आगात् क्षोभयितुं पार्श्वमद्रिं भेत्तुमिवर्षभः ॥२७९॥
पार्श्वपार्श्वमुपागत्याहत्य पद्भ्यां च भूतलम् ।

शिलोच्चयानिव प्रोच्चान् विचक्रे करिणोऽथ सः ॥२८०॥
दन्तिनस्तेऽथ दन्ताग्रैः स्वामिनं भेत्तुमुद्यता. ।
स्वर्गिरिं गरिमागारं स्वतुण्डाग्रैरिवाण्डजाः ॥२८१॥
नभस्युल्लाल्य शुण्डाग्रै. स्वामिनं पुष्पदामवत् ।
दन्ताग्रैर्दन्तिनोऽधस्ताद् निपतन्तमधारयन् ॥२८२॥
इत्थं कदर्थितोऽमीभिः करिभिः परमेश्वरः ।
मर्यादामिव पाथोधिर्नामुञ्चद् ध्यानपद्धतिम् ॥२८३॥
एवमक्षोभ्यमर्हन्तं मत्वाऽथमसुराधमः ।
व्यकरोत् स्फारफूत्कारकारिणः फणिनः क्षणात् ॥२८४॥
सर्पास्तेऽपि प्रसर्पन्तः परितः परमेशितुः ।
फणाफूत्कारवातूलैर्भगवन्तमभाययन् ॥२८५॥
भोगिनो भीमभोगास्ते भोगैर्भगवतो वपुः ।
निर्भरं वेष्टयामासुः प्रकाण्डमिव चान्दनम् ॥२८६॥
प्रक्षरद्गरराजीभिराशीभिर्मर्मणि प्रभुम् ।
दन्दशूका दशन्ति स्म भूयो भूयो निरङ्कुशाः ॥२८७॥
अमीभिर्भोगिभिर्नाथमक्षोभ्यं वीक्ष्य सोऽसुरः ।
विचक्रे चित्रचीत्कारांश्चित्रकांश्चललोचनान् ॥२८८॥
पुच्छाच्छोटैर्दुराटोपैर्नखरैर्निशितैः पुनः ।
तेऽपीशं पीडयामासुराशु निस्त्रिंशवृत्तयः ॥२८९॥
असुरेण कृतास्तेन पुनः क्षोभयितुं विभुम् ।
करालव्यालशार्दूलशृगालाद्या अनेकशः ॥२९०॥
एतेऽपि भगवत्यस्मिन् ध्यानमीलितचक्षुषि ।
वृथा संजज्ञिरे नारीकटाक्षा इव संयतौ ॥२९१॥
प्रक्षेपेण पुनः पापमालिना मेघमालिना ।
मेदुरैर्मुदिरैश्चक्रे श्यामलं गगनस्थलम् ॥२९२॥
कर्णकोटरविस्फोटपटीयान् स्तनितध्वनिः ।
क्षुभ्यत्क्षीराम्बुधिध्वानसोदरो व्यानशे दिशः ॥२९३॥
स्फुरितं विद्युता विष्वक् पटुत्रात्कारकारया ।
पतितं करकैर्वज्रकर्करैरिव कर्कशैः ॥२९४॥
अकूजन् केकिनः कामकेकाकेङ्कारकारिणः ।
रटन्ति स्म तृषाक्रान्ताः प्रोच्चैश्चातकपोतकाः ॥२९५॥
धाराधोरणबहलैर्दिक्षु व्याप्तं च दुर्दिनैः ।
घनैरिव खरस्पर्शैर्वातैर्वातं समन्ततः ॥२९६॥

इतो दुर्मतिना तेन प्रारेभेऽथ वर्षितुम् ।
धारापातैर्दुरापातै पर्वतोत्पातकारिभिः ॥२९७॥
पतद्भि पाथसां पूरैः पूरिताखिलभूतलैः ।
सम्भृतं तद्वनं सर्वं जलाद्वैतमिवाजनि ॥२९८॥
कूपा कासारतां प्रापुर्गोष्पदाः कूपरूपताम् ।
नद्यश्च स्वर्णदीभावं कासाराश्च पयोधिताम् ॥२९९॥
सरिद्भावं च सारिण्यो द्रहतां वनदीर्घिकाः ।
एषु मेघेषु वर्षत्सु पानीयैः प्रचुरैरिति ॥३००॥ ( युग्मम् )
पतत् तत् सलिलं लोकानस्तोकान् प्लावयत् क्रमात् ।
कायोत्सर्गजुषो भर्तुर्जानुदघ्नमजायत ॥३०१॥
धवलध्यानसम्बन्धाधारस्य जगदीशितुः ।
क्रमतः कटिकण्ठाग्रं यावदेति स्म तत्पयः ॥३०२॥
तोयान्तर्मग्नवपुष शुशुभे वदनं विभोः ।
जलान्तर्लीननालस्य कोशं किञ्जलजन्मन. ॥३०३॥
पानीयं घटति स्म तत् स्वामिनासाऽवधि क्रमात् ।
चित्रं तद् यद् भवाम्भोधौ निर्मग्न. सोऽसुराधम. ॥३०४॥
स्थासका स्थूलविस्ताराः परितः परमेश्वरम् ।
क्षणिकत्वमयाः स्थैर्यमध्येतुमिव भेजिरे ॥३०५॥
एवं विधीयमानेऽस्मिन्नुपसर्गे जगद्गुरौ ।
तदस्थैवाभवद् विश्वं विश्वमप्येतदाकुलम् ॥३०६॥
इत्थं शठेन हठत. कठेन कठिनात्मना ।
पीडितोऽपि जगद्भर्त्ता मेरुवत् स्थैर्यभागभूत् ॥३०७॥
इतो दुःसर्गसंसर्गमुपसर्गमिमं विभौ ।
विदित्वाऽऽगात् सपत्नीको भोगिराड् भक्तिभङ्गुरः ॥३०८॥
आगत्य द्राक् स सर्पेन्द्रः स्वामिनो मस्तकोपरि ।
छत्रपङ्क्तिमिव स्फारां फणाश्रेणिमधारयत् ॥३०९॥
रेजिरे स्वामिनो मूर्ध्नि फणाश्रेणिमणित्विषः ।
विश्वप्रकाशनोद्दीप्रा प्रदीपकलिका इव ॥३१०॥
स्थितं प्रतिमया नाथं पाथःसमग्रविग्रहम् ।
आत्मना सममुद्धृत्य दधौ स्कन्धे भुजङ्गराट् ॥३११॥
भुजङ्गभर्तु स्कन्धस्थ शुशुभे भुवनप्रभु ।
पाथ सनाथशैलस्य मौलिलीन इवाम्बुदः ॥३१२॥
एवं भक्ति प्रकुर्वाणं स्वप्रियं वीक्ष्य तत् क्षणात् ।

भावाद् भोगीन्द्रभामिन्यः प्रभुभक्त्यै प्रचक्रमुः ॥३१३॥
ताः सधो गीतसङ्गीतसंगतं पुरतः प्रभोः ।
ताण्डवं मण्डयामासुर्महाडम्बरमम्बरे ॥३१४॥
इत्थं कुर्वति भोगीन्द्रे भक्तिं सद्भक्तिनिर्भरे ।
कंठं तथोपसर्गेति सद्गद्गद् विभुरप्यभूत् । ३१५॥
तथावस्थास्थितं नाथं दृष्ट्वाऽसौ दुष्टचेष्टितः ।
कट. कठिनधारौघै. पयोऽमुञ्चत् पुनर्घनम् ॥३१६॥
यदा धाराभिर्मुशलमांसलाभिः प्रभूपरि ।
पतन्तीभिर्जगत्प्लावोपप्लावाभिर्न संस्थितम् ॥३१७॥
अवधिज्ञानतोऽज्ञासीत् तदा पन्नगपुङ्गवः ।
उपद्रवितुं प्रारब्धं कंठनातुच्छमत्सरात् ॥३१८॥ ( युग्मम् )
रुषा परुषवाग् भोगिराजोऽवाग् मेघमालिनम् ।
मूढ ! तपाय ते जज्ञे स्वामिनो हितवागपि ॥३१९॥
हितमप्यहितायाऽभूत् तद्वचोऽस्य विभोस्तव ।
न तच्चित्रं ज्वरार्त्तस्य यत् पयाऽपि विपायते ॥३२०॥
नरकाध्वनि पाथेयात् प्राणिप्राणप्रणाशतः ।
रक्षितः स्वामिनाऽनेन तदा त्वं दुर्धियां निधे ! ॥३२१॥
ईदृक्ष उपकारैकरसिकेऽस्मिन् जगद्गुरौ ।
केयं तद्रा तव द्रोहमतिर्दुर्मतेरेव हि ॥३२२॥
एवमुक्तोऽपि भुजगप्रभुणा मेघमाल्यसौ ।
विरराम नाम्नुमुक्तेरुत्पथ्य इव दुष्पथात् ॥३२३॥
भ्रकुटीभङ्गभीमाक्षः पुनः पन्नगपुङ्गवः ।
साक्षेपमिदमाचख्यौ वर्षन्तं मेघमालिनम् ॥३२४॥
कृपालोरस्य नाथस्य यद्यहं किङ्करः खलु ।
न सहिष्ये क्षणमपि भवद्दुर्ललितं हादः ॥३२५॥
इत्युक्तियुक्तिमाकर्ण्य दृष्ट्वा च त्रिजगत्पतिम् ।
कृतभक्ति भोगिभर्त्रा दध्यावित्यऽसुरप्रभुः ॥३२६॥
अणीयसी क्व मे शक्तिः क्वाऽसौ मेरुरिव स्थिरः ।
तन्मया मन्दमतिना मुधैवायमुपद्रुतः ॥३२७॥
एतस्मात् पापतः पापः पतिष्ये दुर्गतावहम् ।
आशातना हि पूज्यानां दुर्गतेः पथि दीपिका ॥३२८॥
इयानपि ममायासो संजज्ञेऽस्मिन् जिने वृथा ।
अम्बुबिम्बितशीतांशुबिम्बादाने शिशोरिव ॥३२९॥

शत्रुमित्रतृणस्त्रैणमणिरेणुसदृग्मनाः ।
अस्ति यद्यपि विवेकवत्सलोऽसौ जगद्गुरुः ॥३३०॥
तथाऽप्यस्य जगद्भर्त्तुः पर्युपास्तिपरायणात् ।
ममास्ति भीतिर्भोगीन्द्राज्जीवितान्तविधायिनी ॥३३१॥
अतोऽमुत्र परत्रापि हिताय विहिताहितम् ।
अमुमेव श्रये श्रेयःशरणं शरणं विभुम् ॥३३२॥
मत्वैवं मेघमाल्येष संहृताम्भोदसंहतिः ।
अनन्यशरण. पार्श्वचरणौ शरणं श्रित ॥३३३॥
स्वकीयागः क्षमयित्वा स्वस्थानं मेघमाल्यऽगात् ।
सर्पेशोऽपि प्रभुं नत्वा ययौ निजनिकेतनम् ॥३३४॥
उपद्रुतोऽयं नृदेवो नृदेवाऽसुरशेखरः ।
सत्यां मयीति खेदेन धार्थिज्ञम्पापरायणा ॥३३५॥
नाथोपसर्गसंसर्गं निवारयितुमक्षमा ।
पतत्ताराश्रुकणिका क्षपाऽपि क्षयमाययौ ॥३३६॥ (युग्मम्)
यस्यां सत्यां विभोर्जाता उपसर्गाः क्व सा निशा ।
इतीव तच्चपेटायै करविस्तारणोत्सुकः ॥३३७॥
किंशुकशुकास्यकल्पैरनल्पै रोचिषां चयै. ।
भुवं प्रकुर्वन् काश्मीरनीरकर्दमितामिव ॥३३८॥
उपसर्गप्रसङ्गाग्निसंतप्तध्यानकाञ्चनम् ।
विवन्दिषुरिवार्हन्तमुदियाद्दिवाहर्मणिः ॥३३९॥ (त्रिभिर्विशेषकम्)
तत. प्रभातसमये रविणा पविते पथि ।
वायुरिवाऽप्रतिबद्धः प्रभुरप्यचलत् ततः ॥३४०॥
क्रमाद् गत्वा पुरीं काशिं काशिनायकनन्दनः ।
श्रयति स्माश्रमपदोद्यानं सिंह इवाभयः ॥३४१॥
तत्र शुक्लमनाः शुक्लध्यानाध्वाधिगमाध्वगः ।
धातकीक्ष्मारुहाधस्ताद् ध्वस्ताघस्तस्थिवान् विभुः ॥३४२॥
क्षपकश्रेणिमारूढोऽधिरूढो ध्यानवर्त्मनि ।
प्रभुश्चिच्छेद दुर्घातघातिकर्मचतुष्टयीम् ॥३४३॥
परीषहान् सहमानो नृतिर्यग्निर्जरकृतान् ।
व्रताह्नाच्चतुरशीतिमह्नां नाथोऽत्यवाहयत् ॥३४४॥
अथो निशीथिनीनाथे विशाखायामुपस्थिते ।
चैत्रासितचतुर्थ्यां च पूर्वाह्णेऽपूर्ववैभवे ॥३४५॥
कृताष्टमतपा लोकालोकालोकनलोचनम् ।

शत्रुमित्रतृणस्त्रैणमणिरेणुसहङ्मनाः ।
अस्ति यद्यपि विवेकवत्सलोऽसौ जगद्गुरुः ॥३३०॥
तथाऽप्यस्य जगद्भर्तुः पर्युपास्तिपरायणात् ।
ममास्ति भीतिर्भोगीन्द्राज्जीवितान्तविधायिनी ॥३३१॥
अतोऽमुत्र परत्रापि हिताय विहताहितम् ।
अमुमेव श्रये श्रेयःशरणं शरणं विभुम् ॥३३२॥
मत्वैव मेघमाल्येष संहृताम्भोदसंहतिः ।
अनन्यशरण पार्श्वचरणौ शरणं श्रितः ॥३३३॥
स्वकीयागः क्षमयित्वा स्वस्थानं मेघमाल्यऽगात् ।
सर्पेशोऽपि प्रभुं नत्वा ययौ निजनिकेतनम् ॥३३४॥
उपद्रुतोऽयं नृदेवो नृदेवाऽसुरशेखरः ।
सत्यां मयीति खेदेन वाधिक्षपापरायणा ॥३३५॥
नाथोपसर्गसंसर्गं निवारयितुमक्षमा ।
पतत्ताराश्रुकणिका क्षपाऽपि क्षयमाययौ ॥३३६॥ (युग्मम्)
यस्यां सत्यां विभोर्जाता उपसर्गाः क्व सा निशा ।
इतीव तच्चपेटार्थं करविस्तारणोत्सुकः ॥३३७॥
किंशुकशुकास्यकल्पैरनल्पै रोचिषां चयैः ।
भुवं प्रकुर्वन् काश्मीरनीरकर्दमितामिव ॥३३८॥
उपसर्गप्रसङ्गाग्निसंतप्तध्यानकाञ्चनम् ।
विचन्दिषुरिवार्हन्तमुदियादिवाहर्मणि ॥३३९॥ (त्रिभिर्विशेषकम्)
तत. प्रभातसमये रविणा पवित्ते पथि ।
वायुरिवाऽप्रतिबद्धः प्रभुरप्यचलत् ततः ॥३४०॥
क्रमाद् गत्वा पुरीं काशिं काशिनायकनन्दनः ।
श्रयति स्माश्रमपदोद्यानं सिंह इवाभयः ॥३४१॥
तत्र शुक्लमना. शुक्लध्यानाध्वाधिगमाध्वगः ।
धातकीक्ष्मारुहाधस्ताद् ध्वस्ताघस्तस्थिवान् विभुः ॥३४२॥
क्षपकश्रेणिमारूढोऽधिरूढो ध्यानवर्त्मनि ।
प्रभुश्चिच्छेद दुर्घातघातिकर्मचतुष्टयीम् ॥३४३॥
परीषहान् सहमानो नृतिर्यग्निर्जरकृतान् ।
व्रताह्वाच्चतुरशीतिमह्नां नाथोऽत्यवाहयत् ॥३४४॥
अथो निशीथिनीनाथे विशाखायामुपस्थिते ।
चैत्रासितचतुर्थ्यां च पूर्वाह्णेऽपूर्ववैभवे ॥३४५॥
कृताष्टमतपा लोकालोकालोकनलोचनम् ।

केवलं ससाद ज्ञानं प्रभुः ज्ञानिशिरोमणिः ॥३४६॥ (युग्मम्)
विधित्सवो विभोर्ज्ञानोत्सवं संकेतिता इव ।
अभ्येयुः सर्वतः सर्वे वासवाः कम्पितासनाः ॥३४७॥
सोत्साहगतयो हर्षप्रकर्षप्रेरिताशयाः ।
स्वीयैः स्वीयैः परीवारैः परितः परिवारिताः ॥३४८॥
अन्येऽपि हि सुपर्वाणः स्पर्धयन्तः परस्परम् ।
आयातास्ते च समवसरणायोद्यमं व्यधुः ॥३४९॥
वैमानिकज्योतिषिकभवनाधिपव्यन्तराः ।
तत्र चक्रुः सुराः सौवसौवकार्याणि सत्वरम् ॥३५०॥
अथो सुधाशनन्यस्ताम्बुजन्यस्तक्रमाम्बुजः ।
पूर्वद्वारेण समवसरणं प्राविशत् प्रभु ॥३५१॥
ततः प्रदक्षिणीकृत्य चैत्यद्रुं जगदीश्वरः ।
गतानर्थाय तीर्थाय नमश्चक्रे क्रमो ह्यसौ ॥३५२॥
कृते जयजयारावे सुरासुरनरेश्वरैः ।
चिरं जीव चिरं जीवेत्यप्सरोभिरुदीरिते ॥३५३॥
ततः प्राग्वदनः सिंहासनं रत्नविनिर्मितम् ।
अलंचक्रे धर्मचक्री चक्रबन्धुरिवाम्बरम् ॥३५४॥ (युग्मम्)
प्रभो रूपानुरूपाणि रूपाणि चापराण्यथ ।
व्यकुर्वन् व्यन्तराश्चीर्णि प्रभावः प्रभुभूरसौ ॥३५५॥
तिर्यग्नरामरास्तत्र सर्वतः सपरिच्छदाः ।
पश्यन्तः स्वामिवक्त्राब्जं तस्थु. स्थाने यथोचिते ॥३५६॥
वनपालो निभाल्येति विभोर्वैभवमुत्तमम् ।
हृष्टः प्रविष्टः स्वपुरीमश्वसेनेशमभ्यगात् ॥३५७॥
मस्तकन्यस्तहस्तोऽयमश्वसेनाय भूभुजे ।
यथाजातं समवसृतेर्वृत्तान्तं तमब्रवीत् ॥३५८॥
श्रुताऽप्येषाऽवनेर्नेतुर्वार्ताऽभूदमृतोपमा ।
यत्तत्प्रवृत्तेः पुरतः शर्करा कर्करायते ॥३५९॥
अश्वसेनोपि तद्वाग्भि. प्रीत. पुलकितोऽभवत् ।
सिक्तोऽम्भोधरधाराभिरिव नीपावनीरुहः ॥३६०॥
तस्मै तुष्टाय तुष्टान्तःकरणो धरणीधवः ।
ददौ दानं मणिस्वर्णरूपाद्यं पारितोषिकम् ॥३६१॥
विसृज्योद्यानपालं तं तं वृत्तान्तं यथाश्रुतम् ।
वामायै च प्रभावत्यै भूपोऽभिहितवान् स्वयम् ॥३६२॥

स्थाने स्थाने परिमुक्तमौक्तिकस्वस्तिकाङ्किताम् ।
मार्गे मार्गे शातकुम्भकुम्भोत्तम्भिततोरणाम् ॥३६३॥
गेहे गेहे वधूवृन्दप्रारब्धधवलध्वनिम् ।
हट्टे हट्टे न्यस्तकेतुपटप्रच्छादिताम्बराम् ॥३६४॥
त्रिके त्रिके लसद्गन्धपुष्पप्रकरहारिणीम् ।
द्वारे द्वारे सूत्रिताम्रदलवन्दनमालिकाम् ॥३६५॥
एवं श्रियाऽतिहारिण्या स्पर्धयन्तीमिवालकाम् ।
ततोऽलङ्कारयामास काशीं काशीशिता द्रुतम् ॥३६६॥
(चतुर्भिः कलापकम्)
कुम्भीन्द्रकुम्भकुम्भेभ्यः क्षरन्मदजलप्लवैः ।
अभिषिञ्चन् महीं सैन्यभारप्राग्भारभङ्गुराम्॥३६७॥
वाजिराजिखुराक्षुण्णपांशुभिः पिहिताम्बरः ।
भेरीभाङ्कारसम्भारसम्भृताशेषदिग्मुखः ॥३६८॥
दिव्याभरणभ्राजिष्णुरातपत्रोपशोभितः ।
सिन्धुरस्कन्धमारूढः परिचारितचामरः ॥३६९॥
सौधर्द्धिस्पर्धिताऽमर्त्यनायको मर्त्यनायकः ।
विवन्दिषुर्भगवन्तं पुरतः पुरतोऽचलत् ॥३७०॥
(चतुर्भिः कलापकम्)
वामाऽपि प्रेमबाष्पालीप्लाविताननपङ्कजा ।
नन्तुकामा जिनं गेहाद् निरगात् स्नुषया समम् ॥३७१॥
वीक्ष्याऽथ जिनचिह्नानि राजचिह्नानि सोऽमुचत् ।
भूपः प्राविशत् समवसृतिं च सपरिच्छदः ॥३७२॥
दृष्ट्वाऽर्हन्तं स्थितं सिंहासनेऽब्जनरुच्चि रुच्चिम् ।
भूपतिः कामपि प्राप यां वेत्त्यऽर्हस्तदाऽऽत्मनः ॥३७३॥
भूमिलन्मौलिरानन्दवाष्पप्लावितभूतलः ।
उदञ्चद्बाहुरोमाञ्चकञ्चुकः कलिपताञ्जलिः ॥३७४॥
दत्वा प्रदक्षिणास्तिस्रो गिराऽम्भोदगभीरया ।
जगन्नाथं महीनाथः सम्मदादेवमस्तवीत् ॥३७५॥ (युग्मम्)
क्षेत्रे योजनमात्रेऽपि नृतिर्यगमृतान्धसाम् ।
यत्तिष्ठेत् कोटिः कोटिस्ते माहात्म्यमिदमद्भुतम् ॥३७६॥
भामण्डलमिदं स्वामिन् ! पश्चाद् मूर्ध्नस्तव व्यभात् ।
वपुष्यऽमाद्भिरस्वलपैर्महोभिरिव पिण्डितम् ॥३७७॥
व्यरुचद्रुचिरोचिष्णु दिक्चक्रं त्वत्पुरः प्रभो ! ।

धर्मचक्रं धर्मचक्रिलक्ष्म्याश्चिह्नमिव स्फुटम् ॥३७८॥
महत्स्वपि महानेकोऽसावेवात्राधिदैवतैः ।
त्वत्पुरो विदधे स्वामिन्नयमिन्द्रध्वजो महान् ॥३७९॥
सत्वरं भगवन् ! भवान् जज्ञे यच्चतुराननः ।
मन्ये चतुर्गतिद्वारकपाटजडताय तत् ॥३८०॥
उल्लसन्नेष कङ्केल्लिर्वल्लत्पल्लवमालितः ।
भवानिव विभो ! केषां चक्षुषां नाऽभवद् मुदे ? ॥३८१॥
विभो ! त्वं कज्जलच्छायः स्वर्णसिंहासनस्थितः ।
मेरुलीन इवाम्भोदः सन्मयूरमुदं व्यधाः ॥३८२॥
छत्रत्रयी मणिस्वर्णरजतै रचिता विभो ! ।
भुवि भूभवनैश्वर्यं प्रोच्चैरियमसूचयत् ॥३८३॥
छत्रत्रयी भवन्मूर्ध्नि पार्वणेन्दुनिभा व्यभात् ।
ज्ञानदर्शनचारित्रत्रयप्राचुर्यसूचिका ॥३८४॥
परुवच्चामरश्रेणी धवला पार्श्वयोस्तव ।
मुखाम्भोरुहसेवायै मरालालिरिवागता ॥३८५॥
देवदुन्दुभयो देव ! नदन्तो गगनाङ्गणे ।
इत्यभ्यधुरसावेव जेता क्रोधादिवैरिणाम् ॥३८६॥
गन्धाम्बुवर्षणं हर्षात् तेनिरे त्वत्पुरः सुराः ।
सिञ्चन्त इव बोधिद्रुमुच्चैःपदफलाप्तये ॥३८७॥
पञ्चवर्णा पुष्पपङ्क्तिर्न्यपतद् भवतः पुरः ।
त्यक्तैव बाणालिः पञ्चबाणेन त्रासमीयुषा ॥३८८॥
ये नृतिर्यक्सुरा गाढारूढमत्सरिणो मिथः ।
त्वत्सङ्गात् सुहृदायन्ते ते परस्परवत्सलाः ॥३८९॥
केशश्मश्रुनखा यन्नो वृद्धिं यान्ति विभो ! तव ।
आप्तो नाप्तैः परैरेष एतावान् महिमा भुवि ॥३९०॥
अनुकूलेन्द्रियार्थं त्वामृतवो युगपत् समे ।
भेजुः षड्जीवनिकाया इव त्राणात् सतुष्टयः ॥३९१॥
एतैरतिशयैस्तारैस्ताराभिरिव चन्द्रमाः ।
कलितः प्रभो ! न कस्य दृक्चकोरमुदे भवेः ? ॥३९२॥
नमस्ते ज्ञानविज्ञानप्रज्ञाप्राग्भारशोभिने ।
जगच्चित्तचमत्कारिसर्वातिशयशालिने ॥३९३॥
स्तुत्वेति मुनिमूर्धन्यं मूर्ध्नि बद्धाञ्जलिर्नृपः ।
यथास्थानं स्थितः स्वामिमुखलीनविलोचनः ॥३९४॥

यां विना पूर्वयोगोऽसौ निस्तुषोऽपि तुषायते ॥४२७॥
साधुश्राद्धाऽविरतानां सम्यक्सम्यक्त्वशालिनाम् ।
न प्रमत्तैरतो भाव्यं धर्मे शर्ममये जनाः ! ॥४२८॥
एवं कर्णपुटैर्वाचं धार्चंधर्मशिरोमणेः ।
पपुः सर्वेऽपि पार्षद्या वेणक्वाणमिवैणकाः ॥४२९॥
निःसरन्तो गिरां पूरा श्रेजिरे भगवन्मुखात् ।
पीयूषे पुष्करावर्त्तप्रवाहा इव पीवराः ॥४३०॥
श्रुत्वेवं देशनां स्वामिमुखाम्भोजसमुद्भवाम् ।
सर्वसावद्यविरतिर्विरतैः कैश्चिदाददे ॥४३१॥
देशतो विरतिः कैश्चित् कैश्चित् सम्यक्त्वमुत्तमम् ।
कैश्चिद्भद्रकता भाविभद्राऽमुत्र परत्र च ॥४३२॥ (युग्मम्)
रोहणादिव रत्नाली स्वामिनो धर्मपद्धतिः ।
स्वीयभाग्यानुसारेणाऽऽददे पर्षज्जनैस्तदा ॥४३३॥
भूमीभुजोऽश्वसेनस्य हृदये दर्पणोपमे ।
धर्मोऽसौ धर्मराट्प्रोक्तः सम्प्राप्तः प्रतिबिम्बताम् ॥४३४॥
राज्यं दत्वाऽश्वसेनोऽथ हस्तिसेनाय सूनवे ।
मुक्तिसीमन्तिनीदूतीं दीक्षां संवेगतोऽग्रहीत् ॥४३५॥
वामादेवीप्रभावत्योर्व्रतदानाद् मुदं व्यधात् ।
स्वामी सर्वत्र सदृशः किं पुनः स्वपरिच्छदे ? ॥४३६॥
आर्यदत्त आर्यघोषो वशिष्ठो ब्रह्मनामकः ।
सोमश्च श्रीधरो वारिषेणो भद्रयशा जयः ॥४३७॥
विजयश्चेति नामानो दशैते पुरुषोत्तमाः ।
पुरुषा प्राञ्जलीभूय प्रोचिवांसः प्रभुं प्रति ॥४३८॥ (युग्मम्)
कषायविषयद्वेषकलुषीकृतचेतसः ।
तारकं त्वां प्रपन्नाः स्मो महाद्रुममिवाध्वगाः ॥४३९॥
प्रोद्विग्नाः स्मो जरामृत्युक्लेशकल्लोलसङ्कुलात् ।
भग्नपोता इव भवाम्भोधेर्भ्रमणतो वयम् ॥४४०॥
महाव्रतमहापोतदानतः किंकरानिमान् ।
संसाराब्धौ मज्जतोऽस्मान् प्रभो ! तारय तारय ॥४४१॥
इत्युक्तः पुरुषश्रेष्ठैरमीभिः परमेश्वरः ।
ददौ तेभ्यो महानन्दसत्यंकारमिव व्रतम् ॥४४२॥
चतुर्विधस्य सङ्घस्य स्थापनां विदधे विभुः ।
यस्मादेष भवत्याविर्भूतानामर्हतां क्रमः ॥४४३॥

दिव्यरूपसनाथानां नाथः कथयति स्म सः ।
उत्पातो विगमो ध्रौव्यमित्यमीषां पदत्रयीम् ॥४४४॥ (युग्मम्)
तथाशु तदनुसृत्य द्वादशाङ्गीमसूत्रयन् ।
विस्तरेद् वाङ्मयं विज्ञे तैलबिन्दुरिवाम्बुनि ॥४४५॥
दिव्यान् स्थालस्थितान् वासान् वासवैरुपढौकितान् ।
अनुज्येष्ठं गणभृतां मूर्ध्नि चिक्षेप दक्षराट् ॥४४६॥
द्रव्यैर्गुणैश्च पर्यायैरनुज्ञामानुयोगिकीम् ।
गणानुज्ञां च गणभृद्वरेभ्यो भगवानदात् ॥४४७॥
मुनिमूर्धन्यमूर्द्धानः सुरमूर्धाभिषिक्तकाः ।
तदा सद्गन्धसम्पूर्णैश्चूर्णैस्तूर्णमपूर्णयन् ॥४४८॥
धवलानि जगुस्तत्र सुरासुरनरस्त्रियः ।
नेदुर्दुन्दुभयो व्योम्नि प्रतिध्वानितदिग्मुखाः ॥४४९॥
कोलाहलं प्रकुर्वद्भिरमरैरसुरैर्नरैः ।
ताण्डवाडम्बरोऽमण्डि तदा तत्र महोत्सवे ॥४५०॥
अथैते साधुशार्दूलाः मुकुलीकृतपाणयः ।
तस्थुः शावा इव स्तन्यं प्रतीच्छन्तो गुरोर्गिरम् ॥४५१॥
पुनरासनमासीनस्तत्र चैत्यतरोरधः ।
विदधे देशनां शिक्षामयीं शिष्यपुरः प्रभुः ॥४५२॥
लोकतापापनोदाय वर्षति प्रभुवारिदे ।
घटिकेवाभवत् तूर्णं संपूर्णा तत्र पौरुषी ॥४५३॥
अथ स्थालीस्थितैर्दिव्यैरखण्डैस्तन्दुलैः कृतः ।
चतुष्प्रस्थ मितः काशीनगरीश्वरकारितः ॥४५४॥
सौरभ्यभव्यः समवसरणं नागरैर्वृतः ।
प्रोद्गीतधवलः पूर्वद्वारेण प्राविशद् बलिः ॥४५५॥ (युग्मम् )
प्रभुं प्रदक्षिणीकृत्य सोऽक्षेपि पुरतो बलिः ।
स चान्तराले निपतन्नर्धोऽलायि सुधाशनैः ॥४५६॥
अर्धः समाददे काशिपतिनाऽवनिभागलौ ।
दायादैरिव जगृहे शेषः शेषजनैः पुनः ॥४५७॥
बलेः प्रभावतो रोगाः क्षीयन्ते पूर्वसम्भवाः ।
नवाः पुनर्न जायन्ते षण्मासावधि देहिनाम् ॥४५८॥
अथोदग्द्वारमार्गेण निर्ययौ जगदीश्वरः ।
सुरकोटिवृतः स्वर्णपद्मन्यस्तपदाम्बुजः ॥४५९॥
शालयो रत्नकनकमययोरन्तरस्थिते ।

मालवकैशिकीमुख्यग्रामरागानुरागया।
संस्कारवत्त्वप्रभृतिपञ्चत्रिंशद्गुणस्पृशा ॥३९५॥
नरतिर्यक्सुरश्रेणीवाणीविज्ञानविज्ञया।
आदेशनोर्वींगामिन्या मेघगम्भीरया गिरा ॥३९६॥
निःसरद्दशनज्योतिःप्लावप्लावितदिग्मुखः।
सर्वतः सम्मुखः स्वामी विदधे धर्मदेशनाम् ॥३९७॥
(त्रिभिर्विशेषकम्)

दानशीलतपोभावभेदैर्धर्मश्चतुर्विधः।
सोऽप्यऽत्र पुण्यहीनानां कल्पद्रुरिव दुर्लभः ॥३९८॥
दानं देयं सदैवान्यदनुष्ठानपरैरपि।
दत्तं यदाब्दिकं दानं जिनैर्निर्णीतमुक्तिभिः ॥३९९॥
दानकल्पतरोः सार्वभौमभोगास्तु पल्लवाः।
स्वर्भोगाः सुमनःश्रेणी महानन्दः फलोदयः ॥४००॥
वैक्रियौदारिकात् कामाद् मनोवाक्तनुतश्च्युतिः।
कृत्वाऽनुमत्या कारित्या ब्रह्माष्टधा भवेदिति ॥४०१॥
रूपलावण्यतारुण्यभाग्यसौभाग्यमद्भुतम्।
शीलेनैव भवेद् नूनं लवणेनेव भोजनम् ॥४०२॥
मन्त्रयन्त्रौषधीसिद्धिं देवाः प्रत्यक्षतां क्षणात्।
यान्ति नूनं ब्रह्मचर्यचर्याचर्येषु देहिषु ॥४०३॥
व्याघ्रोरगजलव्यालज्वलनादिसमुत्थिता।
भीतिर्भीतेव शीलैकलीलातो याति दूरतः ॥४०४॥
नवभिर्गुप्तिभिर्गुप्तं यैः शीलं परिशीलितम्।
मुक्तिसीमन्तिनी तेषां स्याद्वश्यं वशंवदा ॥४०५॥
निकाचितानां दुष्कर्ममर्मणामपि भेदकम्।
दुःखसाध्यं हीनसत्त्वैस्तपो द्वादशधा स्मृतम् ॥४०६॥
संन्यासानौदर्यवृत्तिसंक्षेपा रसवर्जनम्।
संलीनता तनुक्लेशः षोढैव बाह्यकं तपः ॥४०७॥
प्रायश्चित्तं च व्युत्सर्गः स्वाध्यायो ध्यानपद्धतिः।
वैय्यावृत्त्यं च व्युत्सर्गः षोढेत्याभ्यन्तरं तपः ॥४०८॥
तपो द्वादशधाऽप्येतद् निर्निदानं निषेवितम्।
निदानं निर्वृतेर्दाने स्यादवश्यं शरीरिणाम् ॥४०९॥
दुष्कुलकलङ्कितानां दुस्तपं तपतां तपः।
निर्जराः किङ्करायन्ते वेतनैः क्रीणिता इव ॥४१०॥

विना तपः पृथग्भावो न भवेज्जीवकर्मणोः ।
विना कृशानुमकृशं स्वर्णपाषाणयोरिव ॥४११॥
एकत्वाशुच्यशरणजगदाश्रवसम्वराः ।
भवोऽनित्यत्वमन्यत्वं बोधिर्धर्मश्च निर्जरा ॥४१२॥
दानशीलतपोधर्मसाफल्यैकनिबन्धनम् ।
मता द्वादशधेत्यातैर्भाविना भवनाशकृत् ॥४१३॥ (युग्मम्)
विना भाव क्रियाकर्म कायक्लेशाय केवलम् ।
विना जीवं हि कोदण्डदण्डो भाराय भूतये ॥४१४॥
भावस्यैव हि मुख्यत्वमाचख्युर्धर्मकर्मणि ।
क्रियां कुर्वन्नऽप्यभव्यो नाऽपुनर्भवतां भजेत् ॥४१५॥
जीवध्वंसेऽपि यद् बन्धो न स्यात् प्रशमशालिनाम् ।
प्रामाण्यं तत्र भावस्य न पुन. कायकर्मणः ॥४१६॥
भावप्रभावतः पापमर्माणि प्रचुराण्यपि ।
क्षणादेव विलीयन्ते वायोरिव पयोमुचः ॥४१७॥
मानुष्यमुख्यसामग्री समग्राऽपि शरीरिणाम् ।
चतुर्विधेऽपि धर्मे स्यादसाधारणकारणम् ॥४१८॥
तत्रापि दश दृष्टान्तैर्भोजनप्रमुखैः खलु ।
भवेऽस्मिन् मानुषं जन्म मरौ वारिवद् दुर्लभम् ॥४१९॥
तत्रापि च सदाचारानाचारैकविचारभूः ।
वार्धौ द्वीपमिव भवे आर्यनीवृत् सुदुर्लभः ॥४२०॥
तत्रापि धर्माऽधर्मादिविचारचतुरा नृणाम् ।
छायेव पथि पान्थानां दुर्लभा जातिरुत्तमा ॥४२१॥
धर्मकर्मविनिर्माणेऽलंकर्मीणी शरीरिणाम् ।
न्यक्षाक्षेऽक्षयता साक्षात् तत्रापि खलु दुर्लभा ॥४२२॥
मानुष्यादिकसम्प्राप्तिसफलीकारकारणम् ।
तत्राप्यायु सुदुष्प्रापमन्धकारे प्रदीपवत् ॥४२३॥
स्वयं तरंस्तारयंश्च परान् सन्मार्गदर्शकः ।
दुष्प्रापः कथकः पाथ पतौ पोत इवाङ्गिनाम् ॥४२४॥
तत्राप्यलभ्यं सिद्धान्तवार्द्धिमध्योपतस्थुषाम् ।
हेयाऽहेयादिवस्तूनां श्रवणं श्रवणामृतम् ॥४२५॥
तत्राप्यनन्यसामान्या श्रद्धा स्यादतिदुष्करा ।
सैव यद् धूर्वहायेत नितान्तं धर्मकर्मणि ॥४२६॥
तत्रापि खलु दुःसाध्या विरतौ रतिरद्भुता ।

यां विना पूर्वयोगोऽसौ निस्तुषोऽपि तुषायते ॥४२७॥
साधुश्राद्धाऽविरतानां सम्यक्सम्यक्त्वशालिनाम् ।
न प्रमत्तैस्ततो भाव्यं धर्मे शर्ममये जनाः ! ॥४२८॥
एवं कर्णपुटैर्वाचं वाचंयमशिरोमणेः ।
पपुः सर्वेऽपि पार्षद्या वेणक्वाणमिवैणकाः ॥४२९॥
निःसरन्तो गिरां पूरा श्रेजिरे भगवन्मुखात् ।
पीयूषे पुष्करावर्त्तप्रवाहा इव पीवराः ॥४३०॥
श्रुत्वैवं देशनां स्वामिमुखाम्भोजसमुद्भवाम् ।
सर्वसावद्यविरतिर्विरतैः कैश्चिदाददे ॥४३१॥
देशतो विरतिः कैश्चित् कैश्चित् सम्यक्त्वमुत्तमम् ।
कैश्चिद्भद्रकता भाविभद्राऽमुत्र परत्र च ॥४३२॥ (युग्मम्)
रोहणादिव रत्नाली स्वामिनो धर्मपद्धतिः ।
स्वीयभाग्यानुसारेणाऽऽददे पर्षज्जनैस्तदा ॥४३३॥
भूमीभुजोऽश्वसेनस्य हृदये दर्पणोपमे ।
धर्मोऽसौ धर्मराट्प्रोक्तः सम्प्राप्तः प्रतिबिम्बताम् ॥४३४॥
राज्यं दत्वाऽश्वसेनोऽथ हस्तिसेनाय सूनवे ।
मुक्तिसीमन्तिनीदूतीं दीक्षां संवेगतोऽग्रहीत् ॥४३५॥
वामादेवीप्रभावत्योर्व्रतदानाद् मुदं व्यधात् ।
स्वामी सर्वत्र सदृशः किं पुनः स्वपरिच्छदे ? ॥४३६॥
आर्यदत्त आर्यघोषो वशिष्ठो ब्रह्मनामकः ।
सोमश्च श्रीधरो वारिषेणो भद्रयशा जयः ॥४३७॥
विजयश्चेति नामानो दशैते पुरुषोत्तमाः ।
पुरुषा' प्राञ्जलीभूय प्रोचिवांसः प्रभुं प्रति ॥४३८॥ (युग्मम्)
कषायविषयद्वेषकलुषीकृतचेतसः ।
तारकं त्वां प्रपन्नाः स्मो मद्यद्रुममिवाध्वगाः ॥४३९॥
प्रोद्विग्नाः स्मो जरामृत्युक्लेशकल्लोलसङ्कुलात् ।
भग्नपोता इव भवाम्भोधेर्भ्रमणतो वयम् ॥४४०॥
महाव्रतमहापोतदानत. किंकरानिमान् ।
संसाराब्धौ मज्जतोऽस्मान् प्रभो ! तारय तारय ॥४४१॥
इत्युक्तः पुरुषश्रेष्ठैरमीभिः परमेश्वरः ।
ददौ तेभ्यो महानन्दसत्यंकारमिव व्रतम् ॥४४२॥
चतुर्विधस्य सङ्घस्य स्थापनां विदधे विभुः ।
यस्मादेष भवद्भाविभूतानामर्हतां क्रमः ॥४४३॥

दिव्यरूपस्तनाथानां नाथः कथयति स्म सः ।
उत्पातो विगमो ध्रौव्यमित्यमीषां पदत्रयीम् ॥४४४॥ (युग्मम्)
तथाशु तदनुसृत्य द्वादशाङ्गीमसूत्रयन् ।
विस्तरेद् वाङ्मयं चित्ते तैलबिन्दुरिवाम्बुनि ॥४४५॥
दिव्यान् स्थालस्थितान् वासान् वासवैरुपढौकितान् ।
अनुज्येष्ठं गणभृतां मूर्ध्नि चिक्षेप दक्षराट् ॥४४६॥
द्रव्यैर्गुणैश्च पर्यायैरनुज्ञामानुयोगिकीम् ।
गणानुज्ञां च गणभृद्वरेभ्यो भगवानदात् ॥४४७॥
मुनिमूर्धन्यमूर्द्धानः सुरमूर्धाभिषिक्तकाः ।
तदा सद्गन्धसम्पूर्णैश्चूर्णैस्तूर्णमपूर्णयन् ॥४४८॥
धवलानि जगुस्तत्र सुरासुरनरस्त्रियः ।
नेदुर्दुन्दुभयो व्योम्नि प्रतिध्वानितदिग्मुखाः ॥४४९॥
कोलाहलं प्रकुर्वद्भिरमरैरसुरैर्नरैः ।
ताण्डवाडम्बरोऽमण्डि तदा तत्र महोत्सवे ॥४५०॥
अथैते साधुशार्दूलाः मुकुलीकृतपाणयः ।
तस्थुः शावा इव स्तन्यं प्रतीच्छन्तो गुरोर्गिरम् ॥४५१॥
पुनरासनमासीनस्तत्र चैत्यतरोरधः ।
विदधे देशनां शिक्षामयीं शिष्यपुरः प्रभुः ॥४५२॥
लोकतापापनोदाय वर्षति प्रभुवारिदे ।
घटिकेवाभवत् तूर्णं संपूर्णा तत्र पौरुषी ॥४५३॥
अथ स्थालीस्थितैर्दिव्यैरखण्डैस्तन्दुलैः कृतः ।
चतुष्प्रस्थ मितः काशीनगरीश्वरकारितः ॥४५४॥
सौरभ्यसभ्यः समवसरणं नागरैर्वृतः ।
प्रोद्गीतधवलः पूर्वद्वारेण प्राविशद् बलिः ॥४५५॥ (युग्मम्)
प्रभुं प्रदक्षिणीकृत्य सोऽक्षेपि पुरतो बलिः ।
स चान्तराले निपतन्नर्धोऽलायि सुधाशनैः ॥४५६॥
अर्धः समाददे काशिपतिनाऽवनिमागसौ ।
दायादैरिव जगृहे शेषः शेषजनैः पुनः ॥४५७॥
बलेः प्रभावतो रोगाः क्षीयन्ते पूर्वसम्भवाः ।
नवाः पुनर्न जायन्ते षण्मासावधि देहिनाम् ॥४५८॥
अथोदग्द्वारमार्गेण निर्ययौ जगदीश्वरः ।
सुरकोटिवृतः स्वर्णपद्मन्यस्तपदाम्बुजः ॥४५९॥
शालयो रत्नकनकमययोरन्तरस्थिते ।

ईशानदिग्गते देवच्छन्दे व्यश्राम्यदीशिता ॥४६०॥
अथो गणभृतां मुख्य आर्यदत्तो गणाधिप. ।
विदधे भगवत्पादपीठस्थो धर्मदेशनाम् ॥४६१॥
तस्मिस्तस्या देशनाया विरते गणभृद्वरे ।
नत्वा जिनं जनाः सर्वे ययुः स्थानं निजं निजम् ॥४६२॥
तत्तीर्थसम्भवः फणी फणाच्छत्रविराजितः ।
श्यामश्चतुर्भुजः कूर्मवाहनः कुञ्जराननः ॥४६३॥
दधत् सव्यापसव्येषु करेषु नकुलोरगौ ।
बीजपूरोरगौ चाभूत् पार्श्वाह्व. पार्श्वभक्तिभाग् ॥४६४॥ (युग्मम्)
तदा तत्तीर्थभूः पद्मावती देव्यभिधानत ।
स्वर्णवर्णा कुक्कुटाहिवाहनाऽत्युग्रशासना ॥४६५॥
सव्याभ्यामपसव्याभ्यां हस्ताभ्यां पाशपङ्कजम् ।
फलाङ्कुशे च दधती विभौ भक्ताऽभवद् भृशम् ॥४६६॥ (युग्मम्)
अनुकूलितोऽनुकूलैः पवनै· शकुनैरिव ।
ततोऽन्यत्र वृतो देवैर्व्यहरद् भगवानथ ॥४६७॥
वीक्ष्य माहात्म्यमेतस्य भर्तुर्विहरतो भुवि ।
द्रुमा अपि नतिं चक्रुः का कथा नरनाकिनाम् ? ॥४६८॥
वादिनामिव जातानि कण्टकानां मुखान्यधः ।
प्रभु प्रदक्षिणीचक्रुः पक्षिणोऽपि पदे पदे ॥४६९॥
योजनानां शते सांशे भर्तुर्विहरणावनेः ।
नस्युर्दुर्भिक्षमारीत्यवृष्टिरोगातिवृष्टयः ॥४७०॥
विभोर्विहारहर्यक्षक्ष्वेडाक्षुब्धा च तत्क्षणात् ।
स्वकीयपरचक्रोत्था याति भीतिः करेणुका ॥४७१॥
जघन्यत· प्रभोः पार्श्वेऽस्थात् कोटिस्त्रिदिवौकसाम् ।
तादृशां पर्युपास्त्ये यदौत्सुक्यं तादृशां भृशम् ॥४७२॥
अन्वितोऽतिशयैरेतैर्विश्वविस्मयकारिभि ।
व्यहरद्भगवान् भूमौ भव्यानुग्रहहेतवे ॥४७३॥
कठस्मयध्वंसवसन्तवीक्षादीक्षाग्रहज्ञानसुसंघवर्णनः ।
श्रीपार्श्वभर्तुश्चरितेऽत्र पञ्चमः सर्गः समाप्तो हृदयंगमार्थः ॥४७४॥

इति श्रीतपागच्छाधिराजभट्टारकसार्वभौमश्रीहीरविजयसूरिश्रीविजयसेनसूरिराज्ये समस्तसुविहितावतंसपण्डितकोटीकोटीरहीरपं० श्रीकमलविजयगणिशिष्यभुजिष्यहेमविजयगणिविरचिते श्रीपार्श्वनाथचरित्रे पञ्चमः सर्गः समाप्तः ॥५॥

अर्हम्

# अथ षष्ठः सर्गः ।

अथान्येद्युर्द्युसद्वृन्दवृतो व्रतिपुरन्दरः ।
पुण्ड्रदेशमलंचक्रे द्वीपान्तरमिवांशुमान् ॥१॥
इतश्चाजनि सौधश्रीहसितस्वःपुरी पुरी ।
ताम्रलिप्ताभिधा पूर्वदेशोर्वीमुखभूषणम् ॥२॥
तस्यां सागरदत्ताह्वः सार्थवाहसुतोऽभवत् ।
रोरभूरिव भाति स्म यूनो यस्य पुरः स्मरः ॥३॥
प्राग्भवे तु बभूवैष भूदेवोऽथास्य वल्लभा ।
अन्यासक्ताऽन्नगं कालकूटमस्यान्यदा ददौ ॥४॥
प्रसर्पता विषेणाशु क्षणेनास्य द्विजन्मनः ।
पिहिता चेतनाऽदभ्राभ्रेणेव शशिनः कला ॥५॥
भग्नसंज्ञस्तया दुष्टचेष्टयाऽक्षेप्यसौ बहिः ।
हा ! रक्ताऽपि विरक्ताऽपि स्त्री भुजङ्गीव भीषणा ॥६॥
अथैनं पतितं वीक्ष्य कापि वल्लवबल्लभा ।
संमूर्च्छितो विषेणैष इत्यऽज्ञासीत् स्वबुद्धित ॥७॥
जीवातुतुल्ययाऽजीवि तयाऽसावौषधैः क्षणात् ।
द्विजः स्वस्त्रीचरित्रेणोद्विग्नोऽभूत् तापसस्ततः ॥८॥
विप्रो विपद्य समये तत्रैव श्रेष्ठिभूरभूत् ।
दत्ता सागरदत्तेति पितृभ्यामभिधा शिशोः ॥९॥
दिनैः कतिपयैर्वर्धमानोऽसौ सौधमर्भकः ।
पुरीमासन्नदृष्टां स्वां पश्यन् प्राग् जनुरस्मरत् ॥१०॥
हृदि स्मरन्नसौ सौवप्रियाया दुष्टचेष्टितम् ।
विरक्तः सर्वथा स्त्रीषु पद्मिनीष्विव चन्द्रमाः ॥११॥
पतिव्रता मृदुस्वान्ता मृत्वा साऽऽभीरभामिनी ।
पुरे तत्रैव संजज्ञे कस्यापि श्रेष्ठिनः सुता ॥१२॥
अथैषाऽगण्यलावण्यदीर्घिका दीर्घलोचना ।
दृष्टा सागरदत्तेन प्रेममन्थरया दृशा ॥१३॥
तज् ज्ञात्वा जनकस्तस्य नामाऽयाचत तत्क्षणे ।
ददौ तां जनकस्तस्यास्तस्मै सार्थेशसूनवे ॥१४॥
सागरस्य परं तस्या दृष्टेस्तुष्टिर्न मानसी ।
अत पाणिग्रहे तस्या नादरं विदधे च सः ॥१५॥
भीतः पूर्वप्रियाभीत्या स तस्यां न मनो न्यधात् ।
सर्पदष्ट पुमान् नूनं रज्जोरपि बिभेति यत् ॥१६॥

एतद्व्यतिकरो ज्ञात्वा धीमत्या कन्यया तया ।
तस्मै प्रैषि लिखित्वैष श्लोकस्तं सोऽप्यवाचयत् ॥१७॥
गुणाढ्यानतिशीला च शुद्धवंशसमुद्भवा ।
पुण्यैरवाप्यते धाम्नि कान्ता हस्ते धनुर्लता ॥१८॥
सागरोऽपि वाचयित्वा श्लोकमुत्पन्नधीः सुधीः ।
लिखित्वा प्रेषयामास श्लोकं तस्यै पुनः स्वयम् ॥१९॥
राक्षसी च दुराचारा निम्नगेवातिनिम्नगा ।
क्रूरदृष्टिर्भुजङ्गीव रोचते मे न कामिनी ॥२०॥
इमं श्लोकं वाचयित्वा साऽपि प्रत्यग्रधीनिधिः ।
दध्याविदं कयाऽप्येष परामूतोऽस्ति योषिता ॥२१॥
तदुद्विग्नतया भीत्या नैवायं मामपीहते ।
चिन्तयित्वेत्यमुं श्लोकं तस्मै प्रैषीत् पुनः कनी ॥२२॥
एकस्या दोषतो नान्या त्याज्या भवति भामिनी ।
एकशः पयसा दग्धस्त्यजेदन्यत् पयो हि किम् ? ॥२३॥
श्लोकमिमं वाचयित्वा तच्चातुर्यचमत्कृतः ।
परिणीय च तां भोगान् बुभुजे स तया समम् ॥२४॥
निषेवमाणो विषयान् विषमेषुरिवापरः ।
अन्येद्युः सागरो लक्ष्मीकाङ्क्षी चिन्तितवानिति ॥२५॥
पद्मा पाथोनिधिः पुत्री तां ददाति स एव हि ।
मत्वेति सागरश्चक्रे सागरे गमनं तदा ॥२६॥
जलधौ गच्छतस्तस्य भग्नं प्रवहणं पथि ।
सप्तवारं स्वयं चायुर्बलाज् जीवन् विनिर्ययौ ॥२७॥
अद्य जात इवायातो निर्द्रव्यः सागरो गृहे ।
अभाग्योऽयमिति प्रोच्चैर्हास्यभूरभवत् पुरे ॥२८॥
पौरैः पदे पदे हस्यमानोऽसौ ध्यातवानिति ।
स एवायं विधिर्नूनं वैरं वहति वैरिवत् ॥२९॥
सप्तवारं पयोराशौ भग्नः पोतो ममैव हि ।
तस्करेणेव दैवेन तदहं मुषितोऽमुना ॥३०॥
निन्दन् दुर्दैवकाद् दैवं सदैवोद्विग्नमानसः ।
निर्विण्णो जीवितव्येऽपि निर्ययौ वेश्मतो निशि ॥३१॥
इतस्ततो भ्रमन्नेष उपकूपमुपेयिवान् ।
आकर्षन्तं पयः कूपात् पुमांसं चैकमैक्षत ॥३२॥
सप्तवारमपि कूपाद् नागादाकर्षतोऽस्य वाः ।

आगादष्टमवेलायामहो माहात्म्यमौद्यमम् ? ॥३३॥
निर्विण्णो व्यवसायेऽपि दध्यौ तद्वीक्ष्य सागरः ।
विद्याया इव पद्माया निदानं नूनमुद्यमः ॥३४॥
रत्नाकरे पुनर्यामि तदहं विहितोद्यमः ।
तस्माद्विभेति देवोऽपि यस्य स्यात् कियदेतिका ॥३५॥
मत्वैवं सिंहलद्वीपं प्रत्यचालीत् पयोनिधौ ।
प्रेरितः पवनैः प्राप रत्नद्वीपं क्रमाच्च सः ॥३६॥
तत्र रत्नानि भूरीणि संगृह्य स्वगृहोन्मुखः ।
अनुकूलानिलः सोऽब्धौ प्रतस्थे स्वपुरीं प्रति ॥३७॥
रत्नलुब्धै रत्नराशौ स क्षिप्तः कर्णधारकैः ।
धिक् श्रियं यद्वशा कुर्युर्नराः पापं निरर्गलम् ॥३८॥
फलकाऽऽधारतो नीरनिधेस्तीरमुपागतः ।
भ्रमन्नितस्ततः प्राप स पुरं पाटलापथम् ॥३९॥
अदर्शि श्वशुरेणाथ तत्रायातेन सागरः ।
नीतश्च स्वगृहं स्नानभुक्तिपूर्वं च सत्कृतः ॥४०॥
सागरोऽपि निजोदन्तं सर्वमाख्याथ तत्पुरः ।
अनुत्तानं कियत्कालं तस्थौ श्वशुरवेश्मनि ॥४१॥
तत्रास्य तस्थुषोऽभ्यागाद् थानमपि विधेर्वशात् ।
रत्नान्यादाय संमुक्तास्तेन निर्यामकाश्च ते ॥४२॥
तै रत्नैर्नित्यशः कुर्वन् व्यापारं वणिजां वरः ।
उद्यमद्रोः फलमिव घनं धनमुपार्जयत् ॥४३॥
कालेन कियता लक्ष्मीसागरः सागरस्ततः ।
पृष्टात्मश्वशुरः प्राप ताम्रलिप्तां निजां पुरीम् ॥४४॥
स्वधनेन धनाधीशान् स्पर्धयन् सागरोऽलभत् ।
पूर्यामभानं संमानमहो विभववैभवम् ? ॥४५॥
प्रीत्या बन्धून् मुनीन् भक्त्या कीर्त्या मार्गणघोरणिम् ।
प्रीणयन् सागरः प्राप फलं श्रीकल्पवीरुधः ॥४६॥
कर्तुकामो रत्नमयीं प्रतिमां शुभगाशयः ।
सोऽप्राक्षीत् सुहृदोऽन्येद्युर्देवः कः शिवदायकः ? ॥४७॥
मुख्यस्तेषु सुहृत्स्वेकः प्रवीणस्तमभाषत ।
कृत्वाऽष्टमं स्मर देवीं साऽऽख्यास्यति तवेप्सितम् ॥४८॥
तथैव विहितं तेन सागरेणादरेण तत् ।
ततः प्रभावतः प्रादुरासीच्छासनदेवता ॥४९॥

जैनबिम्बं सागराग्रे विमुच्यैवेत्यभाषत ।
भद्र ! भद्राय देवोऽयं सेव्यो धर्मधिया त्वया ॥५०॥
आख्यास्यन्ति गुणांस्त्वस्य तव जैनमुमुक्षव. ।
एवं व्याहृत्य सा देवी तिरोऽभूत् तस्य पश्यतः ॥५१॥
मुनीनामन्तिके गत्वा स तद्बिम्बमदीदृशत् ।
पप्रच्छैवमतुच्छात्मा यतींश्च विहिताञ्जलिः ॥५२॥
कोऽसौ देवो ? गुणाः केऽस्य ? किं स्याच्चैतस्य सेवया ? ।
कोऽस्य पूजाविधिः पूज्याः ! ? प्रसीद कथयन्तु मे ॥५३॥
साधवस्तत्पुरो जैनं धर्मं प्रोच्यैवमूचिरे ।
एतद्देवस्वरूपस्य जिज्ञासा चेत् तवास्ति भोः ॥५४॥
अलङ्करोति य' पुण्ड्रदेशं पार्श्वजिनेश्वरः ।
तत्र गत्वा तदापृच्छ सर्वं तं सर्वदर्शिनम् ॥५५॥
सागरोऽपि ययौ नाथसनाथपुण्ड्रनीवृतम् ।
तत्रैवैक्षत पार्श्वेशं चक्षुषोरमृताञ्जनम् ॥५६॥
नत्वा स्तुत्वा मुदोदञ्चद्रोमाञ्चः स्मितलोचनः ।
पृच्छति स्मैष तत्सर्वं स्वामिनं संशयापहम् ॥५७॥
तत्पुर. प्रभुरप्याख्यद् धर्मं साधुगृहस्थयोः ।
पुनरर्हद्गुणानर्हन् जगौ तत्स्थैर्यहेतवे ॥५८॥
नैवाज्ञानाद्यो दोषा यस्मिन् ध्वान्तमिवाहनि ।
प्रातिहार्यश्रिया यश्च सेव्यतेऽञ्जमिव श्रिया ॥५९॥
देवाधिदेवो देवोऽसौ सेवाप्रणतिभक्तिभिः ।
आराधितो भवेद् नूनं कल्पद्रुरिव शर्मणे ॥६०॥
वासैर्नैवेद्यपुष्पौघैर्दीपधूपैश्च नित्यशः ।
पूजा च लोकपूज्यस्य त्रिसन्ध्यं च विधीयते ॥६१॥
एवमर्हन्मुखोद्गीर्णं धर्ममाकर्ण्य सागरः ।
धौरेय इव धू र्कोटिं श्राद्धधर्ममुपाददे ॥६२॥
कृत्वा च प्रतिमां रत्नमयीमप्रतिमाकृतिम् ।
प्रतिष्ठां कारयामास विभवं वितरन् सुधीः ॥६३॥
ततोऽसौ चैत्यमुत्तुङ्गं विधाय प्रतिमामिमाम् ।
तत्र संस्थापयामास महोत्सवपुरस्सरम् ॥६४॥
सोऽनिशं भगवन्मूर्तिं पूजयन्नुपवैणवम् ।
धर्ममाराधयामास समीहिताहितेहया ॥६५॥
अन्येद्युः सागरस्यास्य हृदि वैराग्यमस्फुरत् ।

ततो विषमिवामंस्त सुखं सांसारिकं सुधीः ॥६६॥
भवभ्रमणतः खिन्नो निषण्णः संवराध्वनि ।
प्राव्राजीत् सागरः पार्श्वपार्श्वे सुखेन धीनिधिः ॥६७॥
पद्मानीव पद्मबन्धुः प्राणिनः प्रतिबोधयन् ।
व्यहरत् सपरीवारो नाथोऽप्यन्यत्र नीवृति ॥६८॥
चत्वारो जज्ञिरेऽथास्य स्वामिनः पार्श्ववर्त्तिनः ।
शिष्याः समये विजिताः क्षुधामुख्यैः परीषहैः ॥६९॥
कुलीना अपि ते दीक्षाकष्टैर्नष्टव्रताशयाः ।
प्रणम्य भगवत्पादानेवं भाषां बभाषिरे ॥७०॥
तन्निशम्य वचो भर्त्तुश्चिन्तयामासुराशु ते ।
यतित्वे कष्टमत्युग्रं दुःसाध्यं मादृशैर्जनैः ॥७१॥
गृहिणामपि भूपादिकरोपद्रवपीडनम् ।
तदेषातः करिष्यामो यत्र कष्टैर्विना शिवम् ॥७२॥
बौद्धानां दर्शने मुक्तिः सुखसाध्याऽस्ति सम्प्रति ।
यतस्तत्तीर्थकृद्देवः स्वमुनीनेवमादिशत् ॥७३॥
पयः पेयं प्रगे नित्यं शर्करामीलितं मुदा ।
भोज्यं मनोहरं भोज्यं प्राज्याज्यव्यञ्जनैर्युतम् ॥७४॥
एलाकर्पूरपानीयं पानीयमतिशीतलम् ।
नागवल्लीदलास्वादः कर्त्तव्यो मुखभूषणम् ॥७५॥
परिधेयानि वासांसि स्वच्छानि विशदानि च ।
शयनीये शयनीयमर्कतूलाभतूलिके ॥७६॥
द्राक्षा सितोपला चापि रक्षणीया मुखे निशि ।
महानन्दसुखावाप्तिः प्रान्ते चैतद्विधायिनाम् ॥७७॥
इत्येतद्दर्शने मुक्तिः सुखसाध्याऽस्ति निश्चितम् ।
गमथामः सुखेनातो गत्वा तत्रैव वामरान् ॥७८॥
तपस्या शक्यते धर्त्तुं नास्माभिर्मृदुलैरलम् ।
किं मृणालैर्गजालानलीला स्यात् कठिनैरपि ? ॥७९॥
कैषा कष्टोचिता दीक्षा मोक्षे वावश्यंभाविनि ।
पादावर्त्तप्रयासः किं ह्रतग्राह्ये जले शुभः ? ॥८०॥
एवं सम्भूय ते भूयो भूयः संचिन्त्य चेतसि ।
सुखावाप्त्यै ययुर्बौद्धदर्शने दर्शनोज्झिताः ॥८१॥
तथा तथागतप्रोक्तं तत्सर्वं प्रतिवासरे ।
'इष्टं च भिषजादिष्टमिति न्यायादमी व्यधुः ॥८२॥

अथो चतुर्णामप्येषां तस्थुषां बौद्धदर्शने ।
प्रान्ते चरमदेहत्वादिदं हृदि विजृम्भितम् ॥८३॥
हा ! मातृमुखमुख्यानामस्माकं कर्मगौरवम् ।
मरौ द्रुममिव प्राप्य मुक्तोऽस्माभिर्जिनो गुरुः ॥८४॥
दर्शनादेव देवस्य यस्य स्याद् मुक्तिसङ्गतिः ।
ईप्सितार्थप्रसूतेस्तत्पर्युपास्तेस्तु का कथा ? ॥८५॥
धिगस्मानैहिकसुखकृते चारित्रमोचिनः ।
पङ्किलांह्रिक्षालनाय निर्लोठितसुधाघटान् ॥८६॥
धिगस्मान् कृत्यदुष्कृत्यान् यदस्माकं तपो धनम् ।
प्रमाददस्युनाऽहारि सुप्तानामिव जाग्रताम् ॥८७॥
भवभ्रमणभीतानां भूतानां जगदीश्वरः ।
त्वमेव शरणं स्फातशीतार्त्तानामिवानलः ॥८८॥
मज्जतां भवपाथोधावस्माकं परमेश्वर ।
करावलम्बनं देहि धर्मो ह्येष महात्मनाम् ॥८९॥
एवं भावयतां तेषामभेदं चात्मपार्श्वयोः ।
अपूर्वं वीर्यमस्फुरत् कर्मेन्धनधनञ्जयः ॥९०॥
मूलादुन्मूल्य कर्माणि ध्यानादिति विभोरमी ।
कैवल्यं कलयामासुः कलितामलकेवलाः ॥९१॥
इतश्चाभूद्भुवि ख्याता नाम्ना नागपुरी पुरी ।
यत्पुरस्ताद् नागपुरी बभौ गोपालपूरिव ॥९२॥
तस्यां धनपतेः पुत्रो बन्धुदत्ताभिधोऽभवत् ।
दग्धे स्मरे स्थितेव यं रतिः प्राप्तपतिभ्रमा ॥९३॥
स युवा युवतीचक्षुश्चकोररजनीकरः ।
वसुनन्दसुतां चन्द्रलेखाख्यां परिणीतवान् ॥९४॥
साऽथ कङ्कणहस्तैव दृष्टा दुष्टेन भोगिना ।
निशायां प्राप पञ्चत्वं धिग्धिग् विलसितं विधेः ॥९५॥
तस्येति षट् प्रिया ऊर्ध्वमात्रा एव मृतिं ययुः ।
नाऽन्यां कन्यां पुनस्तस्मै ददौ कोऽपि विपात्मने ॥९६॥
यातं भुक्तं स्थितं सुप्तं सर्वं दुःखमय विदन् ।
बन्धुः किंकृत्यतामूढो गतसंज्ञ इवाभवत् ॥९७॥
अस्त्र्याऽनया बन्धुदत्तः क्षीयमाणो दिने दिने ।
श्यामपक्षेन्दुवत् जज्ञे कृशाङ्गश्च शनैः शनैः ॥९८॥
दुःखातुरं सुतं वीक्ष्य पितैतद्दुःखदुःखितः ।

पुत्रदुःखापनोदाय जगाद मधुरं वचः ॥९९॥
हे वत्स ! गच्छ यानेन सिंहलद्वीपमम्बुधौ ।
सोऽपि पित्राज्ञया प्राप द्वीपं द्राक् स्वसमीहितम् ॥१००॥
उपार्ज्य द्रविणं भूरि व्यापारैर्भूरिभिस्ततः ।
अचालीद् यानपात्रेण बन्धुर्निजां पुरीं प्रति ॥१०१॥
तस्याथ चलतो लोलैरनिलैः प्रतिकूलितम् ।
आनन्देन सहाम्भोधौ यानपात्रमभज्यत ॥१०२॥
गृहीत्वा दारुणः खण्डमखण्डेन निजौजसा ।
ब्रुडन्नितस्ततः प्राप स कूलं कूलिनीपतेः ॥१०३॥
स्वस्थीभूयाम्बुधेस्तीरे ततः सोऽचलदग्रतः ।
रत्नद्वीपं क्रमेणापदारोहच्च प्रमोदभाक् ॥१०४॥
रत्नैर्विनिर्मितं स्वर्णमाणिभिः कृततोरणम् ।
तत्रारूढो ददर्शैष प्रोत्तुङ्गं चैत्यमर्हतः ॥१०५॥
प्रासादान्तः प्रविष्टः स श्रीमन्नेमिजिनेशितुः ।
बिम्बमम्बुधरच्छायं वीक्ष्य प्रीतिं परां दधौ ॥१०६॥
नत्वा नेमिं स तत्रस्थान् निर्ग्रन्थानभ्यवन्दत ।
यतीनां जन्मतः सर्वं निजोदन्तं जगाद च ॥१०७॥
अथो कारुण्यपुण्याभिर्वाग्भिः प्रोक्तां तपस्विभिः ।
बन्धुदत्त उपादत्त विरतिं गृहमेधिनाम् ॥१०८॥
इतश्चित्राङ्गदो नाम खेचरः खेचरोत्तमः ।
गच्छन् गगनमार्गेण चैत्यं वीक्ष्योत्ततार सः ॥१०९॥
प्रणम्य प्रतिमां तत्र मुमुक्षूंश्च नभश्चरः ।
साधुभ्यो बुद्धतद्वार्त्तो बन्धुदत्तं गृहेऽनयत् ॥११०॥
धर्मबन्धुरसौ बन्धुर्माननीयो ममाधुना ।
इति ध्यात्वा व्यधात् सोऽस्य भक्तिं मज्जनभोजनैः ॥१११॥
सत्कृत्य स्वर्णरत्नाद्यैर्बन्धुमूचे नभश्चरः ।
भद्र ! साधर्मिकत्वेन पूज्योऽसि मम सर्वदा ॥११२॥
अतः किं ते प्रयच्छामि कन्यालावण्यमालिनीम् ।
विद्यां वा कामिति स्थानगामिनीं व्योमगामिनीम् ? ॥११३॥
श्रुत्वेति वचनं बन्धुदत्तश्चित्राङ्गदं प्रति ।
विद्या त्वद्देया मद्धस्येत्युक्त्वा तूष्णींपरोऽजनि ॥११४॥
ततश्चित्राङ्गदो दध्यौ नूनमेष समीहते ।
मत्तः कन्यां कमनीयां मेघाद् वारीव चातकः ॥११५॥

या स्यादायुष्मती कन्या साऽस्मै देया महात्मने ।
इति ध्यात्वा जगादैष खेचरः खेचरान् स्वकान् ॥११६॥
दृष्टाऽस्ति भरते क्षेत्रे कन्या काऽपीदृशी दृशा ।
छेत्तुं न शक्यते यस्या जीवितं त्रिदशैरपि ॥११७॥
इतो मृगाङ्कलेखाख्या तत्र चित्राङ्गदात्मजा ।
जगौ तातात्र कौशाम्बी पूरस्ति प्रथिता भुवि ॥११८॥
तस्यां च जिनदत्ताह्वः श्रेष्ठ्यस्ति श्रेष्ठतुष्टिभाक् ।
तस्यास्ति दुहिता प्रेयोदर्शना प्रियदर्शना ॥११९॥
यस्या दास्यऽभवन्नित्यं रती रूपश्रिया जिता ।
स्मरोऽपि स्वप्रियां दासीं प्रेक्ष्य यस्यां तिरोदधे ॥१२०॥
सार्द्धं निर्बाधतस्तस्याः कौशाम्बीमगमं पितः ।
तादृशीं स्त्रीं च यस्यां तां दृष्ट्वा तुष्टं मनो मम ॥१२१॥
अथैकं ज्ञानिनं कञ्चिदित्यपृच्छमहं तदा ।
अस्या मम वयस्याया भाविनः कति सूनव. ॥१२२॥
इत्युक्त स मुनिः स्माह भद्रेऽसौ प्रियदर्शना ।
समादास्यति तपस्यां सूत्वैकं सुतमुत्तमम् ॥१२३॥
अस्ति सा मत्सखी रूपश्रीपराभूतखेचरी ।
भूयादस्य प्रिया ज्ञानिवचःसत्यत्वकारणम् ॥१२४॥
चित्राङ्गदो निशम्यैतद्वचश्चतुरिमाञ्चितम् ।
तत्र द्राक् प्रेषयामास बन्धुं विद्याधरैः समम् ॥१२५॥
ते चाप्याकाशचारिणो सम्भूय बन्धुना सह ।
श्रयन्ति स्म तदुद्यानं नानाद्रुममनोहरम् ॥१२६॥
तत्र पार्श्वप्रभोश्चैत्यं प्रविश्य पुलकाङ्किताः ।
प्रणेमुः प्रतिमां बन्धुदत्ताद्यास्ते नभश्चराः ॥१२७॥
अथैकाग्रमनःस्थेषु स्थितेषु प्रतिमाग्रतः ।
जिनदत्तोऽभ्यगाच्चैत्यमर्चितुं मूर्तिमार्हतीम् ॥१२८॥
अर्हद्बिम्बमुखाम्भोजविन्यस्तनयनद्वयान् ।
संयोजितकरद्वन्द्वान् परमानन्दमेदुरान् ॥१२९॥
बन्धुदत्तमुखान् सिद्धानिमान् मूर्त्तिपुरःस्थितान् ।
दृष्ट्वाऽतिहृष्टवान् श्रेष्ठी जैनानां यदसौ गति. ॥१३०॥ (युग्मम्)
जिनदत्तो जैनमुख्यः स साधर्मिकवत्सल ।
भूयो भूयः समभ्यर्च्य तान्निनाय निजालयम् ॥१३१॥
परिचर्य यथौचित्य बन्धुमुख्यान् नभश्चरान् ।

अपृच्छज्जिनदत्तस्तानिहाऽऽगमनकारणम् ॥१३२॥
ततस्ते खेचराः प्रोचुर्नेजाऽऽगतिनिबन्धनम् ।
जग्मिवांसो वयं रत्नशैलं देवाञ्जिनंस्तवः ॥१३३॥
तत्र नत्वाऽऽर्हतीं मूर्त्तीं स्फूर्त्त्या साक्षादिवार्हतः ।
तपस्विनस्तपस्यन्तस्तत्रास्माभिः प्रणेमिरे ॥१३४॥
तत्रायममिलद् बन्धुदत्तो बन्धुरिवाङ्कवान् ।
सख्यकेऽस्माभिरत्यन्तमसौ साधर्मिकाग्रणीः ॥१३५॥
अतः साधर्मिकत्वेन सहाऽऽद्याथ समागताः ।
वयमत्र जिनं पार्श्वं प्रणन्तुं श्रावकोत्तम ! ॥१३६॥
उदन्तं बन्धुदत्तस्य जिनदत्तो निशम्य तम् ।
भ्रातरीव दधौ तस्मिन् साधर्मिकतया मुदम् ॥१३७॥
बाढमाग्रहमाधाय बन्धुदत्तोऽमुना ततः ।
उद्वाहितः सुतां रम्यदर्शनां प्रियदर्शनाम् ॥१३८॥
खेचरास्तेऽथ सम्भाष्य बन्धुं बन्धुरया गिरा ।
बन्धुना सत्कृताः प्रापुर्निजं स्थानं नमोऽध्वना ॥१३९॥
बन्धुः सार्धं स्वप्रियया भुञ्जन् भोगानहर्निशम् ।
तत्रस्थो गमयामास चतुरर्द्धीं कलामिव ॥१४०॥
गर्भे बभार सुस्वप्नसूचितं तत्प्रियाऽथ सा ।
बन्धोरप्यभवत् सौवपुरोत्कण्ठा महीयसी ॥१४१॥
अन्यदा श्वशुरं बन्धुरपृच्छत् स्वपुरोत्सुकः ।
संमान्य स्वर्णरत्नाद्यैरनुमेनेऽमुनाऽपि सः ॥१४२॥
ततः स्वप्रिययाऽऽपन्नसत्त्वया स तयाऽन्वितः ।
प्रस्थितः स्वपुरीं, जन्मभूमी मातेव वल्लभा ॥१४३॥
मार्गेऽथ गच्छतस्तस्याभ्यगात् पद्मासिधाऽटवी ।
व्यालभल्लुकभिल्लाद्यैर्भीष्मां तां प्रविवेश सः ॥१४४॥
त्रिदिन्या तामरण्यानीमुल्लङ्घ्याऽलङ्घ्यसाहसः ।
कस्यापि सरस्तीरमाससाद क्रमेण सः ॥१४५॥
हुंकारैश्चित्रचित्कारैः पूरयन्तोऽटवीमपि ।
पादपातैर्धुरापातैः पातयन्तो द्रुमानपि ॥१४६॥
भृशोत्तेजितकुन्तानां कोटिभिर्दृप्तवर्मकाः ।
अधिज्यीकृतकोदण्डमण्डितसायकाः पुनः ॥१४७॥
अथ स्वैरं स्थिते सार्थे तस्मिन्नाकस्मिकागमाः ।
चण्डसेनाह्वपल्लीशपतिस्तत्रापतद् निशि ॥१४८॥(त्रिभिर्विशेषकम्)

दुर्वचांसीव पिशुनैर्मुञ्चद्भिर्बाणधोरणिम् ।
भिल्लैस्तैर्जगृहे बन्धोः सर्वस्वं प्रियया समम् ॥१४९॥
अस्या दास्या च तस्याग्रे प्रोचे चकितचेतसा ।
कौशाम्ब्यां जिनदत्तस्य सुतैषा प्रियदर्शना ॥१५०॥
समाकर्ण्येति पल्लीशः सशल्य इव मूर्छितः ।
लब्धसंज्ञो जगौ म्रास्यद्दर्शनां प्रियदर्शनाम् ॥१५१॥
मत्तो मा त्वं भयं कार्षीर्भद्रेऽसि भगिनी मम ।
यदपारोपकारैककर्तुस्त्वमसि पुत्रिका ॥१५२॥
शृणु सुभ्रु ! पुरा क्रूरैस्तस्करैः परिवारितः ।
कौशाम्ब्यामगमं चौर्यं कृत्वा च बहिरागमम् ॥१५३॥
प्रकुर्वन् मधुनः पानं सोपानं व्यसनौकसः ।
कोट्टपालैरहं दृष्टो धृत्वा बद्धश्च बन्धनैः ॥१५४॥
नीयमानो वधायाऽहं तैरधोनयनस्ततः ।
त्वत्पित्रा जिनदत्तेन दृष्टः पथि दयालुना ॥१५५॥
ततो विज्ञप्य विज्ञप्य पुरस्तात् पृथिवीपतेः ।
मोचितोऽहं वधात् तेन स्वात्मा चापि भवभ्रमात् ॥१५६॥
किङ्करवत् किं करोमि कृत्यं तव भगिन्यतः ? ।
इत्युक्ता सा जगादैनं चण्डसेनं पुरःस्थितम् ॥१५७॥
वियोजितं भवद्भिर्लैर्वल्लभं मम मेलय ।
पतिव्रताया यत् पत्युः प्रतिपत्तिः परं धनम् ॥१५८॥
चण्डसेनोऽथ तां स्वान्ते स्वसारमिव संविदन् ।
गवेषणाय तद्भर्तुर्निर्ययौ स्थानत. स्वयम् ॥१५९॥
परिभ्रमन् गिरे. तुण्डे कन्दरे काननेऽध्वनि ।
नाऽपश्यद् बन्धुदत्तं स घनाच्छादितचन्द्रवत् ॥१६०॥
अप्राप्तबन्धुदत्तः स आययौ स्वनिकेतने ।
बन्धुदत्तप्रियासाक्षं प्रतिज्ञामकरोदिति ॥१६१॥
बन्धुदत्तं नाऽऽनयामि षण्मासान्तरेऽहं यदि ।
प्रविशामि तदा ज्वालाजिह्वे ज्वालाकरालिते ॥१६२॥
प्रतिज्ञायेति पल्लीराड् भिल्लान् स्वीयानितस्ततः ।
प्रेषयामास तद्भर्तुर्गवेषणकृते द्रुतम् ॥१६३॥
पुलिन्द्राः कूलिनीकूलशैलपल्वलभूमिषु ।
बन्धुं गवेषयामास रजसीव महामणिम् ॥१६४॥
भ्रान्त्वा भ्रान्त्वाऽनिशं खिन्नास्तथाप्यापुर्न तेऽथ तम् ।

वीक्षापन्नमुखा वीक्ष्याऽऽययुः स्वस्वामिनोऽन्तिके ॥१६५॥
विना वन्धुं समायातान् वीक्ष्य तान् शवरानथ ।
इति दध्यौ स पल्लीशस्तत्पीडापीडितो भृशम् ॥१६६॥
वियोगविधुरो वन्धुर्नूनमात्तमृगीदृशः ।
झम्पापातादिना जज्ञेऽभ्यागतः यमवर्त्मनः ॥१६७॥
प्रतिज्ञादिवसाद् मासु चतुर्षु गतवत्स्वथ ।
अचिन्तयच्चण्डसेनश्चिन्तया चञ्चलाकृतिः ॥१६८॥
प्रसूतायां वन्धुदत्तस्त्रियामथ तदुद्वहम् ।
निनाय पुरि कौशम्ब्यां विधास्ये स्वं वचस्ततः ॥१६९॥
इति चिन्तातुरे तस्मिंस्तच्चेटिका समाययौ ।
ब्रुवाणेति विभो ! सूता सुतं सा प्रियदर्शना ॥१७०॥
तस्मात्त्येनां चण्डसेनश्चण्डसेनाभिधां सुरीम् ।
गोत्रजां विधिनाऽऽराध्याभिदधे प्राञ्जलिः पुरः ॥१७१॥
चेद् मासं क्षेममेतस्या मत्स्वसुः साङ्गजन्मनः ।
पुरुषैर्दशभिर्देवि ! तदा दास्ये वलिं तव ॥१७२॥
तस्याः क्रमेण क्षेमेणागादह्नां पञ्चविंशतिः ।
ततः पल्लीपतिर्वल्युचितानानाययन् नरान् ॥१७३॥
इतः प्रनष्टसर्वस्वो वन्धुदत्तोऽध्वनि स्मरन् ।
प्रियाविरहजं दुःखं हिन्तालवनमभ्यगात् ॥१७४॥
अनच्छच्छदनच्छायं तत्र सप्तच्छदं द्रुमम् ।
दृष्ट्वाऽजनिष्ट तस्योच्चैः प्रियाविरहवेदना ॥१७५॥
प्रिये ! पित्रोर्वियोगार्त्या विधुरस्य ममाधुना ।
त्वद्वियोगो हि दग्धस्य क्षारक्षेपोपमोऽभवत् ॥१७६॥
मां विना हि तवाशर्ममर्म भावीति वेद्म्यहम् ।
गते हि पद्मिनीवन्धौ पद्मिनीनां कुतः सुखम् ? ॥१७७॥
हा ? कुरङ्गाक्षि ! दुष्प्रापदर्शने ! प्रियदर्शने ! ।
क वासस्ते पितुर्धाम्नि क पल्ल्यां भिल्लवेश्मनि ? ॥१७८॥
अथ त्वद्विरहार्तोऽहं जीवंस्तिष्ठामि यत्प्रिये ! ।
त्वन्नामैकमहामन्त्रस्मरणं तत्र कारणम् ॥१७९॥
यावद् वाष्पितनेत्रोऽसौ विलपति मुहुर्मुहुः ।
याति सप्तच्छदं तावदगाच्चैकं सरः पुरः ॥१८०॥
तटाकतटनिकटे पर्यटन्तं पुनः पुनः ।
स मरालं स्वमराल्या वियुक्तं निरवर्णयत् ॥१८१॥

वीक्ष्यैनं दुःखितं हंसं दुखं तस्याऽभवद् भृशम् ।
परस्मिन् दु.खिते दृष्टे स्युः सन्तोऽपि हि तन्मया. ॥१८२॥
इतः पयोजिनीपत्रपिहितां प्रेयसीं निजाम् ।
संवीक्ष्य तस्या अभ्यर्णे रंहसा हंस आययौ ॥१८३॥
इमौ सम्मिलितौ दृष्ट्वा ध्यातवानेवमिभ्यभूः ।
जीवतां खलु जन्तूनां संगमो ह्यनयोरिव ॥१८४॥
व्रजामि तदहं जीवन्निजां नागपुरीं तदा ।
अथवा गमनेनाऽलं तत्र मे गतसम्पदः ॥१८५॥
कोशाम्ब्यामपि नो यामि विना च प्रियदर्शनाम् ।
मातुलं तद्विशालायां धनदत्त व्रजाम्यहम् ॥१८६॥
तस्माद्विभवमादाय भिल्लभर्त्तुः प्रदाय च ।
मोचयामि प्रियां तस्माद् मृगिकां मृगयोरिव ॥१८७॥
समर्ज्य द्रविणं भूयो भूयोभिर्व्यवसायकैः ।
मातुर्भ्रातुरहं दास्ये का त्रपा मेऽत्र कर्मणि? ॥१८८॥
मत्वेत्येव विशालायामचलद् निजमातुलम् ।
गत्वा गिरिस्थलं यक्षधाम्नि व्योषितवान् निशि ॥१८९॥
एकस्तत्रामिलत् पान्थस्तस्य तं पृष्टवांश्च सः ।
कुतोऽभ्यागाद्? विशालाया इत्यध्वन्योऽभ्यधादसौ ॥१९०॥
श्रुत्वेति वचनं हृष्टः पृष्टवान् पथिकं पुन. ।
धनदत्ताभिधस्यास्ति कुशलं मातुलस्य मे ॥१९१॥
अध्वनीनोऽभिधत्ते स्म बन्धुदत्तं मुदञ्चितम् ।
धनदत्तोऽगमद् ग्रामं व्यवसायार्थमन्यदा ॥१९२॥
तस्य ज्येष्ठसुतः स्वीयपत्न्या क्रीडन्निरङ्कुशः ।
अवाक्षासीद् मदोन्मत्तो भूपं गच्छन्तमग्रतः ॥१९३॥
तदवज्ञां च विज्ञाय चुकोप क्षितिपस्तदा ।
अवज्ञा हि क्षितीशानां कोपाग्नाविन्धनायते ॥१९४॥
भूपेन यमरूपेण क्रोधेन निदधेऽथ स· ।
सकुटुम्बो महाकारागृहे निगृह्य च पुनः ॥१९५॥
आगाद् धनोऽथ विज्ञातप्रवृत्ति. स्वाङ्गजन्मनः ।
सकुटुम्बं सुतं राज्ञे दत्त्वा दण्डममोचयत् ॥१९६॥
तद्धनार्थं धनदत्तो बन्धुदत्तं स्वसुः सुतम् ।
प्रतियाचयितुं नागपुर्यां ह्योऽचलदालयात् ॥१९७॥
निशम्यैवं बन्धुदत्तो ध्यातवान् स्वं मनस्यदः ।

अरे ? दैव ! सदैवाऽसि मे निष्कारणवैरभाग् ॥१९८॥
यदर्थयाम्यहं सोऽभूद् मातुलोऽपि धनोज्झितः ।
तद् मामेव सदैवायं दैवः पश्यति पृष्ठगः ॥१९९॥
दैवस्य नाऽथवा दोषः कर्ममर्मानुगामिनः ।
सम्पदो विपदश्चापि मता हिमरुचेरिव ॥२००॥
किन्त्वथात्रैव तिष्ठामि यावन्नायाति मातुलः ।
यद्ध्वाऽसौ नागपुर्यां मत्वैवं तत्र सोऽवसत् ॥२०१॥
पञ्चभिः दिवसैः स्तोकलोकसार्थे. पथि व्रजन् ।
तत्रागाद् धनदत्तोऽपि बन्धुदत्तस्य तस्थुषः ॥२०२॥
तस्मिन्नेव देवकुले विश्रान्तं तं धनं प्रति ।
बन्धुः स्माह कुतो यूयमायाताः कुत्र यास्यथ ? ॥२०३॥
आयाताः स्मो विशालाया नागपुर्यां यियासवः ।
इत्यूचानं धनं सोऽवक् कः सम्बन्ध्यास्ति तत्र वः ॥२०४॥
विद्यते बन्धुदत्ताह्वस्तत्र मत्स्वसुरङ्गजः ।
यामि तं भूभुजा दण्डावशेषधनलिप्सया ॥२०५॥
एतया वार्त्तया बन्धुरुपलक्षितमातुलः ।
मातुलं स्माह तत्रैव यियासा वर्त्तते च मे ॥२०६॥
अप्रकाश्य स्वमात्मानं मित्रमित्यभिधाय च ।
बन्धुस्तं तद्दिनं तत्र व्यश्रामयद् निजान्तिके ॥२०७॥
अथ प्रभातसमये बन्धुदत्तोऽङ्गचिन्तया ।
उत्थाय स्वयमेकाकी प्रययौ तटिनीतटे ॥२०८॥
तत्र स्वर्णमणीपूर्णां दृष्ट्वा पेटां भुवोऽन्तरे ।
उच्चखान स तां भूम्या मूर्तां मूर्त्तिमिव श्रियाम् ॥२०९॥
बन्धुस्ताम्रमयीं पेटीं तामादाय पिधाय च ।
अभ्यगाद् मातुलं स्वं च नाम प्राकाशयत् ततः ॥२१०॥
अन्यां सर्वां भवद्वार्त्तामजानं पान्थतः पुरा ।
अतस्त्वत्सुकृतैः प्राप्तां पेटीमेनां गृहाण भोः ! ॥२११॥
धनेनैतेन राज्ञः स्वकुटुम्बं मोचयाधुना ।
निशम्येति धनोऽवादीद् काऽसौ दशा तवेदृशी ? ॥२१२॥
अत्यन्तनिपतद्बाष्पबिन्दुच्छन्नमुखच्छविः ।
अभ्यधाद् बन्धुदत्तोऽपि स्वोदन्तं तत्पुरोऽखिलम् ॥२१३॥
पुनः प्राह धनो बन्धुं वत्स ! द्रव्येण भूरिणा ।
प्रागहं मोचयिष्यामि भिल्लेभ्यो वल्लभा तव ॥२१४॥

अथोद्घाटितनिस्त्रिंशा निस्त्रिंशाः क्ष्मापपूरुषाः ।
दधुर्दस्युधियाऽन्यान्यान् न्यक्षान् यक्षालयोषितान् ॥२१५॥
जामेयमातुलौ तौ च संभ्रान्तौ भटभीतितः ।
उपचैत्यं निजं द्रव्यं क्षिपन्तौ तैर्निभालितौ ॥२१६॥
पृष्टौ पुनर्भटैरेतत् किं च ताविदमूचतुः ।
स्वीयं धनं भवद्भीत्या पिदध्वो वसुधातले ॥२१७॥
विहस्तौ तौ च पान्थास्ते सर्वेऽपि क्ष्माभुजो भटैः ।
निन्यिरे मन्त्रिणोऽभ्यर्णं प्रैक्षिष्ट सचिवोऽथ तान् ॥२१८॥
दृष्टिचेष्टाविदा तेन मन्त्रिणा दृष्टदृष्टयः ।
पान्था मुमुचिरे सर्वे ररक्षाते इमावुभौ ॥२१९॥
तावूचे सचिवः कस्य द्रव्यमेतच्च कौ युवाम् ? ।
इत्युक्तावूचतुस्तौ च भयभ्रान्तविलोचनौ ॥२२०॥
आवां पुरि विशालायामुभाविभ्यतनूद्भवौ ।
व्यापारार्थेऽर्थमादाय प्रस्थितौ लाटनीवृतम् ॥२२१॥
करण्डे वित्तमेतन्नौ पूर्वजैः पूर्वमर्जितम् ।
इत्युक्ते मन्त्र्यवक् पेटीमध्ये वस्तु किमस्ति वाम् ? ॥२२२॥
अभिज्ञानानभिज्ञौ तौ जज्ञाते दोपसंजुषौ ।
पेटीमुद्घाटयामास तत्र मन्त्रीश्वरः स्वयम् ॥२२३॥
तन्मध्याद् निर्गतं भूपाऽभिधानकं विभूषणम् ।
निध्याय धीसखो दध्याविदमात्मीयमेव हि ॥२२४॥
मध्यात् प्राग्गतवस्तूनामेतदेतौ हि जहतुः ।
मत्वैवमनयोश्चण्डं दण्डं मन्त्रिवरो व्यधात् ॥२२५॥
सत्यं ब्रूतं कुतः प्राप्ता युवाभ्यामियमिन्दिरा ? ।
एषा श्रीर्युवयोर्नूनमित्युक्तौ ताववोचताम् ॥२२६॥
नावामतः परं विद्मो ब्रुवाणाविति तावुभौ ।
मन्त्री चिक्षेप कारायां विधायात्युग्रनिग्रहम् ॥२२७॥
तथैव तस्थुषोस्तत्र तयोश्चिन्तार्त्तचित्तयोः ।
षण्मासी प्रययौ वर्षप्रमाणदिननिर्मिता ॥२२८॥
अथैको लिङ्गिवेषेण पर्यटन् विटपूरुषः ।
निरुध्धे धीधनैः क्रुद्धैः क्ष्मापपत्तिभिरन्यदा ॥२२९॥
अमीभिर्लक्षणैर्नूनमयमेव मलिम्लुचः ।
इति बुद्ध्या धृतोऽसौ तैरर्पितश्चास्य मन्त्रिणः ॥२३०॥
अमात्योऽपि निभाल्यैतं जरन्मार्जारचक्षुषम् ।

अयं च तस्करः क्रूरः स्वयं निर्णीतवानिति ॥२३१॥
तापसानां कुतो वित्तं प्रभूतमिदमीदृशम् ? ।
तन्नूनममुनैवैषा मुषिता निखिला पुरी ॥२३२॥
धीसखोऽथ तद्वधार्थं स्वनरानेवमादिशत् ।
विडम्ब्य बहुशः पुर्यां शूलाग्रेऽसौ निधीयताम् ॥२३३॥
बाढं विडम्बयामासुर्दस्युं ते मन्त्रिणो नराः ।
भ्रामयित्वा पुरीमध्ये निन्युश्च पुरतः पुरः ॥२३४॥
आरक्षकैर्नीयमानो वधार्थं वधभूमिकाम् ।
अनुतापपरश्चौरश्चिन्तयामास चेतसि ॥२३५॥
अद्य तस्य मुनेर्वाचः समीचीनाः प्रजज्ञिरे ।
वाचंयमानां वाचो यदमोघाः पार्थपत्रिवत् ॥२३६॥
ममाद्यागतमेवास्ति मरणं दुःखकारणम् ।
तद् धनानि ददाम्यद्य यान्यादत्तानि प्राग् मया ॥२३७॥
ध्यात्वेति धृतधैर्योऽसौ प्राह पाटच्चरश्चरान् ।
चौरोऽहं च मयाऽमोषि नगरी भवतामसौ ॥२३८॥
किञ्चन रत्नादिकं यद् मया च मुषितं पुरा ।
समग्रं गिरिगह्वरकुञ्जादौ वोऽस्ति तद् धनम् ॥२३९॥
तद् गृह्णीत निगृह्णीत पश्चाद् मां परमोषिणम् ।
श्रुत्वेति कौतुकालोको लोकः सर्वो विसिष्मिये ॥२४०॥
आरक्षकनरास्ते तं स्तेनं संमुच्य वर्त्मनि ।
राज्ञो व्यज्ञापयन् प्रीतिकरं तत् तास्करं वचः ॥२४१॥
आनायितो महीशेन तस्करो वेषमस्करी ।
सोऽप्युवाच यथास्थाने स्थितं लोप्त्रमिलापतेः ॥२४२॥
चौरोक्तं भूमितः सर्वं द्रव्यं भूपः समाददे ।
न ददर्श च तत्रैकं करण्डं प्राग् गतं निजम् ॥२४३॥
प्रोवाच पुनरुर्वीशः परिव्राट्परिपन्थिनम् ।
अमीस्ते वद भद्राथ वेषः किमु क्रियेतरः ? ॥२४४॥
सोऽथाऽऽह श्रूयतां स्वामिन्नस्ति संपत्तिपूरितम् ।
अचलाचलहृक्पुण्ड्रं नगरं पुण्ड्रवर्धनम् ॥२४५॥
पुरे तत्र द्विजन्माङ्गजन्माऽहं श्रीधराभिधः ।
अपश्यं पश्यतोहरबुद्ध्या निगडितान् नरान् ॥२४६॥
दृष्ट्वा तानहमवददेवं दण्डितधारिति ।
अमी निहन्यन्तां पापकारिणश्चौर्यकारिणः ॥२४७॥

तदाकर्ण्य जगदेको हा हा कुर्वन् मुमुक्षुराट् ।
धिग् ज्ञानं परस्मिन् यदसद्दूषणरोपणम् ॥२४८॥
श्रुतसाधुवचाः साधुमपृच्छं विनयादहम् ।
हंहो मुने ! किमज्ञानं किं चाऽसद्दूषणार्पणम् ? ॥२४९॥
बुद्धं मया चरित्रेण, ततोऽभाणि मुमुक्षुणा ।
हन्यन्तामित्यमी दुष्टा इत्युक्त्या तव मूर्खता ॥२५०॥
कर्मभिः प्राक्कृतैर्नूनं हन्यन्तेऽत्र नरा अमी ।
आत्मभिर्भुज्यतेऽवश्यं कर्म प्राक्कृतमन्वहम् ॥२५१॥
भद्र ! त्वमपि प्राक्कर्मफलभाग् भविता खलु ।
इत्युक्तिभीरुको भिक्षुमप्राक्षं प्राक्कृतं पुनः ॥२५२॥
तुष्टदृष्टिरभाषिष्ट स्पष्टवागिति मां मुनिः ।
अभूत् क्षेत्रेऽत्र भरते गर्जनाह्वं महापुरम् ॥२५३॥
चन्द्रदेवाभिधस्तत्र पुरे भूदेवभूर्भूः ।
योगात्मेत्यपरः कश्चित् तत्राभूल्लोकविश्रुतः ॥२५४॥
तत्रैव वीरमत्याख्या श्रेष्ठिनो दुहितोद्धता ।
स्वेच्छादीक्षाविधौ दक्षं वैधव्यं साऽऽपदन्यदा ॥२५५॥
ततः साऽभूत पुरे तत्र नित्यं स्वैरविहारिणी ।
स्वैर्ये यन्मरणं पत्युः सितापातः स गोरसे ॥२५६॥
भावयन्ती भ्रुवोर्भङ्गान् कामिहृन्मृगवागुरा ।
नगान् स्मरमयांश्चक्रे कटाक्षैरेव पांशुला ॥२५७॥
गाढोद्बन्धितवक्षोजा स्मितधौतरदच्छदा ।
हस्तिनीव मदोन्मत्ता बन्धुकी बन्धुराऽभ्रमद् ॥२५८॥
भ्रमन्ती स्वैरिणी स्वैरं पुरे सा सिंहलाभिधम् ।
पुष्पचापमिवापश्यद् देवकं पुष्पजीविनम् ॥२५९॥
आसक्ता साऽभवत् तस्मिन् कान्तिः कान्तिपताविव ।
अवर्धिष्ट परा प्रीतिस्तयोर्मिलितयोर्मिथः ॥२६०॥
रहो रहः सेवमाना मालिना कुलटोदिता ।
सुभ्रु ! त्वत्पितरावत्र विघ्नं नौ क्रीडतोः सतोः २६१॥
मन्त्रयित्वेति तौ रात्रावज्ञातौ स्वपरिच्छदैः ।
जग्मतुर्नगरे क्वापि स्वेच्छाशर्माभिलाषिणौ ॥२६२॥
तस्मिन्नहनि योगात्मा ययौ सोऽन्यत्र कुत्र चित् ।
अथैषा प्रासरत् पुर्यां वार्ता तैलमिवाम्भसि ॥२६३॥
यत् सा श्रेष्ठिसुता कामकोलपल्वलकर्दमा ।

प्रययौ केन चित् सार्कं स्वैरिणीनां शिरोमणिः ॥२६४॥
तदा त्वं चत्वरे पुर्यां पौराणामग्रतोऽलपः ।
नूनं योगात्मना सार्धं सा ययौ स्वैरचारिणी ॥२६५॥
अश्रान्तं पुरि तस्यां तत् सर्वत्र ज्ञापितं त्वया ।
कर्म बद्धं ततो लोहगोलकल्पं त्वया घनम् ॥२६६॥
कर्मणा तेन जातस्त्वं जम्बुकः क्वापि कानने ।
स्तभोऽभूस्त्वं ततो मृत्वा ततोऽमूर्गणिकात्मजः ॥२६७॥
मुखमौखर्यदोषेण सर्वत्र मृतिभागभूः ।
इदानीं त्वमभूर्भूमीदेवभूर्विश्रुतैकभूः ॥२६८॥
तत्कर्ममर्मणां शेषस्तवाद्यापि हि विद्यते ।
इति तस्य मुनेर्वाग्भिर्भीतोऽहं भवसम्भ्रमात् ॥२६९॥
तत् कर्म स्वं निराकर्तुं गुरोः कस्यापि सन्निधौ ।
आत्ततापसदीक्षस्तद्भक्तिप्रह्वोऽभवं भृशम् ॥२७०॥
नित्यं ममाऽऽन्तरीं भक्तीं दृष्ट्वा तुष्टमना गुरुः ।
विद्ये प्रददौ तालोद्घाटिनीं चाभ्रगामिनीम् ॥२७१॥
दक्षधी. शिक्षयामास गुरुर्मामिवमेकदा ।
भाषणीया मृषाभाषा प्राणान्तेऽपि हि न त्वया ॥२७२॥
मृषाश्चेदनृतं तर्हि गत्वा नाभिमिताम्भसि ।
सहस्रमष्टाग्रं ह्यद्यविद्ययोरनयोः स्मरेः ॥२७३॥
न प्रयुज्या त्वया विद्या विना धर्माङ्गरक्षणम् ।
सुखेन स्वरलक्ष्मके शिक्षां दत्त्वेति मे गुरु ॥२७४॥
प्राप्यानवद्ये ते विद्ये सद्यः प्रत्ययपूरिके ।
अपालयं कियत्कालं तपस्यां तापसीमहम् ॥२७५॥ .
क्रमेण कर्मवशतो व्यसनासक्तिमानहम् ।
उत्पथ्य इव गुरूक्तं मार्गं हित्वाऽन्यतोऽचलम् ॥२७६॥
अन्यदोद्यानमध्यस्थो मद्रूपप्राप्तकौतुकै. ।
स्त्रीजनैरहमेकाक्यऽप्रच्छि वैराग्यकारणम् ॥२७७॥
तदाहमलपं प्राणप्रियायाः सहसा मृतिः ।
मृत्तिकेव घटे दीक्षाग्रहणे कारणं मम ॥२७८॥
मृषाभाषां वभाषेऽहमित्यात्मौन्नत्यहेतवे ।
नाप्यकार्षं गुरुप्रोक्तं प्रायश्चित्तमहं च तत् ॥२७९॥
स्तेयं विधाय तेनाद्य चावासे पृथिवीपतेः ।
गच्छतो नाऽस्फुरद्विद्या सा मम व्योमगामिनो ॥२८०॥

यथारूपं स्वरूपं स्वमेवमुक्तवतो मम ।
विधेहि दण्डमुचितं नीतिरेषा हि भूभुजाम् ॥२८१॥
चौरं पुनर्जगौ राजा भद्र ! सूनृतवागसि ।
रत्नालङ्कारकलिता पेट्येका नाऽऽप्यते परम् ॥२८२॥
प्रोचे चौरोऽचलाशङ्कं पेटीं तां निहितां वने ।
ललौ कोऽप्यध्वगो दैवदृष्टिपातैः पवित्रितः ॥२८३॥
तं मुमोच नृप' सत्यभाषिणं परमोषिणम् ।
सत्यवाक्कल्पवल्ल्या यत् फलमस्वल्पवैभवः ॥२८४॥
मन्त्री जुहाव कारातस्तौ करण्डहरौ नरौ ।
पृष्टाववाचतां सत्यं वृत्तान्तं तं यथाभवम् ॥२८५॥
मन्त्रिणा मुमुचाते तावस्थिचर्मावशेषकौ ।
निन्दन्तौ प्राक्कृतं कर्म चेलतुस्तौ ततोऽन्यतः ॥२८६॥
इतश्च बलिनरार्थं पल्लीशप्रेषितैर्नरैः ।
गृहीतौ तौ च तैः त्रस्तकांदिशिकमृगाविव ॥२८७॥
बल्यानीतनरेष्वेतौ चिक्षिपाते चरैस्तदा ।
आनीय चण्डसेनाय देव्यास्तस्या गृहोदरे ॥२८८॥
चण्डधीश्चण्डसेनोऽथ चण्डिकालयमीयिवान् ।
सबालाऽगाच्च पल्लीशावरोधा प्रियदर्शना ॥२८९॥
ततः प्राणमयत् पल्लीपतिस्तां प्रियदर्शनाम् ।
सुत चादाय पाणिभ्यां देव्याग्रेऽमुमलोठयत् ॥२९०॥
दुष्टाकृतिमिमां देवीं कर्मेदं चातिनिष्ठुरम् ।
नेक्षितुं युज्यते बन्धुपत्न्या श्रेष्ठिकुलोद्भुवः ॥२९१॥
ध्यात्वेत्यऽधारयत् तस्या मुखाग्रेऽसौ निजां पटीम् ।
नरमानाययच्चैकं पल्लीराड् बलिहेतवे ॥२९२॥
रक्तै समभ्यर्च्य चण्डश्चन्दनैश्चण्डिकामथ ।
असिं निष्काशयामास कोशाद्रन्ध्रादिवोरगीम् ॥२९३॥
अथ दध्यौ बन्धुपत्नीति धिग् मां निर्घृणाग्रणीम् ।
जायते मत्कृते यस्मादकृत्यमिदमीदृशम् ॥२९४॥
बन्धुदत्तोऽपि निर्णीतमरणः स्मरणं व्यधात् ।
ध्वस्तमोहप्रपञ्चानां पञ्चानां परमेष्ठिनाम् ॥२९५॥
श्रुत्वा नमस्क्रियां बाढोच्चारितां प्रियदर्शना ।
जातप्रियस्वनाऽऽशङ्का तामपाकारयत् पटीम् ॥२९६॥
सा पश्यति स्म प्राणेभ्यो वल्लभं निजं वल्लभम् ।

रवेरिवाब्जिनी तस्य दर्शनात् तुष्यति स्म च ॥२९७॥
वीक्ष्य सा नयनानन्ददायिनं प्राणवल्लभम् ।
प्रोचे पल्लीपतिं पाणौ विश्राणमसिवल्लरीम् ॥२९८॥
आतर्वधार्थमानीतो योऽसौ त्वत्पुरतो नरः ।
सोऽयं त्वद्भगिनीभर्ता बन्धुदत्ताभिधः खलु ॥२९९॥
पल्लीशस्त्यक्तनिस्त्रिंशः द्राग् बन्धोः पदयोः पुरः ।
निपत्य क्षमयामास स्वमन्तोः परिकल्पनाम् ॥३००॥
स्वामिन्नज्ञानविज्ञानमुकुलीकृतचक्षुपा ।
आभीरेणेव माणिक्यं नोपालक्षि मया भवान् ॥३०१॥
अतो दुर्बुद्धिधौरेये क्षम्यतां क्षम्यतां मयि ।
बभाषे भिल्लभर्त्तारं बन्धुर्बन्धुरवागथ ॥३०२॥
भद्र ! नो तव दोषोऽयमज्ञानवशवर्त्तिनः ।
नाज्ञानादपरं कष्टं पारतन्त्र्यादिवासुखम् ॥३०३॥
मन्तुमानपि जातोऽसि भूयिष्ठोत्कृष्टतुष्टिकृत् ।
कल्पवल्लीमिव प्राणवल्लभां यदमेलयः ॥३०४॥
किञ्च किं कर्म भवता प्रारेभे दुःसुनिष्ठुरम् ।
चण्डसेनोऽब्रवीदेतच्चण्डसेनोपयाचितम् ॥३०५॥
बन्धु. स्माह च पूज्यन्ते पुष्पाद्यैः खलु देवताः ।
न तु जीववधैः श्वभ्रपथदीप्रप्रदीपकैः ॥३०६॥
बन्धुदत्तोऽभिधत्ते स्म मार्गं पल्लीपतेः पुरः ।
अहिंसासूनृतास्तेयब्रह्माऽमूर्च्छैकलक्षणम् ॥३०७॥
भद्रास्मिन् पथि पथिकैर्निर्वाणपुरी गम्यते ।
अतोऽमुत्र हितायास्मिन् मार्गे स्थेयं त्वयाऽनिशम् ॥३०८॥
श्रुत्वेति वचनं बन्धोर्भिल्लाः पल्लीश्वरादयः ।
भेजिरे ते भद्रकत्वं फलं सत्सङ्गभूरुहः ॥३०९॥
दम्पत्योर्मेलनात् पूर्णसङ्करः शवरेश्वर. ।
अमुचद् बलये बद्धान् बन्धुदत्तगिरा नरान् ॥३१०॥
बन्धुदत्तोऽपि वीक्ष्यैनां स्वप्रियां प्रियदर्शनाम् ।
दैवानुकूलता स्वस्मिन्नमन्यत महामति. ॥३११॥
प्रोत्फुल्ललोचनं बन्धुदत्ताय प्रियदर्शना ।
पुत्रमादाय पाणिभ्यां मुदङ्कुरमिवार्पयत् ॥३१२॥
तमादाय सुतं बन्धुरुपालक्षयति स्म स. ।
स्वपत्न्यै मातुलं स्वञ्च साऽपि तं सत्रपाऽनमत् ॥३१३॥

शिवाभिर्वाग्भिरेतस्यै दत्त्वाशीःसूचकं वचः ।
धनः स्माह तस्य सूनोरद्य नाम विधीयताम् ॥३१४॥
प्राणत्राणाद् बान्धवानामानन्दायाङ्गजोऽजनि ।
बान्धवानन्दनामेति पितृभ्यामयमीरितः ॥३१५॥
नीत्वा वेश्मनि कृत्वा च सत्कारं स्नानभोजनैः ।
लोप्त्रं तद्भिल्लराड् बन्धुदत्तायाथ प्रदत्तवान् ॥३१६॥
दत्त्वा बन्धुः सुवर्णादि व्यसृजद् निजमातुलम् ।
युतो भिल्लैः सपल्लीशैः प्रतस्थे चात्मनः पुरीम् ॥३१७॥
प्रविश्य स्वपुरीं पौरवधूदत्तग्रामममालितः ।
बन्धूनामग्रतो बन्धुः स्वकोदन्तमचीकथत् ॥३१८॥
धर्ममाहात्म्यमाकर्ण्य बन्धुतो बन्धुबान्धवाः ।
चिन्तामणाविवासक्ता बभूवुर्धर्मकर्मणि ॥३१९॥
रत्नालङ्कारसत्कारैः कल्पितानल्पगौरवः ।
विसृष्टो बन्धुना पल्लीं पल्लीपालः प्रयातवान् ॥३२०॥
भेजुषो विषयान् बन्धोः प्रियदर्शनया समम् ।
द्वादशाब्दी व्यतीयाय सुकृतैः सफलीकृता ॥३२१॥
अथान्यदा शरत्काले नागपुर्यां जिनेश्वरः ।
श्रीपार्श्वः समवासार्षीद्दृपिभिः परिवारितः ॥३२२॥
प्रभोरागमनोदन्त प्रासरत् सकले पुरे ।
तादृशामागतेर्वार्ता यतः स्वैरविहारिणी ॥३२३॥
बन्धुदत्तोऽथ तीर्थेशागमवार्तामृतोक्षितः ।
रोमाञ्चितोऽभवद् मेघधारासिक्त इवाङ्घ्रिपः ॥३२४॥
ततोऽङ्गीकृतशृङ्गारो भृङ्गारो भावसम्पदाम् ।
प्रियापुत्रान्वितोऽचालीद् बन्धुर्नाथं विवन्दिषुः ॥३२५॥
नत्वा नाथं यथास्थानं निषण्णो निषपाठवयम् ।
चलचञ्चुरिवेन्दोर्भां वाचं वाचंयमेशितुः ॥३२६॥
देशनान्ते क्षितिन्यस्तमूर्धा मूर्धन्यमर्हताम् ।
अप्राक्षीद् बन्धुरात्मीयचरित्रं पूर्वजन्मन ॥३२७॥
दुःखाग्निदाहवार्वाहप्रवाहपरमेश्वर ।
कर्मणा केन पट्पत्नीमृतिदुःखमगामहम् ॥३२८॥
प्रियदर्शनावियोगो ममाभूत् केन कर्मणा ।
कर्मणा केन बद्धोऽहं पुन पल्लीपतेश्चरैः ॥३२९॥
अथो पाथोधरध्वनः प्रोवाच जगतां पतिः ।

जज्ञे शिखरसेनाख्यः शबरो वन्ध्यभूधरे ॥३३०॥
श्रीमतीति प्रिया तस्य च्छायेव सहगामिनी ।
गमयामासतुः कालमेतौ प्रीतिपरौ मिथः ॥३३१॥
क्रूरः शिखरसेनः स मृगया व्यसनी भ्रमन् ।
वने व्ययोजयत् क्रोडीमृगीभ्यः स्वस्वबालकान् ॥३३२॥
हिंस्रात्मा समवर्त्ती च पर्यटन्नटवीमसौ ।
निहत्य स्वापदान् भूरींस्तेषां शुम्भान्यखण्डयत् ॥३३३॥
अन्यदा दम्पती एतौ भ्रमन्तौ गिरिगह्वरे ।
सम्पश्यतः स्म निर्ग्रन्थसार्थे सार्थपथच्युतम् ॥३३४॥
भिल्लभर्त्ताऽभणद्भिक्षून् भ्रमतो भूभृदादिषु ।
यूयं किमर्थं भ्रमथ भिक्षवोऽथ बभाषिरे ॥३३५॥
स्पष्टं सार्थपरिभ्रष्टैरध्वाऽस्माभिर्न लभ्यते ।
श्रुत्वेति श्रीमती जीवो वल्लभं प्रत्यभाषत ॥३३६॥
आतिथ्यमतिथीशानां कृत्वा पुष्पफलादिभिः ।
पन्थानं दर्शयामीषां सुभगं सुभगाशय ! ॥३३७॥
साधवोऽभिदधुर्भिल्लं भद्र ! पुष्पफलादिकम् ।
प्रासुकं कल्पतेऽस्माकमात्तं भुक्तं च सर्वदा ॥३३८॥
शबरस्तादृशैः पुष्पफलैस्तान् प्रत्यलाभयत् ।
दर्शयामास साधूनामध्वानं च समीहितम् ॥३३९॥
लब्धाध्वानोऽथ भिल्लाय भिक्षवस्ते समादिशन् ।
धर्मं कृपामयं शुद्धं पुनः पञ्चनमस्क्रियाम् ॥३४०॥
पक्षे पक्षे चैकशोऽपि सावद्यं त्यज्यता त्वया ।
स्मरणीया महामन्त्रमुख्या चैषा नमस्कृतिः ॥३४१॥
तस्मिंश्च समये कश्चित् त्वयि स्याद् यद्यमर्षणः ।
मा तस्मिन्नपि कुप्येथा वेला सा ह्यतिदुर्लभा ॥३४२॥
तथेति प्रतिपद्यागाद् भिल्लः पल्लीं तथोक्तवान् ।
एनां नियममर्यादामात्मनः श्रीमतीपुरः ॥३४३॥
तथैव कुर्वतस्तस्यान्येद्युरेति स्म दुर्धरः ।
केसरी केसराच्छोटाटोपकम्पितभूधरः ॥३४४॥
तं वीक्ष्य श्रीमती भीता समागात्तुपवल्लभम् ।
मा भैषीरिति जल्पंश्च भिल्लश्चापमुपाददे ॥३४५॥
तदैव स्मारितः पत्न्या स्वकीयां नियमस्थितिम् ।
भिल्लः सोऽथ तथैवास्थाद् निश्चलो भित्तिचित्रवत् ॥३४६॥

ततस्तौ दम्पती क्रोधोद्धुरेण हरिणाऽरिणा ।
भक्षितौ नियमध्यानधवलौ मृतिमापतुः ॥३४७॥
ततो मृत्वा दम्पती तावेकपल्योपमस्थिती ।
अभूतां त्रिदशावाद्ये कल्पेऽनल्पप्रभाभरौ ॥३४८॥
इतोऽथ महाविदेहे चक्रपुर्यां महीशिता ।
जज्ञे कुरुमृगाङ्काख्यो द्विड्मृगाङ्कविधुंतुदः ॥३४९॥
निःसरन्तं कोशबिलाद्वीक्ष्य यत्खड्गपन्नगम् ।
शत्रूणां शान्तिमापन्नाः प्रतापा दीपका इव ॥३५०॥
इतः किरातजीवः स दिवश्च्युत्वाऽऽयुषः क्षये ।
सुतो बभूव शबरमृगाङ्काह्वोऽस्य भूभुजः ॥३५१॥
भिल्लीजीवो दिवश्च्युत्वा कुरुस्त्रीभ्रातुरङ्गजा ।
रम्या वसन्तसेनाख्याऽभूत् सुभूषणभूपतेः ॥३५२॥
ततस्तौ कल्पितानल्पकलाभ्यासौ सुमेधसौ ।
यौवनालङ्कृतौ कामरती इव विरेजतुः ॥३५३॥
तयो रूपं च रागं च ज्ञात्वाऽन्योन्यमनुत्तरम् ।
तयोरेव व्यधत्तां तत्पितरौ पाणिपीडनम् ॥३५४॥
पुत्रं कुरुमृगाङ्कोऽथ राजा राज्यधुरन्धरम् ।
राज्ये निधाय संजज्ञे परिव्राट् काननस्थितिः ॥३५५॥
पदं सम्प्राप्य शबरमृगाङ्कः पैतृकं ततः ।
स्वाः प्रजाः पालयामास पितेवात्यन्तवत्सलः ॥३५६॥
पत्न्यां वसन्तसेनायां सौभाग्याद्भुतसम्पदि ।
भूभर्ताऽभूद् विलीनात्मा महायोगीव निर्वृतौ ॥३५७॥
साऽपि सौभाग्यसम्भाराऽभिभूतामरमानिनी ।
विलासैः सुभगोल्लासैः प्राणेशं समरञ्जयत् ॥३५८॥
इतो भिल्लभवोद्भूतं कर्म तिर्यग्वियोजनात् ।
काले फलमिवामुष्य परिपाकमुपाययौ ॥३५९॥
कर्मणा तेन शबरमृगाङ्कः क्षोणिकामुकः ।
वेगादवद्यभाविन्या ददृशे दुरवस्थया ॥३६०॥
अथो जयपुरे जज्ञे वर्धनो वसुधाधनः ।
यद्दण्डः शत्रुदोर्दण्डपञ्जरे कुञ्जरायते ॥३६१॥
स बभूव क्रुधाऽऽक्रान्तो मृगाङ्कोपरि राहुवत् ।
अचीकथच्च शबरमृगाङ्कं स्वचरैरिति ॥३६२॥
अङ्गीकृत्य मदीयाज्ञां शत्रुशैलशिरोऽशनिम् ।

पत्नीं वसन्तसेनां च दत्त्वा राज्यं चिरं कुरु ॥३६३॥
न चेत् तदा मया सार्धं युद्धाय प्रगुणीभव ।
श्रुत्वेति प्रणधिप्रोक्तं मृगाङ्कस्तानतर्जयत् ॥३६४॥
वर्धनोऽथ निजैः सैन्यैः कम्पयन् पृथिवीतलम् ।
आगाच् चक्रपुरीं क्रोधाद् युद्धायोद्धुरमत्सरः ॥३६५॥
मृगाङ्कोऽपि समायाते वर्धने योधनेच्छया ।
निर्ययौ साहसी पुर्याः पृतनापूरपूरितः ॥३६६॥
राज्ञोर्जन्याजिरे जन्ये जायमाने तयोर्मिथः ।
क्षणेन वर्धनः प्रापदुत्कटोऽपि पराजयम् ॥३६७॥
ततः स्वं जीवमादाय वर्धनोऽगाद् निजं पुरम् ।
'मृगाङ्कोऽप्यायथौ पुर्यां जयश्रीकृतमङ्गलः ॥३६८॥
अथ कोऽपि पुनः क्रुद्धस्ततनामाऽवनीपति' ।
मृगाङ्केन समं युद्धं व्यधाद् योधैकधूर्वहः ॥३६९॥
हतः कोपाग्नितप्तेन तप्तेन समराजिरे ।
मृगाङ्को नरकं षष्ठं रौद्रध्यानवशादगात् ॥३७०॥
ततो वसन्तसेनाऽपि पीडिता पतिमृत्युना ।
सहसैव विवेशाऽऽशु कृशानावकृशैधसि ॥३७१॥
तस्योपरिकृतक्रोधा पतिप्राणनिबर्हणात् ।
पतिं सङ्गन्तुकामेव मृत्वा तत्रैव साऽप्यगात् ॥३७२॥
उद्धृत्य नरकादायुःक्षये तौ दम्पती इमौ ।
अभूतां पुष्करद्वीपे पुत्रः पुत्री च निःस्वयोः ॥३७३॥
परिणीतौ मिथः पूर्वजन्मप्रेमवशादिह ।
सुदुःस्थितौ गृहस्थार्हं मार्गं पालयतः स्म तौ ॥३७४॥
अन्यदा सदनद्वारे निषण्णौ दम्पती च तौ ।
भिक्षार्थं भ्रमतो भिक्षून् प्रैक्षेतां स्मितचक्षुषा ॥३७५॥
आहूय निजगेहान्तः स्वसम्पदनुसारतः ।
प्रत्यलाभयतां भिक्षून् भावतो भद्रकाशयौ ॥३७६॥
साधवस्तेऽन्नपानादि गृहीत्वोपाश्रये ययुः ।
चक्रतुस्तावपि प्रीतौ दानं दत्त्वाऽनुमोदनाम् ॥३७७॥
अन्येद्युर्बालचन्द्रायाः संयतिन्याः प्रतिश्रये ।
शृणुतः स्मार्हतं धर्मं दम्पती तौ प्रमोदतः ॥३७८॥
साध्व्या. समीपं श्राद्धार्हं धर्मं मुक्तिपुरीपथम् ।
कामकुम्भमिवादाय समाराधयतः स्म तौ ॥३७९॥

आराध्य निरतीचारमाचारं गृहचारिणाम् ।
अभूतां तौ ततो मृत्वा ब्रह्मकल्पे सुराबुभौ ॥३८०॥
विभवैरद्भुतान् भुङ्क्त्वा भोगान् देवभवोचितान् ।
ततश्च्युतौ युवामिभ्यकुलेऽभूतामिहैतकौ ॥३८१॥
यत् तिरश्चां तिरश्चीभ्यो विरहा विहितास्त्वया ।
तस्मिन् भिल्लभवे तत्ते कर्मोदेति स्म साम्प्रतम् ॥३८२॥
कर्मणा तेन षड् भार्या ऊढमात्रा मृतास्तव ।
वियोगश्चानया सार्धं भिल्लैस्त्वं च नियन्त्रितः ॥३८३॥
गाढाभिप्रायकाठिन्यकृतानां कर्मणामतः ।
पविपातादपि प्रोच्चैर्विपाकः खलु दुःसहः ॥३८४॥
आकर्ण्येति सुधाकारं सुधायाः स्वामिनो वचः ।
धिक् कुर्वन् प्राक्कृतं कर्म बन्धुदत्तोऽब्रवीदिति ॥३८५॥
'मादृशां मन्दभाग्यानां कुतस्ते दर्शनं विभो !? ।
किं स्यादपुण्यानां गेहाङ्गणे कल्पद्रुमोद्गमः ? ॥३८६॥
किं च पूर्वार्जितं पुण्यमगण्यं फलितं मम ।
येन त्वद्दर्शनं प्राप्तं दुष्प्रापं जन्मकोटिभिः ॥३८७॥
एवं संसारकान्तारावतारक्लेशविह्वलः ।
बन्धुरूचे जगद्बन्धुं व्रतादानमनाः पुनः ॥३८८॥
लोकेश ! केवलालोकालोकितत्रिजगत्स्थिते ! ।
आवामितः क्व यास्यावोऽवताराः कति चावयोः ? ॥३८९॥
स्पष्टगीः शिष्टकोटीरः पृष्टोऽभाषिष्ट बन्धुना ।
इतो मृत्वाऽष्टमे कल्पे युवां देवौ भविष्यथः ॥३९०॥
ततश्च्युत्वा विदेहे त्वं चक्रवर्ती भविष्यसि ।
प्रियाजीवोऽपि भावी त्वत्प्रिया तत्रापि जन्मनि ॥३९१॥
राज्यं संत्यज्य तत्रापि स्वीकृतव्रतसम्पदौ ।
युवां व्रजिष्यथः सिद्धिमनन्तज्ञानदर्शनैः ॥३९२॥
इति श्रुत्वाऽऽत्मभविष्यद्भवं भाव्यपुनर्भवम् ।
तुष्टोऽजनिष्ट शिष्टात्मा बन्धुर्विषयपराङ्मुखः ॥३९३॥
बान्धवानन्दपुत्राय दत्त्वा भारं स्ववेश्मनः ।
बन्धुदत्तः प्रभोः पार्श्वे प्राव्राजीत् प्रियया समम् ॥३९४॥
जनज्योत्स्नाप्रियज्योत्स्नापतेस्त्रिजगतां पते. ।
इत्यभूद् विहृतिर्विश्वविश्वोपकृतिकारिणी ॥३९५॥
विहारं कुर्वतो नेतुर्विश्वानुग्रहवाञ्छया ।

संजज्ञिरे सहस्राणि षोडश व्रतिनामिति ॥३९६॥
अष्टात्रिंशत् सहस्राणि श्रमणीनां महात्मनाम् ।
श्रावकाणां लक्षमेकं चतुःषष्टिसहस्रयुक् ॥३९७॥
नाथपादान्तिके प्राप्तधर्माणां सप्तविंशतिः ।
सहस्राणि त्रिलक्षं च श्राद्धीनां धर्मधीजुषाम् ॥३९८॥
चतुर्दशपूर्वभृतां सपञ्चाशत् शतत्रयम् ।
सार्धा सप्तशती विमलकेवलज्ञानशालिनाम् ॥३९९॥
देवानामिव देवर्द्धेः सर्वविस्तारकारिणाम् ।
लब्धवैक्रियलब्धीनामेकादश शतानि च ॥४००॥
पञ्चाक्षाणां ससंज्ञानां पर्याप्तानां मनोविदाम् ।
षट्शतानि सुबुद्धीनां मनःपर्यायधारिणाम् ॥४०१॥
शतानि सप्त विपुलमतीनां सार्धकानि च ।
वादलब्धिनिधानानां षट् शतानि च वादिनाम् ॥४०२॥
अनुत्तरविमानाप्तितुष्टानां शिष्टसम्पदाम् ।
शतानि द्वादशागामिभद्राणां भद्रचेतसाम् ॥४०३॥
इत्यसौ ज्ञानविज्ञानसम्पाद्भिः परिवारितः ।
परिवारः प्रभोरासीत् केवलज्ञानवासरात् ॥४०४॥
भानुमानिव भव्याब्जखण्डानि प्रतिबोधयन् ।
चिरकालमलञ्चक्रे श्रीपार्श्वः पृथिवीतलम् ॥४०५॥
अथो विज्ञाय निर्वाणक्षणमासन्नमात्मनः ।
अनुक्रमेण सम्मेताचलं प्रत्यचलत् प्रभुः ॥४०६॥
चाद्रिमोत्तुङ्गशृङ्गाग्रैः क्वचिद्भिन्ननभस्थलम् ।
क्वचिदुत्कटकूटानां कोटिभिः स्खलितोडुकम् ॥४०७॥
क्वचित् कूटाग्रजैः शष्पैः सन्तुष्टशशभृन्मृगम् ।
क्वचित् कूटैः सप्तसप्तिसप्तिप्रस्खलितभ्रमम् ॥४०८॥
क्वचिच्च दन्तिभिर्दन्तैरुत्खातखटिकाखनिम् ।
क्वचित् तालरसैर्मिल्लीभिल्लैः प्रारब्धपानकम् ॥४०९॥
क्वचिच्च किंनरद्वन्द्वध्वाननिध्वनितकन्दरम् ।
क्वचित् सिद्धवधूवृन्दैः प्रोन्मत्तैर्दत्तरासकम् ॥४१०॥
क्वचिन्नानाविधैरुच्चैस्तरैस्तरुभिराकुलम् ।
क्वचिद् द्राक्षादिवल्लीभिर्मण्डिताखण्डमण्डपम् ॥४११॥
क्वचित्तालरसोत्तालभिल्लीहल्लीसकाकुलम् ।
क्वचिच्च तापसश्रेणीसूत्रितप्रचुरोटजम् ॥४१२॥

अन्यैरपि जिनैः पादपद्मपांशुपवित्रितम् ।
सम्मेताद्रिं समेति स्म जिनः साधुभिरावृतः ॥४१३॥
( अष्टभिः कुलकम् )
कैवल्यालयनिःश्रेणिमिव सम्मेतपर्वतम् ।
तमारुरोहानशनं विधित्सुस्त्रिजगत्पतिः ॥४१४॥
तत्र निर्जन्तुभूभागेऽनशनं प्रशमीश्वरः ।
व्यधात् सार्धं त्रयस्त्रिंशन्निर्ग्रन्थैरैकमासिकम् ॥४१५॥
तदैव विदितस्वाम्यनशनाः कम्पितासनाः ।
सर्वेऽपि सपरीवारास्तत्राजग्मुर्विडौजसः ॥४१६॥
दीक्षापन्नाः पतद्बाष्पविन्दुभिः कृतकर्दमाः ।
तेऽथ नत्वा जगन्नाथं तस्थुः स्थाने यथोचिते ॥४१७॥
शुक्लाष्टम्यां नभोमासे विशाखायां स्थिते विधौ ।
क्रमेण प्रभुः शैलेशीमधिरोढुमना अभूत् ॥४१८॥
सूक्ष्मेतरौ वचश्चित्तयोगौ योगिपुरन्दरः ।
निरुद्धय निरुणद्धि स्म काययोगं कृशेतरम् ॥४१९॥
ततश्च निरुध्य सूक्ष्मौ योगौ वाक्चित्तलक्षणौ ।
रुरोध वपुषः सूक्ष्मं योगं त्रिजगदीश्वर ॥४२०॥
इति नाथो भवोन्माथकृतेऽनुक्रमतो व्यधात् ।
सूक्ष्मक्रियाभिधं शुक्लध्यानभेदं तृतीयकम् ॥४२१॥
अथोच्छिन्नक्रियं शुक्लध्यानभेदं तुरीयकम् ।
पञ्चह्रस्वाक्षरोच्चारामितकालमगात् प्रभुः ॥४२२॥
ततो देहत्रयोद्भूतसुखदुःखपरिच्युतः ।
सनातनाक्षयानन्तज्ञानदर्शनसंयुतः ॥४२३॥
पुरातनैरपि त्यक्तो भवोपग्राहिकर्मभिः ।
अनन्तवीर्यवलर्द्धिसमृद्धो निष्ठितार्थक. ॥४२४॥
एरण्डबीजवद् बन्धाभावादूर्ध्वगतिः क्षणात् ।
ऋजुमार्गेण लोकाग्रमलंचक्रे जगद्गुरुः ॥४२५॥ (त्रिभिर्विशेषक
भगवद्वत् त्रयस्त्रिंशदुत्तीर्णभवसागराः ।
साधवस्तेऽपि सिद्धार्थाः सिद्धिसौधमगुस्तदा ॥४२६॥
स्वामिनिर्वाणकल्याणमाहात्म्यात् क्षणिकं सुखम् ।
अजनिष्ट नारकाणां नित्यदुःखजुषामपि ॥४२७॥
वीक्ष्य सिद्धिगतं पार्श्वं पार्श्वपादाब्जषट्पदः ।
धूतधैर्यगुणो बाढमाचक्रन्द पुरन्दरः ॥४२८॥

पार्श्वं पार्श्वेति ब्रुवाणः कुर्वाणः परिदेवनम् ।
बाष्पिताक्षः सहस्राक्षो मूर्च्छितो न्यपतत् क्षितौ ॥४२९॥
लब्धसंज्ञश्च गीर्वाणग्रामणीर्गद्गदस्वरम् ।
स्मारं स्मारं जगन्नाथं विललापेति विह्वलः ॥४३०॥
हा ! नाथ ! नाथ ! संसारसरिन्नाथेऽत्र दुस्तरे ।
तारयिष्यति कः सत्त्वांस्त्वां विना सत्तरण्डकम् ? ॥४३१॥
व्याकुलीकृतनिःशेषलोकमालोकसङ्कुलम् ।
संहरिष्यति को ध्वान्तं त्वा जगच्चक्षुषं विना ? ॥४३२॥
सन्देहध्वान्तसन्दोहव्याप्ते भुवनमन्दिरे ।
विना त्वां दीपकं नाथं कः प्रकाशं विधास्यति ? ॥४३३॥
अद्यैषा त्रिजगल्लोकलोचनभ्रमरावली ।
क्व स्थास्यति निश्चलास्या विना त्वां सरसीरुहम् ? ॥४३४॥
स्वामिन्नस्तमिते लोकोद्योते प्रद्योतने त्वयि ।
भ्रमिष्यन्त्यधुना मिथ्यामतखद्योतपोतकाः ॥४३५॥
त्वद्विहारे महावाते निर्वाते वारिताऽशिवे ।
इतिकादम्बिनी लोकं प्रभविष्यति सम्प्रति ॥४३६॥
स्थास्यामि कस्य पुरतः कुड्मलीकृतपाणिकः ।
कस्याज्ञां च निधास्यामि दामेव निजमूर्धनि ॥४३७॥
एवं सशोकः स्वर्लोकनायकस्तीर्थनायकम् ।
वचोभिरभितुष्टाव परमैः प्रेमगर्भितैः ॥४३८॥
अथ स्वाम्यङ्गसंस्कारोपकरग्रहणाय सः ।
धृतधैर्यः सुराधीश आदिदेशाभियोगिकान् ॥४३९॥
नन्दनादिवनात् तेऽपि चन्दनादिकमञ्जसा ।
आनीय ढौकयामासुः पुरतो दिविपत्पतेः ॥४४०॥
चारुभिश्चन्दनैर्दारुखण्डैराखण्डलस्ततः ।
पूर्वस्यां कारयामास चितां वृत्तां विभोः कृते ॥४४१॥
चतुरस्रां दक्षिणस्यां दिशि स्वीयाभियोगिकैः ।
अकारयच्चितामन्यां श्रमणानां कृते हरिः ॥४४२॥
क्षीरनीरनिधेर्नीरैस्ततः शक्रः प्रभोर्वपुः ।
स्नपयामास नेत्राम्भःसंभाराद्द्विगुणीकृतैः ॥४४३॥
ततः स्वाम्यङ्गमभ्यर्च्य चारुभिश्चन्दनैर्द्रवैः ।
शक्रो व्यभूषयद् देवदूष्येण श्लक्ष्णवाससा ॥४४४॥
अलङ्कृत्य सुरस्वामी स्वाम्यङ्गं च विभूषणैः ।

पुष्पैरपूजयद् भूरिसौरभोद्गारहारिभिः ॥४४५॥
एवमेव मुमुक्षूणामन्येषां वपुषामपि ।
अन्येऽपि विदधुर्देवाः स्नानाद्यं साश्रुलोचनाः ॥४४६॥
सिञ्चन् बाष्पैः भुवः पीठं क्रन्दन् संक्रन्दनस्ततः ।
स्वच्छं निवेशयामास शिबिकायां विभोर्वपुः ॥४४७॥
हरिरुत्पाटयामास स्वामिनः शिबिकां स्वयम् ।
अन्येषां शिबिकामन्ये वहन्ति स्म दिवौकसः ॥४४८॥
शच्यादिकसुरस्त्रीषु गायन्तीषु विभोर्गुणान् ।
नृत्यं गीतं प्रकुर्वत्सु सर्वेषु च सुपर्वसु ॥४४९॥
बिभ्रत्सु केषु चित् प्रौढातपत्राणि प्रभूपरि ।
केचिच्चौद्वीजयत् सूच्चैश्चामरान् पार्श्वयोर्द्वयोः ॥४५०॥
संप्लुष्यागरुकर्पूरपूरधूमालिधूसरान् ।
दधत्सु केषु चिद्रम्यधूपभृङ्गारकान् पुरः ॥४५१॥
सृजत्सु केषुचित् पाणितलाभ्यां तालकौतुकम् ।
केषुचिद् वाद्यसन्दोहान् वादयत्सु मुहुर्मुहुः ॥४५२॥
कुर्वत्सु केषु चिद् गीतगानमालापमञ्जुलम् ।
पविमुल्लालयत्सूच्चैः केषु चित् पुरतः प्रभोः ॥४५३॥
वर्षत्सु केषु चित् पुष्पधोरणीं गन्धधारिणीम् ।
तन्वत्सु केषु चिद् वासोवृष्टिं व्याप्तदिगन्तराम् ॥४५४॥
एवं देवेषु सर्वेषु प्रोद्भूताद्भुतसक्तिषु ।
स्वामिनिर्वाणकल्याणोत्सवं कुर्वत्स्वतुच्छकम् ॥४५५॥
स्थाने स्थाने च तिष्ठन्तो नृत्यन्तश्च क्षणे क्षणे ।
शक्रः सुराश्च शिबिकां नयन्ति स्म चितान्तिकम् ॥४५६॥

(अष्टभिः कुलकम्)

ततः प्राचीपतिः प्राचीचितान्तश्चन्दनार्चितम् ।
चिक्षेप स्वामिनः कायं पातकैः सममात्मनः ॥४५७॥
अपरेऽपि सुपर्वाणः शेषाणामनगारिणाम् ।
वपूंषि दक्षिणाशायाश्चितिकायां निचिक्षिपुः ॥४५८॥
वह्नौ वह्निकुमारेन्द्रैः क्षिप्रं निक्षिप्ते चितयोस्तयोः ।
तद्धनं पवनं प्रादुष्प्रचक्रु पवनाः सुराः ॥४५९॥
सद्यः कर्पूरकस्तूरीकाकतुण्डादिभूरिशः ।
चिक्षिपे प्राज्यमाज्यं च परैरपि सुपर्वभिः ॥४६०॥
उभे तच्चितयोर्ज्वाले उच्छलन्त्यौ नभः प्रति ।

व्यभातां सुचिके रागद्वेषयोर्दग्धयोरिव ॥४६१॥
प्लुष्टेष्वस्थ्यातिरिक्तेषु धातुपिण्डेषु वह्निना ।
चितां व्यध्यापयन् मेघकुमाराः क्षीरवारिभिः ॥४६२॥
अथापसव्ये ऊर्ध्वाधोदंष्ट्रे त्रिजगदीशितुः ।
आददाते सुधर्मेन्द्रचमरेन्द्रौ मणी यथा ॥४६३॥
उपर्यधः स्थिते चात्त वामे वामेयदंष्ट्रिके ।
ईशानेन्द्रबलीन्द्राभ्यां दन्ताश्चान्यैः सुपर्वभिः ॥४६४॥
अस्थि निजगृहुः क्ष्मापा भस्माद्यं चापरे नराः ।
शोकक्लेशकलिध्वंसक्षमं दंष्ट्रादि यद्विभोः ॥४६५॥
अथ नाथचितास्थाने स्तूपं रत्नमयं हरिः ।
व्यधाच्चान्यचितास्थाने सुपर्वाणः परे व्यधुः ॥४६६॥
त्र्यशीत्याऽब्दसहस्राणां सार्धसप्तशतीजुषा ।
श्रीनेमिनिर्वृतेः पार्श्वनिर्वृतिः समजायत ॥४६७॥
इत्यात्मबोधिरत्नेन जन्मपत्रीमिवाद्भुताम्।
प्रशस्तिमलिखत् तत्र स्तूपे वज्रेण वज्रभृत् ॥४६८॥ (युग्मम्)
द्वीपे नन्दीश्वरेऽष्टाहमहिमानमनेकधा ।
कृत्वा निजं निजं स्थानं जग्मुः सेन्द्राः सुराः समे ॥४६९॥
ललितवर्णचमत्कृतिकारिणी लसदलंकृतिधोरणीधारिणी ।
भवतु पार्श्वकथा सुकुमारिका विबुधवृन्दकरग्रहणोचिता ॥४७०॥
श्रेय श्रीश्रयणं श्रयामि विनमद्देवेन्द्रमालामिल-
त्प्रोन्मीलत्कुसुमालिमालितपदं संपत्पदं तं जिनम् ।
यस्य स्फारफणेषु सप्तमणयः प्रोद्दीप्रदीपाङ्कुराऽऽ-
कारान् सङ्कुलयन्ति सप्तभुवनवासप्रकाशश्रिये ॥४७१॥
अष्टौ निष्ठुरकर्ममर्मकरणान् क्रूरान् स्वकर्मद्विपो
जेतुं यो युगपद् बभूव भगवान् स्पष्टाष्टमूर्तिप्रथः ।
मूर्द्धोद्भासिफणीन्द्रसत्फणमणिश्रेण्यां समं बिम्बितः
पार्श्वोऽव्यात् तमसस्तमालफलिनीनीलोत्पलश्यामलः ॥४७२॥
दशभवविभवैकस्फारविस्तारतारं
व्यरचि चरितमेतद् यद् मया पार्श्वभर्तुः ।
व्रजतु विबुधविधानां कण्ठपीठेषु शश्वत्
कमलविजयरम्यं दामशीलं सलीलम् ॥४७३॥
नैवाहंकृतये न कोविदकुलालङ्कारतालब्धये
नो वा काव्यसनाथतापिपरिपश्चेतश्चमत्कृन्मुदे ।

यच्चक्रे चरितं चमत्कृतकृति श्रीपार्श्वनेतुर्मया ।
किन्त्वात्मानमनन्तनिर्वृतिमयं नेतुं पदं निर्वृतेः ॥४७४॥
विहारहारिप्रतिबोधसिद्धिसौधाधिरोहप्रतिबन्धशुद्धः ।
श्रीपार्श्वभर्तुश्चरितेऽत्र सर्गः षष्ठः समाप्तिं समीयाय रम्यः ॥४७५॥

इतिश्रीतपागच्छाधिराजभट्टारकश्रीसार्वभौमश्रीहीरविजयसूरीश्व-
रश्रीविजयसेनसूरीश्वरराज्ये समस्तसुविहितावतंसपण्डित-
कोटीकोटीरहीरपं० श्रीकमलविजयगणिशिष्यभुजिष्य-
ग० हेमविजयगणिविरचिते श्रीपार्श्वनाथ-
चरित्रे षष्ठः सर्गः सं०

## इति श्रीपार्श्वनाथचरित्रं समाप्तम् ।

# अथ प्रशस्तिः

पायात् कैरवकुन्दमौक्तिककलावत्स्फूर्त्तिकीर्तिद्युति-
क्षीरक्षालितदिक् स वो गणपतिः श्रीमान् सुधर्माभिधः ।
गोभिर्बोधितविश्वहृत्सरसिजः श्रीवीरपट्टोदय-
क्ष्माभृत्शृङ्गमभङ्गभाः कमलिनीभर्त्तेव योऽभूषयत् ॥१॥
आसीत् तस्य परंपराकुमुदिनीचन्द्रातपश्चित्तभू-
दर्पध्वंसनचन्द्रभृद् भुवि जगच्चन्द्राभिधः सूरिराड् ।
प्रापत् बाणवसुद्वयोडुपमितेवर्षे १२८५ तपोभिस्तपे-
त्याख्यार्तिं त्रिजगज्जनश्रुतिसुखां यो द्रम्मीर्भूरिभिः ॥२॥
अनूचानेष्वद्वगुणगणमणीनीरनिधिषु
प्रभूतेष्वद्भूतेष्वनुपमतदीयक्रमपथे ।
अभङ्गश्रीरङ्गीकृतरुचिरचारित्रकमला
बभूवुः सूरीशा शमदमभृदानन्दविमलाः ॥३॥
नेत्रवाग्निषुहिमांशुमितेऽब्दे१५८२यः क्रियां सकलसत्त्वहितेच्छु ।
कर्दमादिव मणिं श्लथमार्गादुद्दधार धरणीधरणीधरः ॥४॥
इह वय.कुमतद्विपकेसरी भवपयोधिपतज्जनुमत्तरी ।
कुमदकर्दममग्नममग्नधीः श्लथपथे जनमुद्धृतवान् गुरुः ॥५॥
तत्पट्टसत्करटिकुम्भविभूषणैक-
सिन्दूरपूरसदृशोऽसदृशो गुणौघैः ।
जज्ञे जगत्कुमुदकोशविकाशचन्द्रो
निस्तन्द्रधीर्विजयदानमुनीन्द्रचन्द्रः ॥६॥
तत्पट्टोदयशैलमौलितिलको गोभिर्वितन्वन् जन-

स्वान्ताम्भोजविनिद्रतां रविरिवाभातीह यः सद्रुचिः ।
कुर्वन्नात्मविहारहारनिकरैः शोभां ककुब्भुवां ।
स श्रीमान् समरहीरहीरविजयो जीयाच्चिरं सूरिराट् ॥७॥
भूपालभालमणिकोटिविघट्टितैत-
त्पादारविन्दमुकुलैकविलासशालिः ।
निःशेषसाधुजनचित्तसरोविहारी
जीयाच्च् चिरं विजयसेनमुनीशहंसः ॥ ८ ॥
सुविहितकृतशंसः सन्मनःपद्महंसः
समजनि मुनिमार्गे यः सदाऽऽसक्तचेताः ।
अमरविजयविज्ञाहर्मणिस्तद्गुणान्त-
र्मुकुलितकुमुदालिर्दीप्यते दीप्तिमाली ॥९॥
श्रीमान् जीयात् सुचिरमवनीं पावयन् पद्रजोभि-
स्तच्छिष्यः श्रीकमलविजयाह्वानविद्वद्वरेण्यः ।
व्योम्नेवोद्यद्दिवसमणिना येन भाति स्फुरद्भि-
र्गोसन्दोहैर्निहततमसा श्रीमदोकेशवंशः ॥१०॥
उत्करैरिव सितद्युतिभासां स्फाति ( यात ? ) मकराकरनीरम् ।
विश्वविश्वजनतैति समृद्धैर्वृद्धिमिद्धतमयद्वचनौघैः ॥११॥
शशिनि राहुभयं च रसातले भुजगहग् जलधौ पुनरौर्वभीः ।
इति च यस्य सुधा वसुधामतं श्रितवती रसनाभिपतो मुखम् ॥१२॥
तस्याणुके निखिलशिष्यभुजिष्यरेखा
यस्मिन् समस्ति गणितेव विशारदेन्दौ ।
श्रीपार्श्वनाथचरितं रचयांचकार
हर्षेण हेमविजयः शिवलक्ष्मिकांक्षी ॥१३॥
दृक्-कृशानु-रस-सोममितेऽब्दे १६३२ शक्रमन्त्रिणि दिने ह्यसंज्ञे ।
हस्तभे च बहुलेतरपक्षे फाल्गुनस्य चरितं व्यरचीदम् ॥१४॥
अनुष्टुभां सहस्राणि त्रीणि वर्णाश्चतुर्दश ।
षष्टियुक्तं शतं चैकं सर्वसंख्याऽत्रवाङ्मये ३१६०। अ० १४ ॥१५॥
व्योमद्विरेफ उडुवृन्दपृषत्सुहंसः
प्रोत्तुङ्गकन्दकलितो भुवनान्तरस्थः ।
यावज्जयत्ययमुदारसुमेरुपद्म-
स्तावच्चिरं जयति वाङ्मयरत्नमेतत् ॥१६॥

प्रशस्तिकाऽसौ समाप्तेति भद्रं कल्याणमस्तु ।

# अशुद्धिशुद्धिपत्रम् ।

| पृष्ठे, | पङ्क्तौ, | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| १ | २६ | -धामनि | -धाम्नि |
| ६ | ६ | ऽमरभू- | मरुभू- |
| ७ | २६ | -भूमि | -भूमिं |
| १० | ३३ | द्विप | द्विप |
| ११ | २ | निनन्दा- | निनिन्दा- |
| १६ | ३ | -फाकृति. | -फाकृति |
| १६ | १४ | त्रिराड्गु- | त्रिराड्गु- |
| १६ | ३३ | सख्यावान् | सख्यावान् |
| २० | ८ | युग्म | युग्मम् |
| २५ | ४ | -र्भावाना- | -र्भावना- |
| २५ | २४ | मरुमूर्तिर्द्विप- | मरुभूतेर्द्विप- |
| २७ | २ | चतुर्गतिर्वि- | चतुर्गतिवि- |
| २८ | ३५ | समामय | समावय |
| २९ | २१ | मागान् | भोगान् |
| २९ | २१ | धर्म्मद्र- | धर्म्मद्रु- |
| ३० | ६ | ह्लादिनी | ह्रादिनी |
| ३० | १२ | कङ्केल्लि- | कंङ्केल्लि- |
| ३३ | ७ | भूपो भूच- | भूपोऽभूत् रेच- |
| ३४ | १२ | भङ्कादक | भङ्कादङ्कं |
| ३४ | १५ | कृता इव | कृतामिव |
| ३६ | १० | -राढये | -राढ्ये |
| ३६ | १७ | -मीजा- | -बीजा- |
| ३६ | २६ | खङ्ग | खड्ग |
| ४२ | २० | -चकीर्षा | -चिकीर्षा |
| ४८ | २७ | निर्मी प्रतिमा | निर्मीप्रतिम |
| ५२ | ४ | दागुह्क | दागुन्दक |
| ५२ | १३ | विमरामास | विसरामास |
| ५२ | १६ | विषेशात् | विशेषात् |
| ५३ | १६ | ऽमुष्मिस्तात | ऽमुस्मिस्तात |
| ५४ | २ | प्रनीस्यन्ति | प्रलास्यन्ति |
| ५४ | २६ | द्द्युते | दिद्युते |
| ५६ | ५ | झङ्कारे | झङ्कारे |
| ५६ | २२ | -रितेन्दुमम् | -रिवेन्दुमाम् |
| ५७ | ३५ | फर्नुमा- | फर्नुमा- |
| ५८ | ३ | -वन्धौ | -यन्धौ |
| ६० | २२ | मूद्धी | मूर्द्धी |
| ६४ | ३४ | मुनिवपु- | मुनिपु- |
| ६६ | ३० | -र्भूयात्व- | र्भूयात् त्व- |
| ६८ | २९ | विभ्रत्य | विभ्रत्य |
| ६८ | ३२ | सलिले | सलिलै |
| ६९ | २७ | स्थिता- | स्थगिता- |
| ६९ | ३० | विनिवार- | निवार- |
| ७० | २ | वन्दितत- | वन्दिकृत- |
| ७० | ३४ | चित्कारै | चित्कारै |
| ७० | ३४ | हपामि- | हेपामि- |
| ७१ | ८ | तद्विरि- | तद्वैरि- |
| ७२ | २२ | -भ्रूकुटी- | -भ्रुकुटी- |
| ७२ | २४ | रेखा- | रेखी- |
| ७४ | ११ | सूत | स्यूत |
| ७४ | २४ | रथचोत्कार- | रथचित्कार- |
| ७७ | १८ | द्वारमैव | द्वारमेव |
| ७६ | २२ | क्षीणा | श्रीणा |
| ८१ | १४ | -वणिज्य- | -वाणिज्य- |
| ८२ | २४ | हत्वा- | ह्वा- |
| ८२ | २४ | धुन | धनै |
| ८२ | २८ | -मणिः | -मणौ |
| ८३ | २२ | -पुरीमानिरत्ना- | -पुरीमानि रत्ना- |
| ८३ | २६ | पट- | पट्- |
| ८७ | १२ | तीथङ्क- | तीर्थङ्क- |
| ८९ | १३ | ध्वोनै- | ध्वानै- |
| ९० | १६ | कौशाम्वी | कौशम्बी |
| ९४ | २० | व्यासृजत् | व्यसृजत् |
| ९४ | ३३ | कर्त्त | कर्तुं |
| ९६ | २८ | अङ्कूर | अङ्कुर |
| १०० | २५ | वल्पत्र- | वलपत्र- |
| १०१ | २३ | शाब्दादि- | शब्दादि- |
| १०२ | ६ | -वाएनै | -वाहनै |
| १०२ | ११ | विनिममे | विनिर्ममे |
| १०२ | १३ | -ध्रपद् | -ध्रपन् |
| १०२ | १६ | -मालनि | -मालिनि |

| पृष्ठ, | पङ्क्तौ, | अशुद्धम्। | शुद्धम्। | | | | |
|---|---|---|---|---|---|---|---|
| १०८ | १० | द्वौ स्थौ | -द्वौ स्था | १३२ | ३१ | कौतको- | कौतुको- |
| १०८ | १६ | केचित्वो- | केचिद् त्वो- | १३६ | २२ | -कामिंणी | -कर्मीणा |
| ११० | ३३ | उत्तरथा | उत्तस्थौ | १४० | १७ | कृर्यौ | कृयो |
| १११ | ४ | सवे | सर्वे | १४४ | २७ | पूर्वोपकार | पूर्वोपकार |
| ११२ | १० | द्वैत्य- | -द्वैत्य- | १५१ | १६ | पयाऽपि | पयोऽपि |
| ११६ | १२ | जान्हवी | जाह्नवी | १५४ | २८ | दत्वा | दत्त्वा |
| ११७ | २७ | दृशो | दृशौ | १५८ | १७ | दत्वा | दत्त्वा |
| ११८ | ७ | कीटान्ते | क्रीटान्ते | १५९ | २३ | -प्रस्थ मित | -प्रस्थमित |
| ११९ | १६ | पार्श्वप्रभो। | पार्श्वप्रभो। चिरम् | १६२ | २८ | म मैव | ममैव |
| ११९ | १८ | यद्विपये | यद्विपये | १६३ | १७ | मारव्याय | माख्याय |
| १२० | २० | वार्ष्यै. | वार्ष्ये | १६४ | ८ | काऽसौ | कोऽसौ |
| १२० | ३० | स्वामि- | स्वामि- | १६६ | ७ | तत्पर्यु- | तत्पर्यु- |
| १२१ | ३२ | उंद्वग- | उद्वेग- | १६८ | १४ | ज्ञानिन | ज्ञानिन |
| १२२ | १४ | श्वासोस्थूवा- | श्वासोच्छ्वा | १७६ | ३३ | वार्ता | वार्ता |
| १२४ | १५ | -चीत्कार- | -चित्कार- | १७७ | २२ | इत्वेति | इत्वेति |
| १२६ | २१ | पांश्वम | पार्श्वमा | १७८ | ११ | -वाच- | -वोच- |
| १२६ | २३ | नियुक्ता | नियुक्तो | १७९ | १८ | -प्रवी- | -र्भवी- |
| १२७ | २२ | -सौऽसौ | -सोऽसौ | १८० | २३ | -वादित्र- | -वादित्र- |
| | | | | १८० | ३४ | -ध्वन. | -ध्वान. |

## कुशलचन्द्रजैनवृहत्पुस्तकालयः।

आसीत् खल्वस्यां वाराणस्यां स्वविद्वत्वतेजस्तर्जितेतरदार्शनिकवृन्दः श्रीभेलूपुरसिंहपुर्यादितीर्थोद्धारकः काशीराजलब्धप्रतिष्ठो जैनविद्वान् कुशलचन्द्रसूरिः, आवश्यकं च तत्स्मरणार्थं किमपि संस्थानमिति विनिश्चित्य परिषज्जयेन सर्वतःप्राप्तप्रसिद्धिः श्रीदिग्मण्डलाचार्यः श्रीमान् बालचन्द्रसूरिः चिरंतनसुदुर्लभप्रतीनां मुद्रितग्रन्थानां च संग्राहिकां "कुशलचन्द्रजैनवृहत्पुस्तकालय" इत्याह्वां संस्थां स्थापितवान्, सा चेदानीं तत्प्रपौत्रशिष्यविद्यालङ्कारपदमण्डितपण्डितहीरालालेन तथाविधां प्रसिद्धिं प्रापिता येनेतरदर्शनावलम्बिनोऽपि मुक्तकण्ठं प्रशंसनपूर्वं मनोहृत्य पिबन्ति आर्हतवचःपीयूषसंदोहमिति ग्रन्थप्रकाशकसमित्यधिपतयः प्रकाशितान् ग्रन्थान् प्रेप्योन्नतिफलभाजो भवन्त्वित्याशास्ते।

कार्यवाहक—

रामघाट जैनमंदिर बनारस सिटी।

# विज्ञप्तिः ।

## 'मुनिश्रीमोहनलालजीजैनग्रन्थमाला'

अस्या ग्रन्थमालाया ये स्थायिग्राहका भवेयुस्तेभ्यो ग्रन्थमालातः प्रकटितानि विश्वानि पुस्तकान्यर्धमूल्येन मीलिष्यन्ति, तानि च यदा यदा प्रकटीभविष्यन्ति तदा तदा तैरवश्यमेव ग्रहणीयानीति स्थायिग्राहकत्वेन बुभूषुभिः सत्यंकारस्य ( डीपॉझीटनो ) रूप्यकमेकं प्रेष्य प्रथमत एव स्वनामोल्लेखः कार्यः, तच्च रूप्यकं वर्षत्रयानन्तरमेव मुमुक्षुभ्यो ग्राहकेभ्यो मीलिष्यति; ये च स्थायिग्राहकीभूता वर्षत्रयाभ्यन्तर एवापजिगमिषवो भविष्यन्ति तेषां, वर्षत्रयाभ्यन्तरे वी. पी. द्वारा प्रेषितपुस्तकप्रत्यावर्तकानां च सत्यङ्कारं द्रव्यं न प्रतिनिवृत्तं भविष्यति; ग्रन्थमालायां सप्तसंधानमहाकाव्य-चन्द्रकेवलिचरित्र-नैषधीयपादपूर्ति-लघुत्रिषष्टिशलाकापुरुषचरित्रादीनि सम्मतितर्क-दर्शनरत्नाकर-प्रभृतीनि छन्दोऽनुशासन-निर्णयप्रभाकरादीनि च पुस्तकानि प्राकट्यं नेष्यन्त इति ॥

पी. डी. पण्डित व्यवस्थापक

'मुनिश्रीमोहनलालजीजैनग्रन्थमाला'

रघुवीरसिंह प्रासाद, लाहौरी टोला

बनारस सिटी ।